अदण्ड्यान्[1] दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो[2] महदाप्नोति नरकं चैव गच्छति ॥ ७७

अपि[3] भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ।
नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥ ७८

यत्र[4] विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥ ७९

धर्मकर्मविहीनस्तु[5] ब्राह्मैर्लिङ्गैर्विवर्जितः ।
ब्रवीति ब्राह्मणोऽस्मीति तमाहुर्ब्राह्मणब्रुवम् ॥ ८०

शब्दाभिधानतत्त्वज्ञौ[6] गणनाकुशलौ शुची ।
नानालिपिज्ञौ[a] कर्तव्यौ राज्ञा गणकलेखकौ ॥ ८१

अकारणे[7 b] रक्षणे च [c]साक्ष्यर्थिप्रतिवादिनाम् ।
सभ्याधीनः सत्यवादी [d]कर्तव्यस्तु [e]स पूरुषः ॥ ८२

एतद्दशाङ्गकरणं[8 f] यस्यामध्यास्य[g] पार्थिवः ।
न्यायं[h] पश्येत्कृतमतिः सा [i]सभाऽध्वरसंमिता ॥ ८३

[1] वी. मि., p. 34.

[2] वी. मि., p. 34.

[3] वी. मि., p. 34.

[4] परा. मा., p. 29.

[5] व्य. मा., p. 280.

[6] परा. मा., p. 30; स्मृ. कल्प., p. 7; स्मृ. च.. III, p. 38; व्य. नि., p. 7; व्य. सौ., p. 20; [a] विदौ कार्यौ; वी. मि., p. 42; या. वी., p. 390; व्य. मा., p. 3; अख., p. 1.

[7] परा. मा., p. 31; (स्मृ. कल्प., p. 7; [e] सुपूरुषः); (स्मृ. च., III, p. 39; [b] आकारणे); (वी. मि., p. 42; [c] क्ष्यार्थि; [e] स्वपूरुषः); या. वी., p. 390; [d] शुद्धपूरुषः; व्य. म., p. 3; [e] स्वपूरुषः ।

[8] परा. मा., p. 31; स्मृ. च., III, p. 45; (रा. र., p. 21; [h] न्यायान्; [i] पुंससम्मता); व्य. नि., p. 7; [f] दशांशकरणं; (व्य. सौ., p. 18; [f] दशांशं कारणं; [h] न्यायान्); वी. मि., p. 41; [g] अध्यस्य.

एषां[1] मूर्धा नृपोऽङ्गानां मुखं चाधिकृतः* स्मृतः ।
बाहू[2] सभ्याः स्मृतिर्हस्तौ जङ्घे गणकलेखकौ ॥ ८४
हेमाग्न्यम्बुदृशौ[3 a] हृच पादौ [b]स्वपुरुषस्तथा ॥ ८५
हिरण्यमग्निमुदकं[4] धर्मशास्त्राणि चैव हि ।
तन्मध्ये स्थापयेद्राजा पुण्यानि च हितानि च ॥ ८६
आदित्यचन्द्रदेवादि दिक्पालान्[5] तत्र कल्पयेत् ।
नृपोऽधिकृतसभ्याश्च[6 c] स्मृतिर्गणकलेखकौ ।
हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश ॥ ८७
दशानामपि[7] चैतेषां कर्म प्रोक्तं पृथक् पृथक् ।
वक्ताऽध्यक्षो नृपः शास्ता [d]सभ्यः कार्यपरीक्षकः ॥ ८८

[1] परा. मा., p. 35; स्मृ. कल्प., p. 6; व्य. नि., p. 7; * कृतः. व्य. सौ., p. 17; * कृताः कृतः, द. वि., p. 12.

[2] वी. मि., p. 42; स्मृ. कल्प., p. 6; परा. मा., p. 35; व्य. नि., p. 7; व्य. सौ., p. 17; द. वि., p. 12.

[3] वी. मि,. p. 42; स्मृ. कल्प., p. 6; (परा. मा., p. 35; [a] म्ब्वन्न-पुरुषाः पादौ च पुरुषस्य च।); (व्य. नि., p. 7; [a] म्बुदृशौ तत्र पादौ स्वपुरुषस्तदा); (व्य. सौ., p. 17; [a] म्बुदृशां तूरु); द. वि., p. 12; [b] पुरुषास्तथा.

[4] स्मृ. च., III, p. 44.

[5] अख., p. 1.

[6] या. अप., p. 600; स्मृ. कल्प., p. 6; स्मृ. च., III, p. 44; [c] पाधि. परा. मा., p. 31; व्य. नि., p. 7; [c] पाधि; व्य. सा., p. 22; (व्य. सौ., p. 17; [c] पाधि); वी. मि., p. 41; द. वि., p. 12; [c] पाधि.

[7] या. अप., p. 600; स्मृ. कल्प., p. 6; [d] सभ्याः कार्यपरीक्षकाः; स्मृ. च., III, p. 45; परा. मा., p. 31; (व्य. सा., p. 22; and व्य. सौ., p. 17; स्मृ. कल्पवत्पाठः); वी. मि., p. 41; स्मृ. कल्पवत्पाठः; द. वि., p. 12; उत्तरार्धं परम्; (व्य. मा., p. 4; पूर्वार्धं न दृश्यते; [d] सभ्याः कार्यपरीक्षकाः। गणको गणयेदर्थं लिखेन्न्यायं च लेखकः ॥)

स्मृतिर्विनिर्णयं[1] ब्रूते [a]जयदानं [b]दमं तथा ।
शपथार्थे हिरण्याग्नी[c] अम्बु[d] तृषितजन्तुषु[e] ॥ ८९

गणको[2] गणयेदर्थं लिखेन्न्यायं च लेखकः ।
प्रत्यर्थिसभ्यानयनं[f] साक्षिणं[g] च स्वपूरुषः ॥ ९०

वाग्दण्डश्चैव[3 h] धिग्दण्डो [i]विप्राधीनौ तु तावुभौ ।
अर्थदण्डवधावुक्तौ राजायत्तावुभावपि ॥ ९१

राज्ञा[4 j] ये [k]विदिताः [l]सम्यक्कुलश्रेणिगणादयः ।
साहसन्यायवर्ज्यानि कुर्युः कार्याणि ते नृणाम् ॥ ९२

[1] या. अप., p. 600; स्मृ. कल्प., p. 6; [e] क्षुब्धयोः; (स्मृ. च., III, p. 45; [d] तृषितक्षुब्धयोर्जलम्); (परा. मा., p. 31; [b] धनं; [d] जलं तृषितलुब्धयोः); (व्य. नि., p. 7; [c] ग्नेर्हिर; [d] स्मृ. च., वत्पाठः); व्य. सा., p. 22; [a] जयं दानं धनं; [d] जलं तृषितझल्लयोः; व्य. सौ., p. 17; [e] लुब्धयोः; वी. मि., p. 42; [e] क्षुब्धयोः; द. वि., p. 12; [e] मुग्धयोः.

[2] या. अप. p. 600; स्मृ. कल्प., p. 6; स्मृ. च., III, p. 45; परा. मा., p. 32; व्य. नि., p. 7; [g] साक्षिणां; व्य. सौ., p. 22; [f] सभ्यसमये साक्षिणो ये तु पूरुषाः; (व्य. सौ., p. 17; व्य. नि., वत्पाठः); वी. मि., p. 42; द. वि., p. 12.

[3] परा. मा., p. 32; स्मृ. च., III, p. 45; [h] वाग्दण्डो धिग्दमश्चैव प्रायश्चित्तावुभौ स्मृतौ। वि. र., p. 630; [i] विप्रायत्तावुभौ स्मृतौ। (व्य. सा., p. 22; [i] विप्रार्थे नियतावुभौ।) स. वि., p. 68; [h] वाग्दण्डो धिग्दमश्चैव विप्रायत्तावुभौ स्मृतौ; द. वि., p. 63; स. वि. वत्पाठः।

[4] परा. मा., p. 32; स्मृ. कल्प., p. 7; स्मृ. च., III, p. 46; व्य. सा., p. 22; [k] विहिताः; [l] श्रेणी; स. वि., p. 68; [k] अभिहिताः; वी. मि., p. 40; [j] राज्ञो; द. वि., p. 15.

कुलश्रेणिगणाध्यक्षाः[1] प्रोक्ता[a] निर्णयकारकाः ।
विचार्य[b] श्रेणिभिः कार्यं कुलैर्यन्न विचारितम् ॥ ९३

गणैश्च[2] श्रेण्यविज्ञातं[c] गणाज्ञातं नियुक्तकैः ।
कुलादिभ्योऽधिकास्सभ्यास्तेभ्योऽध्यक्षस्स्मृतोऽधिकः[d] ॥ ९४

सर्वेषामधिको[3] राजा धर्मं यत्नेन निश्चितम् ।
उत्तमाधममध्यानां विवादानां विचारणात् ॥ ९५

उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः ।
अज्ञानतिमिरोपेतान्[4] सन्देहपटलान्वितान् ॥ ९६

निरामयान्[e] यः[f] कुरुते शास्त्राञ्जनशलाकया ।
इह[5] कीर्तिं[g] राजपूजां लभते [h]स्वर्गतिं च [i]सः ॥ ९७

[1] द. वि., p. 15; स्मृ. कल्प., p. 7;

[b] एषामग्रे निश्चितस्य प्रतिष्ठां तूत्तरोत्तरा ।
विचार्यं श्रेणिभिः कार्यं कुलैर्यन्न विचारितम् ॥

व्य. नि., pp. 175 and 244; [a] पुरदुर्गनिवासिनः । वाग्धिग्दमं परित्यागं प्रकुर्युः पापकर्मणाम् । वी. मि., p. 40; [a] प्रोक्तनिर्णयकारिणः । येषामग्रे निश्चितस्य प्रतिष्ठा तूत्तरोत्तरा ॥

[2] द. वि., p. 16; स्मृ. कल्प., p. 8; वी. मि., p. 40; [c] श्रेण्यविख्यातं गणाज्ञाननियुक्तकैः । [d] अध्यक्षोऽधिकः कृतः ।

[3] वी. मि., p. 40; स्मृ. कल्प., p. 8.

[4] परा. मा., p. 32; स्मृ. कल्प., p. 8; स्मृ. च., III, p. 47; व्य. मा., p. 282; [f] यान्; व्य. त., p. 198; प्रा. त., p. 657; ज्यो. त., p. 659; व्य. सा., p. 23; [e] निशामं यन्यः कुरुते शास्त्राहननशङ्कया । स. वि., p. 68.

[5] परा. मा, p. 32; स्मृ. कल्प., p. 8; [i] सः । तस्मात्संशयमूढानां प्रकर्तव्यो विनिर्णयः । स्मृ. च., III, p. 47; (व्य. मा., p. 282; [i] सः । तस्मात्संशयमूढानां कर्तव्यो हि विनिर्णयः ।); व्य. त., p. 198; [h] सद्गतिं च; [i] सः । तस्मात्संशयमूढानां कर्तव्यश्च विनिर्णयः ॥ ज्यो. त., p. 658; व्य. न., वत्पाठः पूर्वार्धमात्रञ्च । व्य. सा., p. 23; स. वि., p. 68; [g] कीर्तिमवाप्नोति ।

लोभद्वेषादिकं[1] त्यक्त्वा यः कुर्यात्कार्यनिर्णयम् ।
शास्त्रोदितेन[2] विधिना तस्य यज्ञफलं भवेत् ॥ ९८

अधर्मतः[3a] प्रवृत्तं तु नोपेक्षेरन् सभासदः ।
उपेक्षमाणास्ते[b] भूपा नरकं यान्त्यधोमुखाः ॥ ९९

न्यायमार्गादपेतं[4c] तु ज्ञात्वा [d]चित्तं महीपतेः ।
वक्तव्यं[e] त्वप्रियं[f] तत्र न सभ्यः किल्बिषी [g]ततः ॥ १००

सभ्येन[5] तावद्वक्तव्यं धर्मार्थसहितं वचः ।
शृणोति यदि नो राजा स्यात्तु सभ्यस्ततोऽनघः ॥ १०१

अनिर्णीतेषु[6] यद्येवं सम्भाषेत रहोऽर्थिना ।
प्राड्विवाकोऽपि दण्ड्यः स्यात्सभ्याश्चैव विशेषतः ॥ १०२

स्नेहाच्चाज्ञानतो[7] वाऽपि मोहाद्वा लोभतोऽपि वा ।
यत्र सभ्योऽन्यथावादी दण्ड्योऽसभ्यस्स्मृतो हि सः ॥ १०३

[1] द. वि., p. 18; स्मृ. कल्प., p. 8; व्य. नि., p. 7; व्य. मा., p. 282; व्य. सौ., p. 25.

[2] परा. मा., p. 32; स्मृ. च., III, p. 47; व्य. सा., p. 23; स. वि., p. 69.

[3] स. वि., p. 69; व्य. नि., p. 13; [b] णाः सततं; व्य. सा., p. 23; [a] इमं न्यायं प्रवृत्तं तु नोपेक्षेत सभासदः । [b] णः स नृपो नरकं यात्यधोमुखम् । Attributed to Kātyāyana in स्मृ. च., III, p. 47; परा. मा., III, p. 33; या. अप., p. 604; and राज. रत्नाकर., p. 25.

[4] स. वि., p. 69; व्य. नि., p. 13; [f] तत्प्रियं तत्र न सभ्यस्तत्र किल्बिषी । व्य. सा., p. 24; [c] नुपेतं; [d] कृत्यं; [e] कर्तव्यं; [g] भवेत्; an almost identical verse is attributed to Kātyāyana by स्मृ. च., III, p. 47, राज. रत्ना., p. 25, परा. मा., III, p. 33 and टोडरानन्द, व्य. सौ.

[5] व्य. सा., p. 24.

[6] व्य. सा., p. 25.

[7] स. वि., p. 69.

लेख्यं[1] यत्र न विद्येत न साक्षी न च भुक्तयः ।
प्रमाणानि न सन्त्येकं प्रमाणं तत्र पार्थिवः ॥ १०४

निश्चेतुं[2] ये न शक्याः स्युर्वादाः सन्दिग्धरूपिणः ।
तेषां नृपः प्रमाणं स्यात्स सर्वस्य प्रभुर्यतः ॥ १०५

व्यवहारान्[3] स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् । १०६

अन्यायवादिनः[4] सभ्यास्तथैवोत्कोचजीविनः[a,b] ।
विश्वस्ते[c] वञ्चकाश्चैव निर्वास्याः सर्व एव ते ॥ १०७

नियुक्तो[5] वाऽनियुक्तो वा [d]शास्त्रज्ञो वक्तुमर्हति ।
यत्तेन[6][e] सदसि प्रोक्तं स धर्मो नात्र संशयः ॥ १०८

पूर्वामुखस्तूपविशेद्राजा[7][f,g] सभ्या उदङ्मुखाः ।
गणकः पश्चिमास्यस्तु लेखको दक्षिणामुखः ॥ १०९

[1] स. वि., p. 72.

[2] स. वि., p. 72.

[3] स. वि., p. 72; व्य. सा., p. 25.

[4] परा. मा., pp. 34 and 439; स्मृ. कल्प., pp. 10 and 96; [c] विश्वस्तवञ्च; स्मृ. च., III, p. 50; स्मृ. कल्पवत्पाठः) व्य. नि., p. 14; [c] विश्वास or विश्वस्त; (वि. चि., p. 130; व्य. मातृ., p. 283; स्मृ. कल्पवत्पाठः) व्य. सा., p. 24; [c] विश्वस्य; (वी. मि., p. 492; या. वी., p. 393; स्मृ. कल्पवत्पाठः); (द. वि., pp. 105 and 338; [c] विस्रब्ध; 338; तमपुटे पूर्वार्धमात्रम्।); (व्य. माला., p. 12; [b] पजीविनः; [c] विश्वस्तव.) वि. से., p. 232; द. वि. वत्पाठः। अख., p. 3; [a] तथोक्तोचोप; [c] विश्वस्तव.

[5] या. अप., p. 604; स्मृ. कल्प., p. 8; द. वि., p. 339; [d] धर्मज्ञः; अख., p. 3; [d] धर्मज्ञः.

[6] या. अप., p. 604; स्मृ. कल्प., p. 8; अख., p. 3; [e] दैवीं वाचं स वदति यः शास्त्रमुपजीवति ।

[7] परा. मा., p. 35; स्मृ. च., III, p. 44; व्य. सा., p. 25; [f] च; व्य. म., p. 4; [g] पूर्वमुख.

यथा[1] यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम् ॥ ११०

धर्मशास्त्रार्थशास्त्राभ्यामविरोधेन[2] पार्थिवः ।
समीक्षमाणो निपुणं व्यवहारगतिं नयेत् ॥ १११

न्यायशास्त्रमतिक्रम्य[3] सभ्यैर्यत्र तु निश्चितम् ।
तत्र धर्मो हतो हन्ति सर्वानेव न संशयः ॥ ११२

धार्यं[4] मन्वादिकं शास्त्रं नार्थशास्त्रं कथञ्चन ।
द्वयोर्विरोधे कर्तव्यं धर्मशास्त्रोदितं वचः ॥ ११३

केवलं[5] शास्त्रमाश्रित्य न कर्तव्यो [a]विनिर्णयः ।
युक्तिहीने[b] विचारे तु धर्महानिः प्रजायते ॥ ११४

पूर्वाह्णे[6] तामधिष्ठाय [c]वृद्धामात्यानुजीविभिः ।
पश्येत्पुराणधर्मार्थशास्त्राणि[d] शृणुयात्तथा[e] ॥ ११५

[1] परा. मा., p. 37.

[2] परा. मा., p. 37.

[3] The same verse, with small variations, is ascribed to Kātyāyana by या., अप., p. 604, स्मृ. च., III, p. 47 and परा. मा., III, p. 32.

[4] स्मृ. कल्प., p. 4.

[5] या. अप., p. 599; स्मृ. कल्प., p. 4; [b] हीनविचारे; स्मृ. च., III, pp. 55 and 283; परा. मा., pp. 39 and 203; व्य. नि., p. 110; [a] अर्थनिर्णयः; (वि. चि., p. 59; स्मृ. कल्पवत्पाठः;) व्य. मा., pp. 282 and 294; (व्य. त., p. 199; स्मृ. त., p. 545; व्य. सौ., p. 7; स्मृ. कल्पवत्पाठः) वी. मि., pp. 18 and 119; [a] हि; [b] युक्तिहीनविचारे हि; व्य. म., p. 5; [a] हि.

[6] व्य. म., p. 4; स्मृ. कल्प., p. 11; रा. कल्प., p. 37; स्मृ. च., III, p. 60; व्य. सौ., p. 38; वी. राज., p. 158; [c] जीविभिः; [d] सुरान् स; [e] ततः.

चौरोऽचौरः[1a] साध्वसाधु जायते व्यवहारतः।
युक्तिं[2] विना विचारेण माण्डव्यश्चोरतां गतः॥ ११६

असत्याः[3] सत्यसदृशाः सत्याश्चासत्यसन्निभाः।
दृश्यन्ते भ्रान्तिजनकास्तस्माद्युक्त्या विचारयेत्॥ ११७

यज्ञे[4] सम्पूज्यते[b] विष्णुर्व्यवहारे महीपतिः।
जयी[c] तु यजमानोऽत्र जितः पशुरुदाहृतः॥ ११८

पूर्वपक्षोत्तरावाद्यं[5d] प्रतिज्ञा च हविः स्मृतः।
त्रयी शास्त्राणि सभ्यास्तु [e]ऋत्विजो दक्षिणा दमः॥ ११९

तथाचैवोपद्रष्टारौ[6] ज्ञेयौ गणकलेखकौ।
एषोऽध्वरसमः प्रोक्तो व्यवहारः समाहृतः॥ १२०

स्मृत्याचारव्यपेतेन मार्गेणाऽधर्षितः परैः।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्॥ १२१

पतितादिकृतश्चैव यश्च न प्रकृतिं गतः।
अस्वतन्त्रकृतश्चैव पूर्वपक्षो न सिध्यति॥ १२२

मत्तोन्मत्तार्तव्यसनिबालवृद्धप्रयोजितः।
असम्बन्धकृतश्चैव व्यवहारो न सिध्यति॥ १२३

[1] या. अप., p. 599; स्मृ. कल्प., p. 4; परा. मा., p. 39; वी. मि., p. 18; [a] चोरोऽचोरः साध्वसाधुः.

[2] या. अप., p. 599; स्मृ. कल्प., p. 4; परा. मा., p. 39; वी. मि., p. 18.

[3] परा. मा., p. 39; वी. मि., p. 18.

[4] व्य. मातृ., p. 284; व्य. नि., p. 7; [c] यजमानो जयी तत्र; व्य. माला., p. 21; [b] तु पूज्यते; [c] यजमानो जयी तत्र.

[5] व्य. मातृ., p. 284; व्य. नि., p. 7; [d] वाज्यं प्रज्ञा च हविरुच्यते; व्य. माला., p. 21; [d] वाज्यं; [e] ऋत्विजां.

[6] व्य. मा., p. 25; व्य. मा., p. 21.

गुरुशिष्यौ[1] पितापुत्रौ दम्पती स्वामिभृत्यकौ ।
एतेषां समवेतानां व्यवहारो न [a]सिध्यति ॥ १२४

एवं[2] परीक्षितं सभ्यैः पूर्वपक्षं तु लेखयेत् ।
अप्रसिद्धं पुरद्विष्टं विवादं न विचारयेत् ॥ १२५

## देशजातिधर्मास्तथैव पालनीयाः

प्रतिलोमप्रसूतानां[3] तथा दुर्गनिवासिनाम् ।
देशजातिकुलादीनां[4] ये [b]धर्मास्तत्प्रवर्तिताः ॥ १२६

तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ।
जनापरक्तिर्भवति[5] बलं कोशश्च नश्यति ॥ १२७

उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मध्यदेशे[6] कर्मकराः शिल्पिनश्च गवाशिनः ॥ १२८

मत्स्यादाश्च[7] नराः [c]पूर्वे व्यभिचाररताः स्त्रियः ।
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ॥ १२९

सहजाताः[d] प्रगृह्णन्ति भ्रातृभार्यामभर्तृकाम् ।
अनेन[8] कर्मणा नैते प्रायश्चित्तदमार्हकाः ॥ १३०

[1] व्य. मातृ., p. 285; स्मृ. कल्प., p. 13; [a] विद्यते; (व्य. सौ., p. 47; स्मृ. कल्पवत्पाठः); वी. मि., p. 46; या. वी., p. 394; व्य. मा., p. 26.

[2] स्मृ. कल्प., p. 13.

[3] व्य. सौ., p. 12; स्मृ. कल्प., p. 5.

[4] स्मृ. च., I, p. 25; स्मृ. कल्प., p. 5; वी. मि., p. 29; [b] प्राक् प्रवर्तिताः; (व्य. म., p. 5; वी. मि. वत्पाठः); स्मृ. मु. काल., p. 19.

[5] व्य. म., p. 5; स्मृ. कल्प., p. 5; वी. मि., p. 29.

[6] वी. मि., p. 29; स्मृ. कल्प., p. 5.

[7] स्मृ. च., p. 25; स्मृ. कल्प., p. 5; [d] खसजाताः; व्य. नि., p. 11; [d] खषजाः प्रतिगृह्णन्ति; वी. मि., p. 29; [c] सर्वे; [d] खशजाताः प्रगृह्यन्ति; व्य. म., p. 5; [d] सहजाताः इत्यर्धं न दृश्यते.

[8] स्मृ. कल्प., p. 5; व्य. नि., p. 11; वी. मि., p. 29; व्य. म., p. 5.

विहिताकरणान्नित्यं प्रतिषिद्धनिषेवणात् ।
भक्ताच्छादं प्रदायैषां शेषं गृह्णीत पार्थिवः ॥ १३१
(प्रतिलोमप्रसूतानां[1] तथा दुर्गनिवासिनाम् ।)
शास्त्रवद्यत्नतो[2] रक्ष्या सन्दिग्धौ साधनं तु सा ॥ १३२
तां दृष्ट्वा निर्णयं कुर्यात्प्राङ्निविष्टव्यवस्थया ।
सभा[3a] शुल्कोचितदमे [b]मासषाण्मासिके करे ॥ १३३
मर्यादा लेखिता कार्या नैगमाधिष्ठिता सदा ।
अर्थिनश्च[4c] वचः कार्यं वचः प्रत्यर्थिनस्तथा ।
परीक्ष्य पदमादद्यादन्यथा नरकं व्रजेत् ॥ १३४
एकस्य[5] बहुभिः सार्धं *स्त्रीभिः प्रेक्षकरैस्तथा ।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥ १३५

अनासेध्याः

सत्रोद्वाहोद्यतो[6d] रोगी शोकार्तोन्मत्तबालकाः ।
मत्तो[7e] वृद्धोऽनुयुक्तश्च[f] नृपकार्योद्यतो व्रती ॥ १३६
आसन्ने[8g] सैनिकः सङ्ख्ये कर्षको वापसङ्ग्रहे ।
विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च ॥ १३७

[1] द. वि., p. 260; स्मृ. कल्प., p. 5.
[2] व्य. सौ., p. 14; स्मृ. कल्प., p. 6.
[3] व्य. सौ., p. 14; स्मृ. कल्प., p. 6; [a] भाग; [b] समा.
[4] व्य. सौ., p. 43; स्मृ. कल्प., p. 12; [c] स्तद्वचः.
[5] व्य. सौ., p. 47; स्मृ. कल्प., p. 13; व्य. मा., p. 26;
* स्त्रीणाम् । या, मि., on II, 5 cites this verse as Nārada's.
[6] परा. मा., p. 49; स्मृ. कल्प., p. 14; [d] शास्त्रो. स्मृ. च., III, p. 69; व्य. सौ., p. 53; [d] शास्त्रो. वी. मि., p. 56; व्य. सौ. पाठः.
[7] परा. मा., p. 49; स्मृ. कल्प., p. 14; [e] मत्तोद्युक्तोऽभिवृद्धश्च; स्मृ. च., III, p. 69; [f] नियुक्तश्च; व्य. सौ., p. 53; [f] अभियुक्तश्च; वी. मि., p. 56; व्य. सौ. वत्पाठः.
[8] परा. मा., p. 49; स्मृ. कल्प., p. 14; स्मृ. च., III, p. 19; व्य. सौ., p. 53; [g] आसन्नः. वी. मि., p. 56.

अप्राप्तव्यवहारश्च[1] दूतो दानोन्मुखो व्रती ।
विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च ॥ १३८

वणिग्विक्रीतपण्यस्तु[2] सस्ये जाते कृषीवलः ।
सत्त्रोद्यताश्चैव[a] तथा दापनीयाः कृतक्रियाः ॥ १३९

मतिर्नोत्सहते[3] यत्र विवादं कर्तुमिच्छते ।
दातव्यस्तस्य कालः स्यादर्थिप्रत्यर्थिनोरपि ॥ १४०

यस्याभियोगं[4 b] कुरुते [c]तथ्येनाऽऽशङ्कयाऽपि वा ।
तमेवाऽऽनाययेद्राजा[d] मुद्रया पुरुषेण वा ॥ १४१

अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम्[5 e] ।
पूर्वोत्तरं [f, g]वदेद्बन्धुर्नियुक्तोऽन्योऽथवा नरः ॥ १४२

ऋत्विग्वादे[6] नियुक्तश्च समौ सम्परिकीर्तितौ ।
यज्ञे स्वाम्याप्नुयात्पुण्यं हानिं वादेऽथवा जयम् ॥ १४३

[1] स्मृ. कल्प., p. 14; व्य. मा., p. 29.

[2] परा. मा., p. 50; स्मृ. कल्प., p. 15; [a] शष्पोद्यताद्यास्तु; स्मृ. च., III, p. 70; व्य. सौ., p. 56; [a] शस्त्रोद्वाहोद्यताश्चैते पालनीयाः.

[3] व्य. सौ., p. 66.

[4] या. अप., p. 605; स्मृ. च., III, p. 72; परा. मा., p. 50; व्य. मा., p. 286; [d] चालयेत्. व्य. सा., p. 35; [c] सत्येनाशङ्कयाऽथवा; स. वि., p. 79; [b] योगे; [d] आकारयेत्. व्य. सौ., p. 48; वी. मि., p. 52; [c] तत्वेनाशङ्कयाऽथवा; [d] आह्वानयेत्; द. वि., p. 332; [d] आसादयेत्; व्य. मा., p. 31; [c] सत्येन.

[5] व्य. म., p. 7; स्मृ. कल्प., p. 20; स्मृ. च., III, p. 73; व्य. नि., p. 26; [f] यः स नियुक्तश्चेददोषभाक्. व्य. मातृ., p. 287; [g] अप्यथवा परः; व्य. सौ., p. 95; [e] जनो; वी. मि., p. 53; [g] योऽथवा; या. वी., p. 399; [f] तद्वदनियुक्तो; द. वि., p. 336.

[6] व्य. मातृ., p. 287; व्य. त., p. 200; वि. से., p. 97.

## आह्वानम्

आहूतो[1] यस्तु [a,b]नागच्छेद्दर्पाद्बन्धुबलान्वितः ।
अभियोगानुरूपेण[2 c] तस्य दण्डं प्रकल्पयेत् ॥ १४४

काले[3] कार्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥ १४५

एवं पृष्टः स यद्ब्रूयात्तत्सभ्यैः ब्राह्मणैः सह ।
विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् ॥ १४६

मुद्रां दद्याद्यथा पत्रं पुरुषं वा समादिशेत् ।
आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ॥ १४७

अकल्पबालस्थविरविषमस्थक्रियाकुलान्[4] ।
हीने[5] कर्मणि पञ्चाशन्मध्यमेषु शतावरः ।
गुरुकार्येषु दण्ड्यः स्यान्नित्यं पञ्चशतावरः ॥ १४८

परानीकहते[6] देशे दुर्भिक्षे व्याधिपीडिते ।
कुर्वीत पुनराह्वानं दण्डं न परिकल्पयेत् ॥ १४९

कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान्[d] ॥ १५०

[1] परा. मा., p. 51 ; व्य. मातृ., p. 286 ; [a] गच्छेद्दर्प ; व्य. सा., p. 36 ; स. वि., p. 81 ; व्य. सौ., p. 190 ; [a] साक्षी रोगविवर्जितः, व्य. म., p. 7 ; [b] कुला.

[2] परा. मा., p. 51 ; व्य. मा., p. 286 ; स. वि., p. 81 ; व्य. सौ., p. 190 ; [c] ऋणं दण्डं च दाप्यः स्यात्त्रिपक्षात्परतस्तु सः । व्य. मा., p. 7.

[3] व्य. मा., p. 24.

[4] या. अप., p. 606 ; वी. मि., p. 52 ; [d] पाती व्यसनी.

[5] व्य. सा., p. 36 ; व्य. मा., p. 25.

[6] व्य. सा., p. 36.

धर्मोद्यतानभ्युदये[1] पराधीनशठाकृतीन् ।
मत्तोन्मत्तप्रमत्तांश्च[a] भृत्यान्नाह्वाययेन्नृपः ॥ १५१

न[2] च[b] भ्राता न च पिता न पुत्रो न [c]नियोगकृत् ।
परार्थवादी[d] दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥ १५२

न[3] हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
सर्ववर्णोत्तमां कन्यां ताः ज्ञातिप्रभुकाः स्मृताः ॥ १५३

कालं[4] *देश (श्च ? श्व) विज्ञाय कार्याणां च बलाबलम् ।
अकल्पादीनपि शनैर्यानैराह्वापयेन्नृपः ॥ १५४

तदधीनकुटुम्बिन्यः[5] स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥ १५५

उभयोः[6] प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये । १५६

ज्ञात्वाऽभियोगं[7] येऽपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वापयेद्राजा[8] गुरुकार्येष्वकोपयन् ॥ १५७

[1] या. अप., p. 606; वी. मि., p. 52; [a] प्रमत्तार्त.

[2] या. अप., p. 606; व्य. मातृ., p. 288; [b] यो न भ्राता पिता वापि; [c] जितः. [d] वादी.

[3] वी. मि., p. 52; व्य. मा., p. 30.

* This is wrongly ascribed by Kane (*Kātyāyana*, p. 16) to Kātyāyana on the authority of *Vīramitrodaya*, which cites it as from Bṛhaspati (Calcutta edn., p. 52, Chowk. edn., p. 39). But, Mādhava (III, p. 57) following स्मृ. च., III, p. 74 gives it to कात्यायन.

[4] वी. मि., p. 53; व्य. मा., p. 31; * देशं कालं.

[5] वी. मि., p. 53; व्य. मा., p. 30.

[6] व्य. मा., p. 31.

[7] वी. मि., p. 53.

[8] वी. मि., p. 53.

वक्तव्येऽर्थे[1] न तिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥ १५८

स्थानासेधः[a] कालकृतः प्रवासात्कर्मणस्तथा ।
चतुर्विधः स्यादासेधः आसिद्धस्तं न लङ्घयेत् ॥ १५९

क्षेत्रारामगृहादीनि धनधान्यादिकं तथा ।
अन्यायवादिनां त्वेतान्यासेधव्यानि वादिनाम् ॥ १६०

आसेद्धा तु स्वमासेधं स्वयमेवोत्सृजेद्यदि ।
न तस्यातिक्रमाद्दोषो न च दण्डं प्रकल्पयेत् ॥ १६१

राज्ञे निवेदनादूर्ध्वं आसेद्धा नोत्सृजेत्स्वयम् ।
उत्सृजेच्चेद्दमो दाप्य आसिद्धश्च न लङ्घयेत् ॥ १६२

नदीसन्तारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धस्तु परासेधमुत्क्रामन्नापराध्नुयात् ॥ १६३

निवेष्टुकामो[b] रोगार्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथाऽन्येन राजकार्योद्यतस्तथा ॥ १६४

गवां प्रचारे गोपालाः सस्यारम्भे कृषीवलाः ।
शिल्पिनश्चापि तत्काले आयुधीयाश्च विग्रहे ॥ १६५

वृक्षं पर्वतमारूढा हस्त्यश्वरथनौस्थिताः ।
विषमस्थाश्च ते सर्वे नासेध्याः कार्यसाधकैः ॥ १६६

यस्त्विन्द्रियनिरोधेनाप्याहारोच्छ्वसनादिभिः[c] ।
आसेधयेदनासेधैः स दण्ड्यो न त्वतिक्रमी ॥ १६७

आसेधयोग्य[2] आसेधमुत्क्रामन् दण्डमर्हति ।
आसेधयंस्तु नासेध्यं राज्ञा शास्य इति स्थितिः ॥ १६८

[1] व्य. मा., p. 27; [a] p. 28; [b] p. 29; [c] p. 30.
[2] या. अप., p. 606.

आगतानां[1 a] विवदतामसकृद्वादिनां[b] नृपः ।
वादान् [c]पश्येन्नात्मकृतान्न चाध्यक्षनिवेदितान् ॥ १६९

वादि-प्रतिवादिनोरुक्तिक्रमः

पीडितः[2] स्वयमायातः [d]शस्त्रेणार्थी यदा भवेत् ।
प्राड्विवाकस्तु तं[e] पृच्छेत्पुरुषो वा शनैः शनैः ॥ १७०

योऽदत्तव्यवहारस्त्वादनियुक्तः[3] प्रवर्तते ।
वचनं तस्य न ग्राह्यं लिखितप्रेषिताहृते ॥ १७१

अहंपूर्विकया[4] यातावर्थिप्रत्यर्थिनौ[f] यदा[g] ।
वादो वर्णानुपूर्व्येण[h] ग्राह्यः पीडामवेक्ष्य [i]वा ॥ १७२

उन्मत्तमत्तनिर्धूता[5] महापातकदूषिताः[j] ।
जडातिवृद्धबालाश्च विज्ञेयास्तु[k] निरुत्तराः ॥ १७३

[1] परा. मा., p. 52; स्मृ. कल्प., p. 12; [a] आगमानां; [b] वादिनः; [c] दात्मकृतान्न वा; व्य. मा., p. 286; व्य. सौ., p. 40; [a] आगमानां.

[2] परा. मा., p. 52; स्मृ. कल्प., p. 12; व्य. मातृ., p. 286; [d] शालीनोऽथ; [e] पृच्छेत; व्य. सौ., p. 41; [d] शालीनोऽर्थी.

[3] व्य. मातृ., p. 288.

[4] परा. मा., p. 59; स्मृ. कल्प., p. 15; [i] च; स्मृ. च., III, p. 80; [f] तावत्; व्य. नि., p. 30; स्मृ. च. वत्पाठः, व्य. मातृ., p. 290; व्य. त., p. 200; स. वि., p. 83; स्मृ. च. वत्पाठः, व्य. सौ., p. 59; वी. मि., p. 60; [g] तथा; [h] पूर्वेण; [i] च; व्य. म., p. 7.

[5] या. अप., p. 615; स्मृ. कल्प., p. 20; [k] स्ते; परा. मा., p. 68; व्य. सौ., p. 88; [j] महोत्पातकदूषिताः । जडापविद्धा बालाश्च विज्ञेयास्ते.

पक्षः[1] प्रोक्तस्त्वनादेयो वादी चानुत्तरस्तथा ।
यादृग्वादी[2] यश्च पक्षो ग्राह्यस्तत्कथयाम्यहम् ॥ १७४

पीडातिशयमाश्रित्य[3] यद्ब्रवीति विवक्षितम् ।
स्वार्थसिद्धिपरो वादी पूर्वपक्षः स उच्यते ॥ १७५

[1] परा. मा., p. 68.

[2] परा. मा., p. 68.

[3] परा. मा., p. 68; व्य. मातृ., p. 291.

२

## ॥ चतुष्पाद्व्यवहारोपक्रमः ॥

भाषापादोत्तरपादौ[1] क्रियापादस्तथैव च ।
प्रत्याकलितपादश्च व्यवहारश्चतुष्पदः ॥ १

मिथ्यासम्प्रतिपत्तिश्च[2] प्रत्यवस्कन्दनं तथा ।
प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः शास्त्रवेदिभिः ॥ २

मिथ्यायां[3 a] च[b] चतुष्पादः प्रत्यवस्कन्दने तथा ।
प्राङ्न्याये[c] च [d]स विज्ञेयो द्विपात्सम्प्रतिपत्तिषु ॥ ३

उपायै[4 e]श्चोद्यमानस्तु[f] न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ॥ ४

### पक्षलक्षणम्

उपस्थिते[5] ततस्तस्मिन् वादी पक्षं प्रकल्पयेत् ।
निरवद्यं [g]सप्रतिज्ञं प्रमाणागमसंयुतम् ॥ ५

[1] वी. मि., p. 59.

[2] वि. च., p. 115 ; स्मृ. कल्प., p. 18 ; व्य. सौ., p. 75.

[3] वि. च., p. 116 ; (स्मृ. कल्प., p. 12 ; [a] थ्योक्तौ तु चतुष्पाच्च प्रत्यवस्कन्दनं तथा ।) ; व्य. नि., p. 49 ; [a] थ्योक्तौ च चतुष्पात्स्यात् ; व्य. त., p. 203 ; व्य. नि. वत्पाठः ; व्य. सौ., p. 40 ; [a] थ्योक्तौ तु चतुर्थः स्यात् ; वी. मि., p. 59 ; [b] चतुरः पादाः ; [d] स तु ज्ञेयः ; व्य. म., p. 12 ; [a] थ्योत्तरे ; [c] व्यवहारस्तु.

[4] वि. च., p. 120 ; स्मृ. कल्प., p. 20 ; या. अप., p. 615 ; [e] उभयैः ; [f] चोद्यमानेऽपि ; व्य. नि., p. 47 ; व्य. सौ., p. 87 ; वी. मि., p. 74 ; [e] उभयैः ; अख., p. 15 ; [f] मानेऽपि. व्य. मा., p. 46.

[5] परा. मा., p. 61 ; स्मृ. च., III, p. 80 ; पूर्वार्धं परम् ; स्मृ. च., III, p. 81 ; उत्तरार्धं परम् ; व्य. मातृ., p. 294 ; [g] सत्प्रतिज्ञम् ; व्य. मा., p. 33 ; उत्तरार्धं परम् ।

देशस्थानसमामासपक्षाहोनामजातिभिः[1][a] ।
द्रव्यसंख्योदयं पीडां क्षमालिङ्गं च लेखयेत् ॥ ६

यं[2] चार्थमभियुञ्जीत न तं विप्रकृतिं नयेत् ।
न च पक्षान्तरं गच्छेत् गच्छन् पूर्वात्स हीयते ॥ ७

पक्षदोषाः

अप्रसिद्धं[3] सदोषं[4] च निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा [5]पक्षं राजा विवर्जयेत् ॥ ८

न[6] केनचित्कृतो[b] यस्तु सोऽप्रसिद्ध [c]उदाहृतः ।
अन्यार्थः[d] स्वार्थहीनश्च सदोषः परिकीर्तितः ॥ ९

स्वल्पापराधः[7][e] स्वल्पार्थो निरर्थक [f]इति स्मृतः ।
कार्यबाधाविहीनस्तु विज्ञेयो निष्प्रयोजनः ॥ १०

कुसीदाद्यैः[8] पदैर्हीनो [g]व्यवहारो निरर्थकः ।
वाक्पारुष्यादिभिश्चैव विज्ञेयो निष्प्रयोजनः ॥ ११

[1] परा. मा., p. 61 ; व्य. मातृ., p. 294 ; [a] अहर्जातिनाम च । द्रव्यं ; व्य. मा., p. 33 ; उत्तरार्धं परम्.

[2] व्य. मातृ., p. 292 ; या. वी., p. 400.

[3] व्य. मातृ., p. 295 ; स्मृ. कल्प., p. 12 ; या. वी., p. 400 ; व्य. मा., p. 26.

[4] निराबाधं ; व्य. मा., p. 26.

[5] पक्षाभासं ; व्य. मा., p. 26.

[6] व्य. मातृ., p. 295 ; स्मृ. कल्प., p. 12 ; स्मृ. च., III, p. 85 ; पूर्वार्धं परं ; स. वि., p. 87 ; [b] स्मृतो ; [c] इति स्मृतः ; पूर्वार्धं परम् । व्य. सौ., p. 44 ; [d] अल्पार्थश्चार्थहीनश्च ; वी. मि., p. 66 ; पूर्वार्धं परम् ।

[7] स्मृ. च., III, p. 85 ; स्मृ. कल्प., p. 12 ; [e] अल्पापराधः, व्य. मातृ., p. 296 ; [e] अल्पापराधः ; [f] उदाहृतः । स. वि., p. 87 ; व्य. सौ., p. 45 ; अल्पापराधश्चाल्पार्थः, वी. मि., p. 66 ; उत्तरार्धं परम् ।

[8] स्मृ. च., III, p. 85 ; स्मृ. कल्प., p. 12 ; व्य. मातृ., p. 296 ; व्य. सौ., p. 45 ; वी. मि., p. 67 ; [g] व्यवहारनिरर्थकः.

ममानेन[1] प्रदातव्यं शशशृङ्गकृतं धनुः ।
असम्भाव्यमसाध्यं [a]तं पक्षमाहुर्मनीषिणः ॥ १२

यस्मिन्नावेदिते[2] पक्षे[b] प्राड्विवाके [c]च राजनि ।
पुरे[d] राष्ट्रे विरोधः स्याद्विरुद्धः सोऽभिधीयते ॥ १३

प्रतिज्ञादोषनिर्मुक्तं[3] साध्यं [e]सत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥ १४

स्वल्पाक्षरप्रभूतार्थो[4 f] निस्सन्दिग्धो[g] निराकुलः ।
विरोधिकारणैर्मुक्तो[h, i] विरोधिप्रतिषेधकः ॥ १५

वचनस्य[5] प्रतिज्ञात्वं तदर्थस्य हि पक्षता ।
असङ्करेण वक्तव्ये व्यवहारेषु वादिभिः ॥ १६

मोहाद्वा[6] यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ।
उत्तरान्तर्गतं वाऽपि तद्ग्राह्यमुभयोरपि ॥ १७

[1] स्मृ. च., III, p. 85; स्मृ. कल्प., p. 12; [a] तत्; व्य. मातृ., p. 296; [a] च; स. वि., p. 88; [a] तु; व्य. सौ., p. 45; स. वि वत्पाठः; वी. मि., p. 67.

[2] स्मृ. च., III, p. 85; स्मृ. कल्प., p. 12; व्य. मातृ., p. 296; स. वि., p. 88; [c] अथ; [d] पुरराष्ट्रविरुद्धं स्यात्; व्य. सौ., p. 45; [b] ह्यर्थे; [c] अथ; वी. मि., p. 67; [c] अथ.

[3] या. अप., p. 610; स्मृ. कल्प., p. 16; स्मृ. च., III, p. 90; परा. मा., p. 61; व्य. मातृ., p. 291; व्य. त., p. 203; व्य. सौ., p. 63; वी. मि., p. 69; वि. से., p. 103; [e] यत्.

[4] व्य. मातृ., p. 291; स्मृ. कल्प., p. 16; [f] अल्पाक्षरः; [g] ग्धस्त्वना; [h] मुक्तो विरोधिकरणैः, स्मृ. च., III, p. 81; [f, g] स्मृ. कल्पवत्पाठः; [h] युक्तो विरोधिकरणैः; परा. मा., p. 61; [f] अल्पाक्षरत्वात् सन्दिग्धो बह्वर्थश्चाप्यनाकुलः। युक्तो. विरोधिकरणे; व्य. त., p. 203; [f] स्वल्पाक्षरः; व्य. सौ., p. 64; [f] अल्पाक्षरः; या. वी., p. 400; स्मृ. च., वत्पाठः; वि. से., p. 103; [f] स्वल्पाक्षरः; [i] युक्तः;

[5] व्य. मातृ., p. 291; व्य. त., p. 204.

[6] व्य. नि. p. 47; या. वी., p. 400; अख., p. 15; मोहाशयेन शाठ्येन नोक्तं वा.

एवमादिगुणान्[1] सम्यगालोच्य च सुनिश्चितः ।
पक्षः कृतः समादेयः पक्षाभासस्ततोऽन्यथा ॥ १८

देशकालविहीनश्च[2] द्रव्यसंख्याविवर्जितः ।
साध्यप्रमाणहीनश्च पक्षोऽनादेय इष्यते ॥ १९

मृषायुक्ति[3][a] क्रियाहीनमसाध्याव्यर्थमाकुलम्[b] ।
पूर्व[c] पक्षं[d] लेखयतो [e]वादहानिः प्रजायते ॥ २०

अपदिश्याभियोगं[4] यस्तमतीत्यापरं वदेत् ।
क्रियामुक्त्वान्यथा (?) ब्रूयात्स वादी हानिमाप्नुयात् ॥ २१

ऊनाधिकं[5][f] पूर्वपक्षे[g] तावद्वादी विशोधयेत् ।
न दद्यादुत्तरं [h]यावत्प्रत्यर्थी सभ्यसन्निधौ ॥ २२

ब्रह्महत्यासुरापानस्तेयगुर्वङ्गनागमे[6] ।
अन्येष्वसभ्यवादेषु प्रतिवादी न दीयते ॥ २३

मनुष्यमारणे[7] स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥ २४

[1] स्मृ. च., III, p. 82.

[2] व्य. नि., p. 29; व्य. सौ., p. 65; व्य. मा., p. 34. Attributed to Kātyāyana by स्मृ. च., III, p. 84, परा. मा., p. 61, and वी. मि., p. 64.

[3] या. अप., p. 610; (स्मृ. कल्प., p. 16; [a] युक्तं; [b] असाराक्षर; [c] पूर्वपक्षं; [e] वादे) परा. मा., p. 65; [a] युक्तं; [b] असारान्यार्थं; व्य. सौ., p. 66; [a] युक्तं; [d] लेखयतः पक्षं; [e] वादे; रा. कौ., p. 388; [b] असारं व्यर्थं; [c] पूर्वपक्षं.

[4] परा. मा., p. 65.

[5] परा. मा., p. 65; व्य. मातृ., p. 295; [g] पूर्वपक्षं यावत्; [h] तावत्; व्य. त., p. 204; [f] न्यूनाधिकं; [g] पूर्वपक्षं; व्य. सौ., p. 66; वि. से., p. 104; व्य. त वत्पाठः; रा. कौ., p. 388; व्य. त वत्पाठः.

[6] व्य. नि., p. 26.

[7] व्य. नि., p. 26.

पारुष्ये[1] कूटकरणे नृपद्रोहे तथैव च ।
प्रणिवादी न दाप्यः स्यात्कर्ता तु विवदेत्स्वयम् ॥ २५
अष्टादशपदो[2] वादो विचार्यो विनिवेदितः ।
सन्त्यन्यानि पदान्यत्र तानि राजा विशेत्स्वयम् ॥ २६
षड्भागहरणं[3a] शुद्धं समयाविक्रमो [b]निधिः ।
वधः संहरणं स्तेयमासेधाज्ञाव्यतिक्रमः ॥ २७
स्वयं[4] नोत्पादयेत्कार्यं राजा वा नास्य पूरुषः ।
अधिकाञ्छातयेदर्थान्[5] न्यूनांश्च परिपूरयेत् ॥ २८
भूमौ निवेशयेत्तावद्यावदर्थो विनिश्चितः ।
श्रुतं[6] च लिखितं चैव शोधितं च विचारितम् ॥ २९
पूर्वपक्षं[7] स्वभावोक्तं प्राड्विवाकोऽथ लेखयेत् ।
पाण्डुलेख्येन फलके ततः पत्रे विशोधितम् ॥ ३०
आवेद्य[8] तु गृहीतेऽर्थे प्रशमं यान्ति ये मिथः ।
अभियोगानुरूपेण *तेषां दण्डं प्रकल्पयेत् ॥ ३१
अन्ये[9c] वा ये पुरग्राममहाजनविरोधकाः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्त्तिताः ॥ ३२

[1] व्य. नि., p. 26.

[2] स्मृ. कल्प., p. 12.

[3] व्य. मातृ., p. 296; स्मृ. कल्प., p. 12; [a] करशुल्कं च; [b] निधेः; व्य. सौ., p. 41; स्मृ. कल्प वत्पाठः.

[4] व्य. मातृ., p. 296.

[5] वी. मि., p. 70; व्य. मा., p. 22.

[6] या वी., p. 401.

[7] व्य. मा., p. 22; व्य. नि., p. 17; वी. मि., p. 70; व्य. मा., p. 22.

[8] व्य. नि., p. 18; व्य. मा., p. 23; * तस्य.

[9] परा. मा., p. 67; स्मृ., कल्प. p. 12; [c] अन्यायेन पुरग्राममहाजन-विरोधकः । व्य. नि., p. 19; अथो जनपदग्राममहाजनविरोधकृत् ।

पाण्डुलेखेन[1] फलके भूम्यां वा प्रथमं लिखेत् ।
न्यूनाधिकं तु संशोध्य पश्चात्पत्रे निवेशयेत् ॥ ३३

अभियोक्ताऽप्रगल्भत्वाद्वक्तुं[2] नोत्सहते [a]यदा ।
तस्य[b] कालः प्रदातव्यः [c]कालशक्त्यनुरूपतः ॥ ३४

यदि नोत्सहते[3] यत्र विवादं कर्तुमिच्छतोः ।
दातव्यस्तत्र कालः स्यादर्थिप्रत्यर्थिनोरपि ॥ ३५

चतुर्विधः[4] पूर्वपक्षः प्रतिपक्षस्तथैव च ।
चतुर्धा[d] निर्णयः प्रोक्तः [e]कश्चिदष्टविधः स्मृतः ॥ ३६

देशः[5] कालस्तथा स्थानं सन्निवेशस्तथैव च ।
ज्ञातृसंज्ञा निवासश्च प्रमाणं क्षेत्रनाम च ॥ ३७

पितृपैतामहं चैव पूर्वराजानुकीर्तनम् ।
स्थावरेषु विवादेषु दशैतानि निवेशयेत् ॥ ३८

श्वोलेखनं[6] वा लभते त्र्यहं सप्ताहमेव वा ।
मतिरुत्पद्यते यावद्विवादे वक्तुमिच्छतः ॥ ३९

[1] व्य. मातृ., p. 297; व्य. मा., p. 35.

[2] या. अप., p. 611; स्मृ. च., III, p. 92; [b] कार्यं; परा मा., p. 66; व्य. त., p. 203; [a] यदि; [b] तदा; [c] कार्यं; स. वि., p. 90; स्मृ. च. वत्पाठः; व्य. सौ., p. 66; [a, c] व्य. त. वत्पाठः; वी. मि. p. 71; [b] सभ्यैस्तु शोधनं तस्य कार्यमर्थानुरूपतः । (या. वी., p. 405; वि. से., p. 102; व्य. त. वत्पाठः); रा. कौ., p. 388; व्य. मा., p. 35.

[3] रा. कौ., p. 388.

[4] या. अप., p. 611; स्मृ. कल्प., p. 16; [d] चतुर्थः, परा. मा., p. 66; व्य. सौ., p. 61; [e] कैश्चित्; वी. मि., p. 71; रा. कौ., p. 386; व्य. सौ. वत्पाठः.

[5] व्य. मा., pp. 34, 35.

[6] रा. कौ., p. 388; पूर्वार्धं परम्.

बहुप्रतिज्ञं[1] यत्कार्यं व्यवहारेषु निश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥ ४० ॥

शङ्काभियोगस्तथ्यं[2a] च [b]लक्ष्येऽर्थेऽभ्यर्थनं तथा ।
वृत्ते वादे पुनर्न्यायः पक्षो ज्ञेयश्चतुर्विधः ॥ ४१ ॥

भ्रान्तिः[3] शङ्का समुद्दिष्टा [c]वश्यं नष्टार्थदर्शनम् ।
लब्धेऽर्थेऽभ्यर्थनं[d] मोहस्तथा वृत्ते पुनः [e]क्रियाः ॥ ४२ ॥

राज्ञाऽपवर्जितो[4f] यस्तु यश्च पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥ ४३ ॥

न्यायं[5] वा नेच्छते कर्तुमन्यायं वा करोति यः ।
न लेखयति यस्त्वेवं तस्य पक्षो न सिध्यति ॥ ४४ ॥

विरुद्धं[6] चाविरुद्धं च द्वावप्यर्थौ निवेशितौ ।
एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत् ॥ ४५ ॥

[1] बहुप्रतिज्ञं etc. See Kane, *Kātyāyana-smṛti-sāroddhāra*, p. 21, where this verse is cited under Kātyāyana.

[2] या. अप., p. 611 ; स्मृ. कल्प., p. 16 ; परा. मा., p. 66 ; व्य. सौ., p. 61 ; [b] लब्धेऽर्थे ; वी. मि., p. 71 ; [a] तत्वं च लभ्येऽर्थे । रा. कौ., p. 386 ; व्य. सौ. वत्पाठः ; व्य. मा., p. 34.

[3] परा. मा., p. 66 ; स्मृ. कल्प., p. 16 ; [e] क्रिया ; व्य. सौ., p. 61 ; [c] तथ्यं दृष्टान्तदर्शनम् ; [e] क्रिया ; वी. मि., p. 71 ; [c] तत्वं तत्वार्थदर्शनम् ; [d] लभ्ये ; [e] क्रिया ; रा. कौ., p. 386 ; [b] तथ्यमिथ्यार्थदर्शनम् ; व्य. मा., p. 34.

[4] परा. मा., p. 67 ; स्मृ. कल्प., p. 12 ; [f] विसर्जितो. (व्य. नि., p. 19 ; स्मृ. कल्पवत्पाठः) व्य. सौ., p. 44 ; [f] विसर्जितो यश्च ; (या. वी., p. 394 ; स्मृ. कल्पवत्पाठः).

[5] परा. मा., p. 67 ; स्मृ. कल्प., p. 13.

[6] परा. मा., p. 67 ; स्मृ. कल्प., p. 13.

३

# उत्तरम्

यदा[1] त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।
दद्यात्तत्पक्षसम्बद्धं[a] प्रतिवादी तदोत्तरम् ॥ १

विनिश्चिते [2]पूर्वपक्षे [b]ग्राह्याग्राह्यविशोषिते ।
प्रतिज्ञाते[c] स्थिरीभूते लेखयेदुत्तरं ततः ॥ २

प्रार्थयमानाय कालो देयः

शालीनत्वाद्भयात्तद्वत्[3 d] प्रत्यर्थी स्मृतिविभ्रमात् ।
कालं प्रार्थयते [e]यत्र तत्रेमं लब्धुमर्हति ॥ ३

एकाहत्र्यहपश्चाहसप्ताहं[4 f] पक्षमेव वा ।
मासं [g]चतुस्त्रयं वर्षं लभते शक्त्यपेक्षया ॥ ४

[1] परा. मा., p. 68; स्मृ. कल्प., p. 16; [a] पक्षान्तसम्बन्धं; व्य. त., pp. 204 and 205; व्य. सौ., p. 64; वि. से., pp. 103 and 105. Attributed to both Kātyāyana and Bṛhaspati. See व्य. सौ., p. 64.

[2] या. अप., pp. 612 and 619; स्मृ. कल्प., p. 17; स्मृ. च., III, p. 92; परा. मा., p. 68; व्य. मातृ., p. 298; [b] विशोधिते; [c] प्रतिज्ञार्थे स. वि., p. 90; व्य. सौ., p. 69; [c] प्रतिज्ञार्थे; वी. मि., p. 72; व्य. मातृवत्पाठः.

[3] या. अप., p. 619; स्मृ. कल्प., p. 17; व्य. सौ., p. 69; [d] भयार्तो वा; [e] तत्र; वी. मि., p. 138; [d] भयार्तत्वात्.

[4] व्य. मातृ., p. 298; स्मृ. कल्प., p. 17; [g] ऋतुत्रयं; व्य. सौ., p. 69; [f] पञ्चाहं; [g] ऋतुत्रयं; वी. मि., p. 138; [g] ऋतुत्रयम्.

पक्षस्य[1] व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यानगम्यमेतदुत्तरं[a] तद्विदो विदुः ॥ ५

उत्तरं[2] चतुर्विधं सम्प्रति (षत्मु ?)रं,
मिथ्योत्तरं, प्राङ्न्यायोत्तरं, कारणोत्तरं चेति ॥ ६

पूर्वपक्षे[3] यथार्थं[b] तु न दद्यादुत्तरं तु यः ।
प्रत्यक्षी[c] दापनीयः स्यात्सामादिभिरुपक्रमैः ॥ ७

प्रियपूर्वं[4] वचः साम [d]भेदस्तु भयदर्शनम् ।
अर्थापकर्षणं [e]दण्डस्ताडनं [f]बन्धनं तथा ॥ ८

साहसस्तेयपारुष्य[5] गोभिशापे तथात्यये ।
भूमौ [g]विवादयेत् क्षिप्रमकालेऽपि बृहस्पतिः ॥ ९

अन्यवादी[6] क्रियाद्वेषी नोपस्थायी निरुत्तरः ।
आहूतः प्रपलायी च हीनः पञ्चविधः स्मृतः ॥ १०

[1] व्य. मातृ., p. 299; स. वि., p. 90; [a] गम्यमित्येतत्.

[2] रा. कौ., p. 390.

[3] या. अप., p. 615; स्मृ. कल्प., p. 20; परा. मा., p. 69; व्य. नि., p. 47; [b] यथाभूतं; [c] प्रत्यर्थी; व्य. सौ., p. 87; [c] प्रत्यर्थी; वी. मि., p. 74; व्य. सौ., वत्पाठः । या. वी., p. 405; अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति । व्य. मा., p. 46; [b] प्रत्यर्थी; अख., p. 14.

[4] या. अप., p. 615; स्मृ. कल्प., p. 20; [d] वस्तूपदर्शनं; [e] दण्डताडनं; परा. मा., p. 69; व्य. नि., p. 47; व्य. सौ., p. 87; वी. मि., p. 74; [d] स्तूभय; अख., p. 15; [e] सान्त्वं; [f] भर्त्सनं तथा; व्य. मा., p. 46.

[5] परा. मा., p. 71; स्मृ. कल्प., p. 18; [g] च पादपे; वी. मि., p. 140. Attributed to both Kātyāyana and Bṛhaspati by वी. मि., while the former two cite it under Bṛhaspati only.

[6] वि. से., p. 105.

कन्याया[1] दूषणे स्तेये कलहे साहसेषु च ।
उपधौ कूटसाक्ष्ये च सद्य एव विवादयेत् ॥ ११

धेनावनडुहि[2] क्षेत्रे स्त्रीषु प्रजनने तथा ।
न्यासे याचितके दत्ते तथैव क्रयविक्रये ॥ १२

प्राङ्न्याये[3] कारणोक्तौ च प्रत्यर्थी निर्दिशेत्क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सम्भवेत् ॥ १३

अनुक्त्वा[4] कारणं यत्र पक्षं वादी प्रपद्यते ।
प्रतिपत्तिस्तु सा ज्ञेया कारणं तूत्तरं पृथक् ॥ १४

सर्वालापं[5] तु यः कृत्वा मिथोऽल्पमपि संवदेत् ।
सर्वमेव तु दाप्यः स्यादभियुक्तो बृहस्पतिः ॥ १५

वाक्पारुष्ये[6] च भूम्यौ च दिव्यं तु परिवर्जयेत् ।
विक्रयादानसम्बन्धे क्रियादनमनिच्छति ॥ १६

## चतुर्विधमुत्तरम्

अभियुक्तोऽभियोगस्य[7] यदि [a]कुर्यात्तु निह्नवम् ।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥ १७

[1] व्य. नि., p. 37.
[2] व्य. नि., p. 37.
[3] व्य. नि., p. 48.
[4] व्य. नि., p. 53.
[5] व्य. नि., p. 54.
[6] व्य. नि., p. 61.
[7] परा. मा., p. 72; स्मृ. कल्प., p. 18; व्य. सौ., p. 7
[a] दपह्नवम्.

श्रुत्वाऽभियोगं[1a] प्रत्यर्थी यदि [b]तत्प्रतिपद्यते ।
सा तु [c]सम्प्रतिपत्तिस्तु शास्त्रविद्भिरुदाहृता ॥ १८

अर्थिनाभिहितो[2d] योऽर्थः प्रत्यर्थी यदि [e]तं तथा ।
प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं हि तत् ॥ १९

योऽर्थिनाऽर्थः[3] प्रभाष्येत प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयादाधर्यं मनुरब्रवीत् ॥ २०

आचारेणावसन्नोऽपि[4] पुनर्लेखयते यदि ।
स [f] विनेयो जितः पूर्वं [g]प्राङ्न्यायस्तु स उच्यते ॥ २१

तथ्ये[5] तथ्यं प्रयुञ्जीत [h]मिथ्यायां चापि लेखयेत् ।
कारणं कारणोपेते [i]प्राग्जये तु जयं तथा ॥ २२

भयदृष्टोद्भवा[6 j] मिथ्या गर्हिता शास्त्रवेदिभिः ।
सत्या सम्प्रतिपत्तिस्तु धर्म्या सा परिकीर्तिता ॥ २३

[1] परा. मा., p. 72; स्मृ. कल्प., p. 18; [a] श्रुताभियोगं; व्य. मातृ., p. 300; [b] तं; [c] स्यात्; व्य. त., p. 207; व्य. मातृवत्पाठः; व्य. सौ., p. 76; [b] तत्वं प्रपद्यते; [c] स्यात्; वि. से., p. 106; [b] तं प्रतिषेधते; [c] स्यात्.

[2] परा. मा., p. 72; स्मृ. कल्प., p. 18; [d] लेखितो; [e] तत्; वि. च., p. 116; व्य. मातृ., p. 301; व्य. त., p. 207; व्य. सौ., pp. 76 and 92; [a] लेखितो. या. वी., p. 406; रा. कौ., p. 391; [a] लिखितो; वि. से., p. 107.

[3] व्य. मातृ., p. 301.

[4] परा. मा., p. 72; स्मृ. कल्प., p. 18; [f] सोऽभिधेयो; [g] सम्यगुच्यते; व्य. त., p. 207; [c] सोऽभिधेयो; (व्य. सौ., p. 77; व्य. त वत्पाठः); वी. मि., p. 82; [d] च; (या. वी., p. 405; वि. से., p. 108; व्य. त वत्पाठः).

[5] व्य. सौ., p. 77; स्मृ. कल्प., p. 18; [h] मिथ्या मिथ्या च; [i] प्राङ्न्याये तु भयं.

[6] व्य. सौ., p. 77; स्मृ. कल्प., p. 18; [j] दोषोद्भवा.

प्राङ्न्यायकरणे[1a] तथ्यं श्लाघ्यं सद्भिरुदाहृतम् ।
विपरीतमधर्म्यं स्यात्प्रत्यर्थी हानिमाप्नुयात् ॥ २४

अहंपूर्विकया[2] यातावर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य च ॥ २५

एककाले[3] समानीते प्रत्यर्थी सभ्यसन्निधौ ।
पूर्वपक्षाक्षरसमं लेखयेदुत्तरं ततः ॥ २६

प्रत्यर्थविधिराख्यातः[4b] सङ्गतार्थप्रपादने ।
चतुर्विधस्याप्यधुना [c]यत्तद्ग्राह्यं तदुच्यते ॥ २७

प्रस्तुतादन्यन्मध्यस्थं[5d] न्यूनाधिकमसङ्गतम् ।
अवाच्यसारं[e] सन्दिग्धं प्रतिपक्षं न [f]लक्षयेत् ॥ २८

भयं[6] करोति[g] भेदं वा भीषणं वा निरोधनम् ।
एतानि [h]वादिनोऽर्थस्य व्यवहारे स हीयते ॥ २९

ऋत्विगादिर्नियुक्तस्तु[7i] समौ सम्परिकीर्तितौ ।
यज्ञे स्वाम्याप्नुयात्पुण्यं हानिं वादेऽथवा जयम् ॥ ३०

पूर्वोत्तरेऽभिलिखिते[8] यत्र वादी प्रमीयते ।
प्रत्यर्थी वा सुतस्ताभ्यां व्यवहारं विशोधयेत् ॥ ३१

[1] व्य. सौ., p. 77; स्मृ. कल्प., p. 18; [a] कारणं.

[2] वी. मि., p. 87.

[3] स्मृ. च., III, p. 96.

[4] या. अप., p. 614; स्मृ. च., III, p. 99; [b] प्रत्यर्थि; [c] यत्र.

[5] या. अप., p. 614; स्मृ. कल्प., p. 19; [d] प्रत्युक्तादन्यदव्यक्तं; [f] लेखयेत्; स्मृ. च., III, p. 99; [e] अव्याप्य; व्य. सौ., p. 82; [d] प्रकृतार्थान्यन्मध्यस्थं; [f] लेखयेत्.

[6] स्मृ. च., III, p. 108; वी. मि., p. 99; [g] कुर्वीत; [h] वादिनो यस्य.

[7] व्य. सौ., p. 97; स्मृ. कल्प., p. 20; [i] ऋत्विग्वादे.

[8] व्य. सौ., p. 98; स्मृ. कल्प., p. 20.

अनिर्णीते[1] विवादे तु विप्रलब्धो [a]भवेन्नृपः ।
जयदानं समं न [b]स्यात्तस्मात्कार्याणि निर्णयेत् ॥ ३२

साक्षिणस्तु[2] समुद्दिश्य यस्तु तान्न [c]विवादयेत् ।
त्रिंशद्रात्रात्त्रिपक्षाद्वा[d] तस्य[e] हानिः प्रजायते ॥ ३३

आहूतप्रपलायी[3] [f] च मौनी [g]साक्षिपराजितः ।
स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः ॥ ३४

प्रपलायी[4] त्रिपक्षेण [h]मौनी वा सप्तभिर्दिनैः ।
साक्षिभिन्नस्तत्क्षणेन प्रतिपन्नश्च [i]हीयते ॥ ३५

निवेदितस्याकथनमनुपस्थानमेव[5] च ।
पक्षार्थिदोषौ[j] मौनं च हीयमानस्य लक्षणम् ॥ ३६

महापापोपपापाभ्यां[6] पातकेनाथ संसदि ।
योऽभिशस्तस्तत्क्षमते संयुक्तं तं विदुर्जनाः ॥ ३७

तस्माद्यत्नेन[7] कर्तव्यं बुधेनात्मविशोधनम् ।
यद्यद्गुरुतरं कार्यं तत्तत्पूर्वं विशोधयेत् ॥ ३८

[1] व्य. सौ., p. 98; स्मृ. कल्प., p. 21; [a] नरः. [b] कार्यं विनिर्णयेत्.

[2] स्मृ. च., III, p. 110; स्मृ. कल्प., p. 22; व्य. नि., p. 58; व्य. सौ., p. 98; [c] निगाद; [e] हानिस्तस्योपजायते; वी. मि., p. 102; या. वी., p. 507; [d] द्दिनात्; [e] हानिस्तस्योपजायते.

[3] या. अप., p. 622; स्मृ. कल्प., p. 22; [f] आहूतः प्रपलायेत; स्मृ. च., III, p. 110; परा. मा., p. 82; व्य. सौ., p. 107; [f] आहूतो यः पलायेत्तु; वी. मि., p. 102; [g] साक्षी पराजितः.

[4] या. अप., p. 622; स्मृ. कल्प., p. 23; [h] मौनकृत्; स्मृ. च., III, p. 110; [h] मौनकृत्; परा. मा., p. 82; व्य. सौ., p. 107; [h] मौनकृत्; वी. मि., p. 102; [h] मौनकृत्; [i] हीनतः.

[5] व्य. सौ., p. 108; स्मृ. कल्प., p. 23; [j] पक्षार्थं दूष्यमौनं च.

[6] व्य. सौ., p. 108; स्मृ. कल्प., p. 23.

[7] स्मृ. कल्प., p. 23; व्य. सौ., p. 108; पूर्वार्धं परम्.

महापापाभिशस्तो[1] यः पातकात्तर्तुमिच्छति ।
पूर्वमङ्गीकृतं तेन जितोऽसौ दण्डमर्हति ॥ ३९

आचारकरणे[2 a] दिव्ये कृत्वोपस्थाननिश्चयम्[b] ।
नोपस्थितो[c] यदा कश्चिच्छलं तत्र न कारयेत् ॥ ४०

दैवराजकृतो[3] दोषस्तत्काले[d] तु यदा भवेत् ।
अवधित्यागमात्रेण न भवेत्स पराजितः ॥ ४१

पूर्वोत्तरे[4 e] सन्निविष्टे[f] विचारे *सम्प्रवर्तिते ।
प्रशमं[g] ये मिथो यान्ति [h]दाप्यस्ते द्विगुणं दमम् ॥ ४२

पूर्वोत्तरार्थे[5 i] लिखिते प्रक्रान्ते कार्यनिर्णये ।
द्वयोः [j]सन्तप्तयोः सन्धिः [k]स्यादयःखण्डयोरिव ॥ ४३

[1] स्मृ. कल्प., p. 23.

[2] स्मृ. च., III, p. 110; स्मृ. कल्प., p. 23; व्य. सौ., p. 110; [a] आवारकरणे दिश्ये कृतो; [c] नोपस्थाता भवेद्वादी; वी. मि., p. 103; [b] निर्णयम्; या. वी., p. 507.

[3] परा. मा., p. 82; स्मृ. कल्प., p. 23; [d] तस्मिन् काले; स्मृ. च., III, p. 111; व्य. सौ., p. 110; [d] तस्मिन् काले; वी. मि., p. 103; तस्मिन् काले; या. वी., p. 507; [d] तस्मिन् काले.

[4] वी. मि., p. 103; स्मृ. कल्प., p. 23; [f] निविष्टे तु; [h] दाप्यास्ते.

* व्य. सौ., p. 111; [f] निविष्टे तु; या. वी., p. 400, [f] निविष्टे तु, [g] निर्णिक्तं तु द्वयोस्तत्र वचनं वादिनोर्भृगुः ॥

* स्मृ. च., III, p. 112; [e] पूर्वोत्तरे; परा. मा., p. 84; [e] पूर्वरूपे; व्य. मा., p. 23; [f] सम्प्रविष्टे; [h] दाप्यास्ते * च.

[5] या. अप., p. 625; स्मृ. कल्प., p. 23; स्मृ. च., III, p. 112; [i] पूर्वोत्तरेऽभि; वि. च., p. 124; [i] पूर्वोत्तरेऽभिलषिते; [k] पिण्डयोरिव; परा. मा., p. 85; व्य. त., p. 216; [i] पूर्वोत्तरेऽभि; [k] पिण्डयोरिव; स. वि., p. 104; [i] पूर्वोत्तरे तु; [k] पिण्डयोरिव; व्य. सौ., p. 113; व्य. त वत्पाठः; वी. मि., p. 104; [i] पूर्वोत्तरेऽभि; [j] उत्तरयोः; व्य. मा., p. 49.

## सन्धिविचारः

साक्षिसभ्यविकल्पस्तु[1] भवेत्तत्रोभयोरपि[a] ।
दोलायमानयोः[b, c] सन्धिः प्रकुर्यातां विचक्षणैः ॥ ४४
प्रमाणसमता[2 d, e] यत्र भेदः [f]शास्त्रचरित्रयोः ।
तत्र राजामया सन्धिरुभयोरपि शस्यते ॥ ४५
यत्र[3] सांशयिको धर्मो व्यवहारश्च पार्थिवे ।
सन्धिस्तत्र तु कर्तव्योऽयसोः सन्तप्तयोर्यथा ॥ ४६
समः[4] सन्धिस्तदा कार्यो विषमस्तु निवर्तते ।
धर्मार्थोपग्रहः[5] कीर्तिः [g]भवेत्साम्येन भूभृतः ।
न क्लिश्यन्ते साक्षिसभ्या वैरं च विनिवर्तते ॥ ४७
निग्रहानुग्रहं[6] दण्डं धर्मं [h]प्राप्य यशोऽयशः ।
विग्रहाज्जायते[7 i] नृणां [j]पुनर्दोषस्तथैव च ॥ ४८

[1] परा. मा., p. 85; स्मृ. कल्प., p. 23; [c] नौ यौ सन्धिं कुर्यातां तौ विचक्षणौ; स्मृ. च., III, p. 113; [b] डोळायमाने यौ सन्धिं प्रकुर्यातां विचक्षणौ; (वि. च., p. 124; [a] यत्र; [c] स्मृ. कल्पवत्पाठः;) व्य. त., p. 216; वि. च. वत्पाठः; स. वि., p. 104; [b] डोलायमानयोः सन्धिं प्रकुर्यातां विचक्षणौ; व्य. सौ., p. 113; वि. च. वत्पाठः; वी. मि., p. 104; स्मृ. कल्पवत्पाठः.

[2] या अप., p. 625; स्मृ. कल्प., p. 23; [d] प्रथमः समतां; स्मृ. च., III, p. 113; [e] तो; वि. च., p. 124; [f] विचारयोः; परा. मा., p. 85; स. वि., p. 104; [e] तो; व्य. सौ., p. 113; वी. मि., p. 104; व्य. मा., p. 50.

[3] व्य. नि., p. 51.

[4] व्य. नि., p. 51.

[5] वी. मि., p. 104; स्मृ. कल्प., p. 23; वि. च., p. 124; व्य. सौ., p. 113; [g] सान्नाव.

[6] वी. मि., p. 104; स्मृ. कल्प., p. 23; [h] प्राप्ययशो यशः; वि. च., p. 124; स्मृ. कल्पवत्पाठः; व्य. सौ., p. 113.

[7] वी. मि., p. 104; स्मृ. कल्प., p. 23; [j] द्वेषः; व्य. सौ., p. 113; [i] विग्रहो जायते राज्ञां; चतुर्थपादो न दृश्यते.

तस्मात्कुलगणाध्यक्षा[1a] धर्मज्ञाः समदृष्टयः ।
अद्वेषलोभा[b] यद्ब्रूयुस्तत्कर्तव्यं[*] विजानता ॥ ४९

[1] वि. च., p. 124; स्मृ. कल्प., p. 23; वी. मि., p. 104; [a] ध्यक्षधर्मज्ञाः; [b] लोभाद्यद्; व्य. मा., p. 50.

* ब्रूयुस्तत् कर्तव्यमपि जानता ।

४

## ॥ क्रियापादः ॥

शोधिते[1] लिखिते सम्यगिति निर्दोष उत्तरे ।
प्रत्यर्थिनोऽर्थिनो वाऽपि क्रिया कारणमिष्यते ॥ १

ये[2a] तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना ।
कथयित्वोत्तरं[b] सम्यग् दातव्यैकस्य वादिनः ॥ २

प्रमाणानां बलाबलम्

प्रतिज्ञां[3] भावयेद्वादी प्रत्यर्थी कारणं तथा ।
प्राग्वृत्तवादी[c] विजयं जयपत्रेण भावयेत् ॥ ३

पूर्वपादे[4] विलिखितं यथाक्षरमशेषतः ।
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत् ॥ ४

श्रुत्वा[5] पूर्वोत्तरं सभ्यैर्निर्दिष्टा यस्य भावना ।
विभावयेत्प्रतिज्ञातं सोऽखिलं लिखितादिना ॥ ५

[1] स. वि., p. 105. Attributed to Kātyāyana by Aparārka, p. 624 and परा. मा., III, p. 87.

[2] स्मृ. च., III, p. 113; स्मृ. कल्प., p. 23; [b] कारयित्वा; व्य. सौ., p. 115; [a] येऽत्र; [b] कल्पयित्वा; वी. मि., p. 92; [b] कलयित्वोत्तरं सभ्यैः.

[3] व्य. मातृ., p. 309; स्मृ. कल्प., p. 23; व्य. सौ., p. 115; वी. मि., p. 93; प्राग्वृत्तवादिविजयं.

[4] परा. मा., p. 87.

[5] स्मृ. च., III, p. 123; स्मृ. कल्प., p. 24; व्य. सौ., p. 119; वी. मि., p. 92; व्य. मा., p. 50.

द्विप्रकारा[1] क्रिया प्रोक्ता [a]मानुषी दैविकी तथा।
एकैकाऽनेकधा भिन्ना [b]ऋषिभिस्तत्त्ववेदिभिः ॥ ६

साक्षिणो लिखितं भुक्तिर्मानुषं त्रिविधं स्मृतम्।
धटाद्या धर्मजान्ता तु दैवी नवविधा क्रिया ॥ ७

साक्षिलेख्यानुमानं[2] च [c]मानुषी त्रिविधा [d]क्रिया।
साक्षी[e] द्वादश भेदस्तु लिखितं [f]त्वष्टधा स्मृतम् ॥ ८

अनुमानं[3] त्रिधा[g] प्रोक्तं नवधा दैविकी क्रिया।
प्रथमे[4] वा तृतीये वा प्रमाणं दैवमानुषम् ॥ ९

उत्तरे स्याच्चतुर्थे तु ससाक्षिजयपत्रकम्।
ऋणादिकेषु[5 h] कार्येषु कल्पयेन्मानुषीं क्रियाम् ॥ १०

प्राङ्न्याये[6] प्रत्यवस्कन्दे प्रत्यर्थी साधयेत्स्वयम्।
उत्तरार्थं प्रतिज्ञार्थं अर्थी मिथ्योत्तरे पुनः ॥ ११

[1] परा. मा., p. 87; स्मृ. कल्प., p. 24; व्य. नि., p. 58; व्य. मातृ., p. 306; [b] दर्शिभिः; व्य. त., p. 211; पूर्वार्धं परम्; स. वि., p. 111; व्य. सौ., p. 122; [b] वादिभिः; वी. मि., p. 110; [b] वादिभिः; या. वी., p. 412; [b] वादिभिः; व्य. मा., p. 52; [a] दैविकी मानुषी.

[2] परा. मा., p. 87; स्मृ. कल्प., p. 24; [d] स्मृता। धटाद्या धर्मजान्ता च दैवी नवविधा स्मृता। स्मृ. च., III, p. 114; [d] स्मृता। पूर्वार्धं परम्। व्य. नि., pp. 58 and 66; स्मृ. कल्पवत्पाठः; 66 तमे पूर्वार्धं परं, (व्य. मातृ., p. 306 and व्य. त., p. 211; स्मृ. कल्पवत्पाठः); व्य. सौ., p. 122; [e] धटाद्या धर्मजान्ता तु दैविकी नवधा भवेत्। वी. मि., p. 110; [c] त्रिविधा मानुषी क्रिया; [f] दशधा; या. वी., p. 412; धटाद्या धर्मजान्ता च दैविकी नवधा स्मृता। व्य. मा., p. 52.

[3] परा. मा., p. 87; स्मृ. कल्प., p. 24; [g] च द्विविधं; व्य. नि. p. 59; [g] तु द्विविधं दैविकी नवधा; वी. मि., p. 110; [g] तु. द्विविधं.

[4] स्मृ. च., III, p. 119; स. वि., p. 107.

[5] व्य. सौ., p. 126; स्मृ. कल्प., p. 25; [h] दिषु तु.

[6] स्मृ. च., III, p. 119.

क्रिया[1] न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥ १२

वाक्पारुष्ये[2] महीवादे निषिद्धा दैविकी क्रिया ।
प्रदातव्या प्रयत्नेन साहसेषु चतुर्ष्वपि ॥ १३

नृपद्रोहे[3][a] साहसे च कल्पयेद्दैविकीं क्रियाम् ॥ १४
मणिमुक्ताप्रवालानां[4][b] कूटहृत्पाशहारकः[c] ।
हिंसकोऽन्त्याङ्गनासेवी[d] परीक्ष्यः[e] शपथैः सदा ॥ १५

महापापाभिशापेषु[5] निक्षेपे[f] हरणे तथा ।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥ १६

लिखिते[6] साक्षिवादे [g]च [h]सन्दिग्धिर्जायते यदि ।
अनुमाने[i] च सम्भ्रान्ते तत्र दिव्यं [j]विशोधनम् ॥ १७

[1] कृ. चि.

[2] या. अप., p. 629 (स्मृ. च., III, p. 121 ; पूर्वार्धं परं) ; स. वि., p. 109 ; पूर्वार्धं परम् ।

[3] या. अप., p. 629 ; स्मृ. कल्प., p. 25 ; व्य. सौ., p. 129 ; [a] साहसे च नृपद्रोहे.

[4] परा. मा., p. 89 ; व्य. सौ., p. 130 ; [b] नाशकानां ; [c] कृन्मांस ; [d] हिंस्रकोन्या ; [e] परीक्ष्याः ; वी. मि., p. 114 ; [c] कृन्न्यास ; [d] हिंसकोऽन्या व्य. म., p. 14 ; [b] नाणकानां ; [c] हृन्न्यास ; [d] हिंसकोऽन्याङ्गनासेवी ; [e] परीक्ष्याः.

[5] परा. मा., p. 89 ; व्य. मातृ., p. 316 ; [f] निक्षेपहरणे ; व्य. सौ., p. 130 ; व्य. मातृवत्पाठः ; वी. मि., p. 114 ; व्य. मातृवत्पाठः । व्य. म., p. 14 ; [f] विद्यमानेषु साक्षिषु । दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः ।

[6] या. अप., p. 629 ; स्मृ. कल्प., p. 25 ; [g] तु सन्दिग्धं जायते यदा ; [i] मानेन ; स्मृ. च., III, pp. 121 and 211 ; [g] सन्देहो जायते यदा ; व्य. नि., p. 63 ; [g] सन्देहो जायते यदा ; [j] नियोजयेत् ; व्य. मातृ., p. 333 ; [h] यत्र जायते ; स. वि., p. 108 ; स्मृ. च वत्पाठः ; 5 ; व्य. सौ., p. 129 ; [g] सन्दिग्धं यत्र जायते ; [j] प्रकल्पयेत् ; व्य. म., p. 14 ; [g] स्मृ. कल्पवत्पाठः.

द्यूते[1] समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः [a]साधनं प्रोक्तं न दिव्यं न च लेखकम् ॥ १८
यथालाभोपपन्नैस्तैर्निर्णयं[2] कारयेन्नृपः ।
प्रक्रान्ते[3] साहसे वादे पारुष्ये दण्डवाचिके ।
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव च ॥ १९
ऋणे[4] लेख्यं साक्षिणो वा युक्तिलेशादयोऽपि वा ।
दैविकी[5] वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥ २०
चिरन्तनोपांशुकृते[6 b] चिरनष्टेषु साक्षिषु ।
प्रदुष्टेष्वनुमानेषु[c] दिव्यैः कार्यं विशोधयेत् ॥ २१

[1] व्य. नि., p. 61; स. वि., p. 110; [a] साधकम्.
[2] व्य. नि., p. 72.
[3] व्य. म., p. 15.
[4] व्य. म., p. 15.
[5] व्य. म., p. 15.
[6] परा. मा., p. 90; व्य. सौ., p. 131; वी. मि., p. 114; [b] कृतचिर; [c] षु समानेषु.

# ५

## ॥ साक्षिणः ॥

नव[1] सप्त[a] च[b] पञ्च स्युश्चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ [c]ख्यातौ नैकं पृच्छेत्कदाचन ॥ १

द्यूतकः[2d] शटिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च ॥ २

स्तेनाः[3] साहसिकाः षण्डाः कितवाः सूचकास्तथा ।
न साक्षिणस्ते दुष्टत्वात्तेषु साक्ष्यं न विद्यते ॥ ३

### साक्षिभेदाः

लिखितो[4e] लेखितो गूढः स्मारितः [f]कुल्यदूतकौ ।
यदृच्छश्चोत्तरश्चैव[g] कार्यमध्यगतोऽपरः[h] ॥ ४

[1] परा. मा., p. 95; स्मृ. कल्प., p. 27; स्मृ. च., III, p. 174; व्य. नि., p. 80; [b] पञ्च वा; [c] ग्राह्यौ; व्य. मातृ., p. 317; [c] ज्ञेयौ; व्य. त., p. 212; व्य. निवत्पाठः; व्य. सा., p. 57; [b] पञ्च वा; स. वि., p. 138; [b] पञ्च वा; [c] शान्तौ; व्य. सौ., p. 140; व्य. निवत्पाठः; वी. मि., p. 150; [b] पञ्च वा; या. वी., p. 497; पूर्वार्धं परम्; व्य. मा., p. 60; [a] स्युः पञ्च वा सप्त.

[2] परा. मा., p. 96; वि. च., p. 135; [d] भृतकः खनिकाग्राही; व्य. सा., p. 57; [d] दूतकः खटि; व्य. सौ., p. 140; दूतकः खटिकाग्राही.

[3] परा. मा., p. 100.

[4] या. अप., p. 666; स्मृ. कल्प., p. 26; [g] यादृच्छश्च; स्मृ. च., III, p. 186; परा. मा., p. 102; [g] यादृच्छोत्तरसाक्षी च; व्य. नि., p. 78; [g] यादृच्छिकश्चोत्तरश्च; [h] गतस्तथा; व्य. मातृ., p. 321; [e] तोऽलेखितो; [g] यादृच्छाश्चोत्तराश्चैव; व्य. सार., p. 53; स्मृ. कल्पवत्पाठः; व्य. सौ., p. 136; [g] यादृच्छिकश्चोत्तरश्च; वी. मि., p. 144; या. वी., p. 498; [g] यादृच्छिकश्चोत्तरश्च; [h] गतः परः; व्य. म., p. 21; व्य. सौवत्पाठः; या. बा., p. 252; [f] कुल्यदत्तकौ; [g] यादृच्छिकश्चोत्तरश्च; व्य. मा., p. 57.

नृपोऽध्यक्षस्तथा ग्रामः[1] साक्षी द्वादशधा [a]स्मृतः ।
प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः ॥ ५

जातिनामादिलिखितं[2 b, c] येन स्वं पित्र्यमेव च ।
निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः ॥ ६

अर्थिना[3 d] च क्रिया [e]भेदैस्तस्य कृत्वा [f]ऋणादिकम् ।
प्रत्यक्षं [g]लिख्यते [h]यस्तु लेखितः स उदाहृतः ॥ ७

कुड्यव्यवहितो[4 i] यस्तु *श्राव्यते [j]ऋणभाषितम् ।
विनिह्नुतो†[k] यथाभूतं [l]गूढः साक्षी स [m]उच्यते ॥ ८

[1] या. अप., p. 666; स्मृ. कल्प., p. 26; स्मृ. च., III, p. 186; पूर्वार्धं परम्; परा. मा., p. 102; व्य. नि., p. 78; व्य. मातृ., p. 321; [a] मतः; व्य. सा., p. 53; व्य. सौ., p. 136; व्य. मि., p. 144; या. वी., p. 498; या. बा., p. 252; पूर्वार्धं परम्; व्य. म., p. 21; पूर्वार्धं परं; व्य. मा., p. 57; पूर्वार्धं परम्.

[2] या. अप., p. 666; स्मृ. कल्प., p. 26; स्मृ. च., III, p. 184; परा. मा., p. 102; व्य. नि., p. 78; [c] मिलिखितं; व्य. मातृ., p. 321; व्य. सा., p. 53; व्य. निवत्पाठः; (व्य. सौ., p. 136; वी. मि., p. 144; व्य. निवत्पाठः); या. वी., p. 498; [b] स्वजातिर्लिखिता येन येन स्वं पितृनाम च; व्य. मा., p. 57.

[3] वी. मि., p. 144; स्मृ. कल्प., p. 26; [d] अर्थिक्रियां; [f] के; [g] लेख्यते यश्च; या. अप., p. 666; [d] संवित्क्रियां; [e] कार्यं; [g] लेख्यते यच्च; परा. मा., p. 102; [d] सन्धिक्रिया; [f] के; व्य. नि., p. 78; [d] सन्धिक्रियां; [f] के; [h] यश्च; व्य. मातृ., p. 321; [g] लेख्यते; [d, f, h] व्य. निवत्पाठः; व्य. सा., p. 54; [h] यश्च; व्य. सौ., p. 137; [d] अर्थिनश्च; या. वी., p. 498; (व्य. मा., p. 57; व्य. मातृवत्पाठः).

[4] या. अप., p. 667; स्मृ. कल्प., p. 26; [j] ऋणि; [k] ह्नुते; [l] गूढसाक्षी; स्मृ. च., III, p. 185; [k] ष्कृते तथाभूतगूढसाक्षी; परा. मा., p. 102; व्य. नि., p. 78; [k, l] स्मृ. कल्पवत्पाठः; [m] कीर्तितः; * (व्य. सौ., p. 137; [i] कृत्य; [j] ऋणि; [l] गूढसाक्षी;) वी. मि., p. 144; [k, l] स्मृ. कल्पवत्पाठः; या. वी., p. 498; स्मृ. कल्पवत्पाठः; * व्य. मातृ., p. 321; [i] अर्थिना स्वार्थसिध्यर्थं प्रत्यर्थिवचनं स्फुटम् । यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते ॥ व्य. सा., p. 54; स्मृ. कल्पवत्पाठः; व्य. मा., p. 58; * शृणोति; † यथाश्रुतं यथाभूतं गूढसाक्षी.

आहूय[1] यः कृतः साक्षी [a]ऋणन्यासक्रियादिके ।
स्मार्यते[b] च [c]मुहुर्यश्च स्मारितः [d]स उदाहृतः ॥ ९

विभागदाने[2][e] विपणे [f]ज्ञातिर्यश्चोपयुज्यते ।
द्वयोः समानो धर्मज्ञः कुल्यः स परिकीर्तितः ॥ १०

अर्थिप्रत्यर्थिवचनं[3] शृणुयात्प्रेषितस्तु[g] यः ।
उभयोः[h] सम्मतः साधुः दूतकः स उदाहृतः ॥ ११

क्रियमाणे[4] तु[i] कर्तव्ये यः कश्चित्स्वयमागतः ।
अत्र[j] साक्षी त्वमस्माकमुक्तो *यादृच्छिकस्तु सः ॥ १२

[1] या. अप., p. 667; स्मृ. कल्प., p. 26; [a] ऋणे; [d] सोऽभिधीयते; स्मृ. च., III, p. 184; परा. मा., p. 102; व्य. नि., p. 78; [c] कार्ये; [d] सोऽभिधीयते; व्य. मातृ., p. 321; व्य. सा., p. 54; [b] विवादार्थं सर्वे; व्य. सौ., p. 137; [d] सोऽभिधीयते; वी. मि., p. 144; यो मुहुश्चैव; [d] सोऽभिधीयते; या. वी., p. 499; [b] तेऽर्थे; [d] सोऽभिधीयते; व्य. मा., p. 58; व्य. निवत्पाठः.

[2] या. अप., p. 667; स्मृ. कल्प., p. 26; [f] यत्रोपदिश्यते; स्मृ. च., III, p. 186; [e] विभागादावपि ऋणे; परा. मा., p. 102; [e] विभागदान आधाने स कुल्यः; [f] यत्रोपदिश्यते; (व्य. नि., p. 78; व्य. मातृ., p. 322; व्य. सा., p. 57; व्य. सौ., p. 137; वी. मि., p. 145; या. वी., p. 499; पञ्चस्वपि स्मृ. कल्पवत्पाठः, व्य. मा., p. 58; व्य. निवत्पाठः.

[3] या. अप., p. 667; स्मृ. कल्प., p. 26; स्मृ. च., III, p. 186; परा. मा., p. 102; व्य. नि., p. 78; व्य. मातृ., pp. 319 and 322; [g] भाषते; [h] उभयानुमतः यथास्थितपाठः., p. 322; तमे पुटे. व्य. सा. p. 57; व्य. सौ., p. 137; वी. मि., p. 145; या. वी., p. 499; व्य. मा., p. 58.

[4] या. अप., p. 667; स्मृ. कल्प., p. 26; [j] अस्ति, स्मृ. च., III, p. 184; परा. मा., p. 103; व्य. नि., p. 79; व्य. मातृ., p. 321; व्य. सा., p. 57; [j] अस्तु साक्षि व्य. सौ., p. 137; [j] अस्ति; वी. मि., p. 145; [i] च, या. वी., p. 499; [i] च. व्य. मा., p. 58; * स्मृतः.

यत्र[1a] साक्षी [b]दिशं [c]गच्छेन्मुमूर्षुर्वा [d]यथाक्रमम् ।
अन्यं संश्रावयेत् तं [e]तु विद्यादुत्तरसाक्षिणम् ॥ १३
साक्षिणामपि[2] यः *साक्ष्यमुपर्युपरि [f]भाषताम् ।
श्रवणाच्छ्रावणाद्वाऽपि स साक्ष्युत्तरसंज्ञितः ॥ १४
उभाभ्यां[3] यस्य* विश्वस्तं[g] कार्यं [h]चापि निवेदितम् ।
गूढधारी[i, j] स विज्ञेयः [k]कार्यमध्यागतस्तथा ॥ १५
अर्थिप्रत्यर्थिनोर्वाक्यं[4] यच्छ्रुतं भूभृता स्वयम् ।
स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ॥ १६
निर्णीते[5 l] व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥ १७

[1] या. अप., p. 667; स्मृ. कल्प., p. 26; [b] दिवं; [c] गच्छन्; [d] श्रुतम्. स्मृ., च., III, p. 185; [d] श्रुतं, परा. मा., p. 103; व्य. नि., p. 79; [c] गच्छन्; [d] श्रुतं; [e] च, व्य. मातृ., p. 321; [c] गच्छन्; [d] श्रुतं. व्य. सा., p. 57; [d] श्रुतम्. व्य. सौ., p. 137; [a] यस्तु; [c] गच्छन्; [d] श्रुतं, वी. मि., p. 145; व्य. सौवत्पाठः. दिवं इति परं भेदः। या. वी., p. 499; [a] यः साक्षी तु दिशं गच्छन्. व्य. मा., p. 59; [d] श्रुतम्.

[2] वी. मि., p. 145; व्य. सार., p. 57; * पक्षं; [f] भाषते. या. वी., p. 499; [f] भाषते.

[3] या. अप., p. 667; स्मृ. कल्प., p. 26; [j] चारी, स्मृ. च., III, p. 186; परा. मा., p. 103; [i] कूटसाक्षी; [k] मध्य, व्य. नि., p. 79; [j] साक्षी, व्य. मातृ., pp. 320 and 322; [j] चारी. व्य. सा., p. 58; [h] वा; [j] चारी; [k] मध्य, व्य. सौ., p. 138; [g] विस्रम्भः यत्कार्यं; [j] चारी, वी. मि., p. 145; [j] चारी; [k] मध्य, या. वी., p. 499; [h] वा विनि, व्य. मा., p. 59; * यश्च विश्वस्तः; [i] गूढसाक्षी.

[4] या. अप., p. 667; स्मृ., कल्प., p. 26; स्मृ. च., III, p. 186; परा. मा., p. 103; व्य. नि., p. 79; व्य. मातृ., pp. 320 and 322; व्य. सौ., p. 138; वी. मि., p. 145; या. वी., p. 499; व्य. मा., p. 59.

[5] या. अप., p. 667; स्मृ. कल्प., p. 26; स्मृ. च., III, p. 186; परा. मा., p. 103; व्य. नि. p. 79; व्य. मातृ., pp. 320 and 322; व्य. सा., p. 58; व्य. सौ., p. 138; [l] निस्तीर्णे वी. मि., p. 145; या. वी., p. 499; व्य. मा., p. 59.

व्युषितं[1 a] छादितं यत्र *सीमायां [b]च समन्ततः ।
स[c] कृत्तोऽपि भवेत्साक्षी [d]ग्रामस्तत्र न संशयः ॥ १८

लिखितौ[2] द्वौ तथा गूढौ त्रिचतुःपञ्च *लेखिताः ।
यदृच्छास्मारिताः[e] कुल्यास्तथा चोत्तरसाक्षिणः ॥ १९

दूतकः[3] खटिकाग्राही[f] कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च ॥ २०

## साक्षिदोषकथनम्—दुष्टानां दण्डश्च

साक्षिणोऽर्थसमुद्दिष्टान्यस्तु[4 g,h] दोषेण[i] दूषयेत् ।
अदुष्टं[j] दूषयन् वादी तत्समं दण्डमर्हति ॥ २१

[1] परा., मा. p. 103; स्मृ. कल्प. p. 26; [a] मुषितं घातितं यच्च; [b] तु; [c] अकृतोऽपि; [d] तेन, या. अप., p. 667; [a] मुषितं घातितं यत्र; [c] अर्थतोऽपि, स्मृ. च., III, p. 185; [a] घातितं मुषितं; [b] श्च; [c] अकृतोऽपि व्य. नि., p. 80; [a, b] या. अप वत्पाठः; [c] अकृतोऽपि; [d] तस्य, व्य. मातृ., p. 322; [c] अकृतोऽपि; [a, b] या. अप वत्पाठः, व्य. त. p. 119; [a] मुषितं घातितं यच्च; [b] श्च; [c] अकृतोऽपि. ज्यो. त., p. 703; [a] मूषितं घातितं; [b] श्च; [c] अकृतोऽपि व्य. सौ., p. 139; [a] दूषितं घातितं यच्च; [b] तु; [c] अकृतोऽपि, वी. मि., p. 145 and या. वी., p. 499; व्य. सौवत्पाठः, व्य. मा., p. 59; [a] मुषितं खनितं; * सीमायाः; [c] अकृतोऽपि.

[2] परा. मा., p. 103; स्मृ. कल्प., p. 27; [e] यदृच्छाः, व्य. नि., p. 80; व्य. मातृ., p. 321; स्मृ. कल्पवत्पाठः, व्य. सा., p. 57; * तौ; [e] यदृच्छाः, व्य. सौ., p. 140; वी. मि., p. 150; व्य. म., p. 21; मि. बा., p. 253; उत्तरार्धं परम्.

[3] परा. मा., p. 103; स्मृ. कल्प., p. 27; स्मृ. च., III, p. 219; [f] घटिका, व्य. नि., p. 80; स्मृ. च वत्पाठः, व्य. मातृ., p. 319; वी. मि., p. 150; व्य. म., p. 22.

[4] परा. मा., p. 105; स्मृ. कल्प., p. 30; [g] अर्थिसमु; [i] दोषेषु, स्मृ. च., III, p. 191; [g] अर्थिसमु, व्य. मातृ., p. 327; उत्तरार्धं परम्; [i] अदुष्टान्, व्य. त., p. 216; स्मृ. कल्पवत्पाठः, स. वि., p. 143; [g] अर्थिसमु; [h] सत्सु दोषेषु; [j] अदुष्टान्, व्य. सौ., p. 164; स्मृ. कल्पवत्पाठः, वी. मि., p. 163; [g] अर्थे समु; [h] सत्सु दोषेषु; [j] अदुष्टान्, द. वि., p. 341; [g] अर्थिसमु; [h] सत्स्वदोषेषु; [j] अदुष्टान्, व्य. म., p. 24; वी. मि वत्पाठः, व्य. मा., p. 65; [g] अर्थीसमु; [h] सत्सु दोषेषु; [j] अदुष्टान् दूषयन्वापि.

लेख्यदोषास्तु[1] ये केचित्साक्षिणां चैव ये स्मृताः ।
वादकाले तु वक्तव्याः [a]पश्चादुक्तान्न दूषयेत् ॥ २२

साक्षिदोषाः[2] प्रयोक्तव्याः संसदि प्रतिवादिना ।
पत्रे विलिख्य तान् सर्वान् वाच्यं प्रत्युत्तरं ततः ॥ २३

प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कदाचन ।
अतोऽन्यथा भावनीयाः क्रियायां प्रतिवादिना ॥ २४

अभावयन् दमं दाप्यः प्रत्यर्थी साक्षिणा स्फुटम् ।
भाविताः साक्षिणः सर्वे साक्षिधर्मनिराकृताः ॥ २५

प्रत्यर्थिनोऽर्थिनो वाऽपि साक्षिदूषणसाधने ।
प्रस्तुतार्थोपयोगेन व्यवहारान्तरं न च ॥ २६

जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षी सत्ये व्यवस्थितः ॥ २७

उक्तेऽर्थे साक्षिणो यस्तु दूषयन् प्रागदूषितान् ।
न च तत्कारणं ब्रूयात् प्राप्नुयात्पूर्वसाहसम् ॥ २८

लेख्यं[3] वा साक्षिणो वाऽपि विवादे यस्य दूषिताः ।
तस्य कार्यं न [b]शोध्यं तु यावत्तन्न विशोधयेत् ॥ २९

साक्षिभिर्गदितैः[4] [c] सभ्यैः प्रक्रान्ते निर्णये तु यः ।
पुनर्विवादं कुरुते [d]राजा तत्र विचारयेत् ॥ ३०

[1] व्य. म., p. 24; स्मृ. कल्प., p. 30; स्मृ. च., III, p. 142; स. वि., p. 120; व्य. सौ., p. 165; [a] वक्ता, वी. मि. p. 164; व्य. मा., p. 65; * साक्ष्यदोषाश्च; [a] उक्तं.

[2] व्य. मा., pp. 66 and 67.

[3] या. अप., p. 672; स्मृ. कल्प., p. 30; [b] सिध्येत्, स्मृ. च., III, p. 195; [b] सिध्येत्, व्य. त., p. 219; [b] सिध्येत, व्य. सौ., p. 166; [b] सिध्येत, व्य. म., p. 25; [b] सिध्येत्.

[4] स्मृ. च., III, p. 192; स्मृ. कल्प., p. 30; व्य. सौ., p. 166; [c] साक्षिणा गदिते सत्ये; [d] तस्य राजा.

साक्षिसन्दूषणे[1a] कार्यं पूर्वं साक्षिविशोधनम् ।
शुद्धेषु साक्षिषु ततः पश्चात्कार्यं विशोधयेत् ॥ ३१

सत्यप्रशंसावचनैरनृतस्यापवर्जनैः[2b,c] ।
सभ्यैः सम्बोधनीयास्तु [d]धर्मशास्त्रार्थवेदिभिः ॥ ३२

आ जन्मनश्चा मरणात्[3] सुकृतं [e]यत्त्वयाऽर्जितम् ।
तत्सर्वं नाशमायाति [f]वितथस्याभिशंसनात् ॥ ३३

कूटसभ्यः[4g] कूटसाक्षी ब्रह्महा च समाः स्मृताः ।
भ्रूणहा [h]मित्रहा चैषां नाधिकः समुदाहृतः ॥ ३४

एवं[5] विदित्वा [i]यः साक्षी स यथार्थं वदेत्ततः ।
तेनेह कीर्तिमाप्नोति परत्र च शुभां गतिम् ॥ ३५

पुरुषाः[6] सन्ति लोभाद्ये कार्यं प्रब्रूयुरन्यथा ।
सन्ति चान्ये दुरात्मानः कूटलेख्यकृतो नराः ॥ ३६

प्रष्टव्याः[7] साक्षिणो ये तु वर्ज्याश्चैव नराधमाः ।
तानहं कथयिष्यामि साम्प्रतं शास्त्रचोदितान् ॥ ३७

[1] या. अप., p. 672; स्मृ. च., III, p. 194; [a] साक्षिणां दूषणे कार्यं पूर्वं साक्षिविशोधनं परा. मा., p. 105; साक्षिणो दूषणं हार्यं पूर्वसाक्षिपरीक्षणम्.

[2] व्य. मातृ., p. 329; स्मृ. कल्प. p. 31; [b] सत्यं; [c] अनृतस्य; [d] स्त्रप्रवे, व्य. सौ., p. 172; स्मृ. कल्पवत्पाठः.

[3] व्य. मातृ., p. 329; स्मृ. कल्प., p. 31; [e] यदुपार्जितं; [f] वितथस्य व्य. सौ., p. 172; स्मृ. कल्पवत्पाठः.

[4] या. अप., pp. 673 and 675; स्मृ. कल्प., p. 31; [h] वित्तहा, स्मृ. च., III, p. 200; व्य. मातृ., pp. 283 and 329; [h] मैत्रहा; [g] गूढसभ्यः; [h] वित्तहा इति च., p. 329 तमपृष्ठे पाठः, स. वि., p. 158; स्मृ. कल्पवत्पाठः, व्य. सौ., p. 172; [h] वृत्तहा.

[5] व्य. मातृ., p. 329; स्मृ. कल्प., p. 31; [i] तत्साक्षी यथाभूतं, व्य. सौ., p. 172; स्मृ. कल्पवत् पूर्वार्धमात्र.

[6] व्य. नि., p. 73.

[7] स्मृ. च., III, p. 195.

श्रौतस्मार्तक्रियायुक्ताः[1] लोभद्वेषविवर्जिताः ।
कुलीनाः साक्षिणोऽनिन्द्यास्तपोदानदयान्विताः ॥ ३८

असाक्षिणः

मातुः[2] पिता पितृव्यश्च भार्याया [a]भ्रातृमातरौ ।
भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः ॥ ३९

परस्त्रीपानसक्ताश्च[3 b] कितवाः [c]पूर्वदूषिताः ।
उन्मत्तार्ताः साहसिका नास्तिकाश्च न साक्षिणः ॥ ४०

सन्तोऽपि[4] न प्रमाणं स्युर्मृते धनिनि साक्षिणः ।
पुत्रे तु श्राविता ये स्युः स्वयमासन्नमृत्युना ॥ ४१

विहायोपानदुष्णीषं[5*] दक्षिणं [d]पाणिमुद्धरेत्[†] ।
हिरण्यं[e] गोशकृद्दर्भान् समादाय ऋतं वदेत् ॥ ४२

उपस्थिताः[6] परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिः ।
सकृत्प्रमादापराधिविप्रं[7] व्यापदि पीडितम् ।
भटादिभिर्वध्यमानं रक्षेदुक्त्वाऽनृतान्यपि ॥ ४३

[1] स्मृ. च., III, p. 196.

[2] व्य. म., p. 23; स्मृ. कल्प., p. 29; [a] मातुलौ, स्मृ. च., III, p. 196; स्मृ. कल्पवत्पाठः, (व्य. मातृ., p. 325; व्य. सौ., p. 155; वी. मि., p. 160; सर्वत्र स्मृ. कल्पवत्पाठः.

[3] स्मृ. च., III, p. 196; स्मृ. कल्प., p. 29; [c] सर्वे, व्य. सौ., p. 155; [b] यान, वी. मि., p. 160; [c] सर्वदूषकाः.

[4] व्य. नि., p. 83.

[5] या. अप., p. 675; स्मृ. कल्प., p. 33; स्मृ. च., III, p. 207; परा. मा., p. 112; व्य. सा., p. 60; * षौ; † उद्धरन्; स. वि., p. 157; [d] बाहुं; [e] हिरण्यगो; व्य. सौ., p. 181.

[6] या. अप., p. 676; स्मृ. कल्प., p. 39; स्मृ. च., III, p. 196; परा. मा., p. 107; व्य. सौ., p. 184; व्य. मा., p. 74.

[7] स्मृ. च., III, p. 207.

यस्याशेषः[1a,b] प्रतिज्ञार्थः साक्षिभिः[c,d]प्रतिवर्णितः ।
स जयी स्यादन्यथा तु [e]साध्यार्थं न समाप्नुयात् ॥ ४४

आहूतो[2] यत्र[f] नागच्छेत्साक्षी रोगविवर्जितः ।
ऋणं [g]दमं च दाप्यः स्यात्त्रिपक्षात्परतस्तु सः ॥ ४५

## साक्ष्युक्तिबलाबलविचारः

साक्षिद्वैधे[3] प्रभूताः[h] स्युर्ग्राह्याः[i] साम्ये [j]गुणान्विताः ।
गुणिद्वैधे क्रियायुक्तास्तत्साम्ये [k]शुचिमत्तराः ॥ ४६

अपृष्टाः[4] सत्यवचने[l] प्रश्नस्याकथने[m] तथा ।
साक्षिणः[5] सन्निरोद्धव्या गर्ह्या दण्ड्याश्च धर्मतः ॥ ४७

देशकालवयोद्रव्य[n]संज्ञाजातिप्रमाणतः[6] ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥ ४८

[1] या. अप., p. 678; स्मृ. च., III, p. 210; [a] यत्राशेषः; परा. मा., p. 114; व्य. मातृ., p. 332; [b] षं प्रतिज्ञातं; [d] तम् । व्य. त., p. 220; [a] यस्य शेषं प्रतिज्ञातं; [c] प्रतिपादितम्; स. वि., p. 145; [a] यत्रादोषः; या. वी., p. 510; यस्याशेषं प्रतिज्ञातं साक्षिभिः प्रतिपादितम्; [e] साक्ष्यर्थम्.

[2] या. अप., p. 676; स्मृ. कल्प., p. 40; परा. मा., p. 115; व्य. मातृ., p. 332; [f] यस्तु; [g] दण्डं; स. वि., p. 148; [f] यस्तु.

[3] परा. मा., p. 116; म. कु., p. 282; गुणिद्वैधे क्रियायुक्ताः इतिपरम्; स्मृ. कल्प., p. 40; व्य. नि., p. 97; [h] तु. बहवः; [k] मतिमत्तराः; व्य. मातृ., pp. 308 and 325; [i] ते; व्य. सौ., p. 194; [i] तु; [j] धिकाः; [k] स्मृतिमत्तराः; वि. से., p. 124; गुणिद्वैधे क्रियावतां इति परं पाठः.

[4] व्य. मातृ., p. 332; स्मृ. कल्प., p. 40; परा. मा., p. 82; [l] अपृष्टसत्य; [m] पृष्टस्य; व्य. सौ., p. 190; [m] सत्यस्य.

[5] व्य. मातृ., p. 332; स्मृ. कल्प., p. 40; परा. मा., p. 82; व्य. सौ., p. 190.

[6] परा. मा., p. 114; व्य. नि., p. 94; [n] जातिसंख्या.

देशकालवयोद्रव्यप्रमाणाकृतिजातिषु[1] ।
यत्र विप्रतिपत्तिः स्यात्साक्ष्यं तदपि नान्यथा ॥ ४९

निर्दिष्टेष्वर्थजातेषु[2a] साक्षी चेत्साक्ष्य आगते ।
न ब्रूयादक्षरसमं न तन्निगदितं भवेत् ॥ ५०

पूर्वपक्षे[3] प्रतिज्ञातमशेषं [b]प्रतिभावयेत् ।
ऊनाधिकं तु यत्रोक्तं न तन्निगदितं भवेत् ॥ ५१

ऊनमभ्यधिकं[4c] वार्थं [d]विब्रूयुर्यत्र साक्षिणः ।
तदर्थानुक्तविज्ञेयमेष[e] साक्षिविधिः स्मृतः ॥ ५२

साध्यार्थांशे[5] निगदिते साक्षिभिः सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकल्प्यते ॥ ५३

ऊनाधिकं[6] तु यत्र स्यात्साक्ष्यं तत्र विवर्जयेत् ।
साक्षी तत्र न दण्ड्यः स्यादब्रुवन् दण्डमर्हति ॥ ५४

[1] व्य. नि., p. 94.

[2] परा. मा., p. 114; व्य. नि., p. 94; [a] वादेषु.

[3] या. अप., p. 678; व्य. मातृ., p. 333; [b] परि.

[4] परा. मा., p. 114; व्य. नि., p. 94; [c] न्यूनं; [d] प्रब्रूयुः; [e] तदप्यनुक्तं; व्य. मा., p. 78; [c] न्यूनमप्यधिकं वार्थं प्रब्रूयुः; [e] तदप्यनुक्तं.

[5] व्य. नि., p. 97; व्य. मा., p. 78.

[6] व्य. नि., p. 97.

# ६

## ॥ लिखितम् ॥

साक्षिणामेष[1] निर्दिष्टः [a]सङ्ख्यालक्षणनिश्चयः ।
लिखितस्याधुना वच्मि [b]विधानमनुपूर्वशः ॥ १

ऋणादिकेऽपि[2] [c] समये[d] भ्रान्तिः सञ्जायते [e]यतः ।
धात्राऽक्षराणि सृष्टानि [f]पत्रारूढान्यतः पुरा ॥ २

### लेख्यलक्षणम्

देशाचारयुतं[3] वर्षमासपक्षादिवृद्धिमत्[g] ।
ऋणिसाक्षिलेखकानां हस्ताङ्कं लेख्यमुच्यते ॥ ३

### लेख्यभेदाः

राजलेख्यं[4] स्थानकृतं* स्वहस्तलिखितं तथा ।
लेख्यं [h]तत्त्रिविधं प्रोक्तं भिन्नं [i]तद्बहुधा पुनः ॥ ४

[1] परा. मा., p. 119; स्मृ. कल्प., p. 41; व्य. मातृ., p. 336; [a] निर्णयः; [b] यथावदतु; व्य. सौ., p. 199; व्य. मातृवत्पाठः; वी. मि., p. 188.

[2] परा. मा., p. 119; स्मृ. कल्प., p. 41; [c] षाण्मासिके; व्य. मातृ., p. 336; [c] षाण्मासिके; [d] विषये; व्य. त., p. 220; व्य. मातृवत्पाठः; आ. त., p. 347; [e] नृणां; [c] षाण्मासिके; ज्यो. त., p. 658; व्य. मातृ-वत्पाठः; व्य. सौ., p. 199; [c] षाण्मासिके; [f] यन्त्रा; वी. मि., p. 188; [c] षाण्मासिके; [d] विषये; [e] नृणाम्.

[3] परा. मा., p. 119; स्मृ. कल्प., p. 41; [g] पक्षाह; (व्य. मातृ., p. 337; व्य. सा., p. 63; व्य. सौ., p. 200; स्मृ. कल्प. वत्पाठः.

[4] या. अप., p. 683; स्मृ. कल्प., p. 41; परा. मा., p. 119; व्य. नि., p. 68; [i] दशधा; व्य. मातृ., p. 336; व्य. सा., p. 63; [h] तु; व्य. सौ., p. 199; [h] तु; वी. मि., p. 188; व्य. म., p. 15; व्य. मा., p. 79; * स्थानलेख्यं; [h] तु; [i] दशधा.

भागदानक्रयाधीनां[1a,b] संविद्दासऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥ ५

विभागपत्रमित्येतद्भागानां[2] निर्णये कृतम् ।
सीमाविवादे निर्णीते सीमापत्रमिति स्मृतम् ॥ ६

दानलेख्यं[3] भागलेख्यं* सीमालेख्यं तथैव च ।
क्रयलेख्यं दासलेख्यमाधिलेख्यं ततः परम् ॥ ७

संविदुद्दामलेख्यं[4] च जयपत्रकमेव च ।
सन्धिपत्रं तथैवैतत् क्रियाभेदादनेकधा ॥ ८

आध्यर्थमाधिलेख्यं[5] स्याद्दासार्थं दासपत्रकम् । ९

समीहितार्थसिध्यर्थं *ग्रामश्रेणिगणादिभिः ॥
शास्त्राविरोधि[6] धर्मार्थं कृतं संवित्तिपत्रकम् । १०

भ्रातरः[7] संविभक्ता ये [c]स्वरुच्या तु परस्परम् ।
विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥ ११

[1] या. अप., p. 683; स्मृ. कल्प., p. 41; [a] भावाधानक्रयाधान; स्मृ. च., III, p. 136; [b] क्रयाधान; परा. मा., p. 119; व्य. मातृ., p. 337; [b] क्रियाधान; व्य. सा., p. 63; स्मृ. च. वत्पाठः; व्य. सौ., p. 199; व्य. मातृकावत्पाठः; वी. मि., p. 188; [b] क्रयाधान; व्य. म., p. 16.

[2] व्य. नि., p. 68.

[3] व्य. नि., p. 68; व्य. मा. p. 79; * भङ्ग.

[4] व्य. नि., p. 68; व्य. मा., p. 79.

[5] व्य. नि., p. 69; व्य. मा., p. 80; * ग्रामे.

[6] व्य. नि., p. 69; व्य. मा., p. 80.

[7] या. अप., p. 683; स्मृ. कल्प., p. 41; स्मृ. च., III, p. 137; परा. मा., p. 120; व्य. मातृ., p. 337; [c] विरुद्धत्वात्; दा. त., p. 178; व्य. सा., p. 65; व्य. सौ., p. 199; वी. मि., p. 189.

भूमिं[1] दत्वा [a]यस्तु पत्रं कुर्याच्चन्द्रार्ककालिकम् ।
अनाच्छेद्यमनाहार्यं[2] दानलेख्यं तु [b]तद्विदुः ॥ १२

गृहक्षेत्रादिकं[3] क्रीत्वा [c]तुल्यमूल्याक्षरान्वितम् ।
पत्रं [d]कारयते [e]यत्तु *क्रयलेख्यं तदुच्यते ॥ १३

जङ्गमं[4] स्थावरं [f]बन्धं *दत्वा लेख्यं करोति [g]यत् ।
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तु [h]तत्स्मृतम् ॥ १४

ग्रामो[5]* [i] देशश्च [j]यत्कुर्यान्मत्तलेख्यं परस्परम् ।
राजाविरोधि [k]धर्मार्थं [l]संवित्पत्रं वदन्ति तत् ॥ १५

[1] या. अप., p. 683; स्मृ. कल्प., p. 41; [a] तु यः; स्मृ. च., III, p. 137; [a] तु यत्; परा. मा., p. 120; व्य. नि., p. 68; [a] तु यत्; व्य. मातृ., p. 337; [a] तु. यः; शु. त., p. 364; व्य. सा., p. 65; [a] तु यत्; व्य. सौ., p. 199; वी. मि., p. 189; [a] तु यत्; व्य. म., p. 16; व्य. मा., p. 79; [a] तु यत्कुर्याल्लेख्यं.

[2] या. अप., p. 683; स्मृ. कल्प., p. 41; स्मृ. च., III, p. 137; परा. मा., p. 120; व्य. नि., p. 68; [b] तत्स्मृतं; व्य. मातृ., p. 337; शु. त., p. 364; व्य. सा., p. 65; व्य. सौ., p. 199; वी. मि., p. 189; व्य. म., p. 16; व्य. मा., p. 79; [b] तत्स्मृतम्.

[3] या. अप., p. 683; स्मृ. कल्प., p. 41; स्मृ. च., III, p. 137; परा. मा., p. 120; व्य. नि., p. 68; [c] मूला; व्य. मातृ., p. 337; [e] यस्तु; प्रा. त., p. 514; व्य. सा., p. 65; [e] यत्र; व्य. सौ., p. 200; [d] तु कारयेद्यत्तु; वी. मि., p. 189; व्य. म., p. 16; व्य. मा., p. 80; [c] मूल्यक्रया; * लेख्यं तत्क्रयमुच्यते.

[4] या. अप., p. 683; स्मृ. कल्प., p. 41; [g] यः; स्मृ. च., III, p. 137; परा. मा., p. 120; व्य. मातृ., p. 337; [f] दत्वा बन्धं; [g] यः; व्य. सा., p. 65; * कृत्वा; व्य. सौ., p. 200; [g] यः; [h] तदुच्यते; वी. मि., p. 189; व्य. सौ. वत्पाठः; व्य. म., p. 16.

[5] या. अप., p. 683; स्मृ. कल्प., p. 41; [j] यः कुर्यान्मतं; [l] सन्धिपत्रं; स्मृ. च., III, p. 137; परा. मा., p. 120; [i] मादिसमया; [k] र्थे; व्य. मातृ., p. 337; [j] यः कुर्यान्मतं; व्य. सा., p. 65; * प्रमोदसमयं; व्य. सौ., p. 200; वी. मि., p. 189; [j] यत्कुर्यात्सत्य; व्य. म., p. 16.

वस्त्रान्नहीनः[1]* कान्तारे लिखितं कुरुते तु [a]यत् ।
कर्माहं[b] ते करिष्यामि दासपत्रं [c]तदिष्यते ॥ १६

धनं[2] वृध्या[d] गृहीत्वा* तु स्वयं †कुर्याच्च कारयेत् ।
उद्धारपत्रं[e] तत्प्रोक्तमृणलेख्यं[f] मनीषिभिः ॥ १७

पूगश्रेणिगणादीनां[3] या स्थितिः परिकीर्तिता ।
तस्यास्तु[4] साधनं लेख्यं न दिव्यं न च साक्षिणः ॥ १८

पूगश्रेण्यादिकानां[5] तु समयस्य स्थितेः कृतम् ।
स्थितिपत्रं तु तत्प्रोक्तं मन्वादिस्मृतिवेदिभिः ॥ १९

## राज्ञो दानशासनम्

दत्वा[6] भूम्यादिकं राजा ताम्रपत्रे [g]पटेऽथवा ।
शासनं [h]कारयेद्धर्म्यं [i]स्थानवंशादिसंयुतम् ॥ २०

मातापित्रोरात्मनश्च[7] पुण्यायामुकसूनवे ।
दत्तं मयाऽमुकायाद्य दानं सब्रह्मचारिणे ॥ २१

[1] या. अप., p. 683; स्मृ. कल्प., p. 41; स्मृ. च., III, p. 137; [b] कर्माणि; [c] तदुच्यते; परा. मा., p. 120; व्य. मातृ., p. 337; स्मृ. च. वत्पाठः; व्य. सा., p. 65; * हीनं; व्य. सौ., p. 200; [a] यः; [b] कर्माणि; [c] तदुच्यते; व्य. म., p. 16.

[2] या. अप., p. 683; स्मृ. कल्प., p. 41; [e] उज्जाम; स्मृ. च., III, p. 137; परा. मा., p. 120; व्य. नि., p. 69; [d] गृहीला वृध्यर्थं; [e] उद्दाम; व्य. मातृ., p. 337; व्य. सा., p. 65; * गृहीतं; † तु; व्य. सौ., p. 200; [e] उद्दाम; [f] ऋणपत्रं; वी. मि., p. 189; [e] उज्जार; व्य. म., p. 16; व्य. मा., p. 80; [d] गृहीला वृध्यर्थं; [e] उद्दाम.

[3] व्य. नि., p. 61.

[4] व्य. नि., p. 61.

[5] स. वि., p. 116.

[6] परा. मा., p. 120; स्मृ. च., III, p. 125; [g] तथा पटे; [h] धर्म्यं; व्य. मातृ., p. 337; [g] अथवा पटे; स. वि., p. 27; स्मृ. च. वत्पाठः; वी. मि., p. 192; [i] वंश्यादि.

[7] वी. मि., p. 192.

अनाच्छेद्यमनाहार्यं[1] सर्वं[a] भाव्यविवर्जितम् ।
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम् ॥ २२

दातुः[2] पालयितुः [b]स्वर्गं हर्तुर्नरकमेव च ।
षष्टिवर्षसहस्राणि[c] दानच्छेदफलं[d] लिखेत् ॥ २३

समुद्रावर्षमासादि[3e] धनाध्यक्षाक्षरान्वितम् ।
ज्ञातं[4] मयेति लिखितं सन्धिविग्रहलेखकैः ॥ २४

एवंविधं[5] राजकृतं शासनं तदुदाहृतम् ।

## प्रसादलिखितम्

देशादिकं[f] यस्य राजा [g]लिखितं तु प्रयच्छति ।
सेवाशौर्यादिना[6] तुष्टः प्रसादलिखितं [h]हि तत् ॥ २५

[1] परा. मा., p. 120; स्मृ. च., III, p. 127; व्य. सा., p. 64; [a] सर्वभाव; वी. मि., p. 192; अर्धयोः वैपरीत्यं; [a] सर्वभाग.

[2] परा. मा., p. 121; स्मृ. च., III, p. 127; [b] स्वर्गं; [c] षष्टिं; व्य. सा., p. 64; [b] स्वर्गं; व्य. सौ., p. 208; [b] स्वर्गः; [d] दाता च्छेदफलं लभेत्; वी. मि., p. 192; [b] षष्टिं.

[3] परा. मा., p. 121; वी. मि., p. 192; [e] समुद्रं.

[4] परा. मा., p. 121; वी. मि., p. 192; अस्यापि पद्यस्य विपरीततया पाठः.

[5] परा. मा., p. 121; स्मृ. कल्प., p. 42; [g] लिखितेन; स्मृ. च., III, p. 132; [g] लिखितेन; व्य. मातृ., p. 337; [f] तदा देशादिकं; व्य. सौ., p. 208; [f] यस्य देशादिकं राजा; वी. मि., p. 192; [g] लिखिते न.

[6] स्मृ. च., III, p. 132; स्मृ. कल्प., p. 42; परा. मा., p. 121; [h] तु, व्य. मातृ., p. 337; [h] तु; व्य. सौ., p. 208; वी. मि., p. 192; [h] तथा.

## जयपत्रम्

पूर्वोत्तरक्रियावादनिर्णयान्ते[1*a] यदा नृपः ।
प्रदद्याज्जयिने †लेख्यं जयपत्रं तदुच्यते ॥ २६

यद्वृत्तं[2] व्यवहारे[b] तु पूर्वपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं [c]जयपत्रोऽखिलं लिखेत् ॥ २७

साधयेत्साध्यमर्थं[3] तु चतुष्पादन्वितं जये ।
राजमुद्रान्वितं चैव जयपत्रकमिष्यते ॥ २८

अन्यवाद्यादिहीनेभ्य[4d] इतरेषां[e] प्रदीयते ।
वृत्तानुवादसंसिद्धं[f] तच्च स्याज्जयपत्रकम् ॥ २९

## लेख्यदूषणानि

मुमूर्षुहीनलुप्तार्थैरुन्मत्तव्यसनातुरैः[5g,h] ।
विषोपधिबलात्कारकृतं[i] लेख्यं न सिध्यति ॥ ३०

[1] परा. मा., p. 121; व्य. सौ., p. 208; [a] क्रियायुक्तं निर्णयान्तं; वी. मि., p. 192; परा. मा., p. 200; [a] क्रियायुक्तं निर्णयान्तं; स्मृ. कल्प., p. 42; स्मृ. च., III, pp. 129 and 282; व्य. मातृ., pp. 309 and 353; व्य. त., p. 230; * पूर्वेणोक्तक्रियायुक्तं; † पत्रं; मि. बा., p. 319; [a] क्रियावादनिर्णयान्ते; वि. से., p. 125.

[2] स्मृ. च., III, p. 129; स्मृ. कल्प., p. 42; व्य. मातृ., pp. 309 and 337; [b] (व्यवहारेषु इति; 337; तमे पुटे; [c] अथ संलिखेत्); [c] अर्थिनं इति, 353, तमे, व्य. त., p. 230; [b] व्यवहारेषु; व्य. सौ., p. 208; [b] व्यवहारेषु; [c] पत्रं तु तल्लिखेत्; वि. से., p. 125; [b] व्यवहारात्तु.

[3] स्मृ. च., III, p. 131.

[4] स्मृ. च., III, p. 131; स. वि., p. 112; [d] विद्या; [e] उत्त; [f] व्यक्ता.

[5] परा. मा., p. 131; स्मृ. कल्प., p. 43; [i] निशो; स्मृ. च., III, p. 141; [h] शिशुभीतार्थस्त्री; [i] निशो; व्य. नि., p. 74; [h] शिशुभीतार्त; [i] निशो; व्य. मा., p. 84; स्मृ. च वत्पाठः; व्य. मातृ., p. 338; [h] शिशुभीतार्तैः स्त्रीमत्त; [i] देशोपधि बलात्कारैः; व्य. त., p. 221; [g] सुमृष्ट शिशुभीतार्तैः स्त्रीमत्त; [i] निशापत्सु बलात्कारैः; व्य. मा., p. 84; व्य. निवत्पाठः.

दूषितो[1] गर्हितः साक्षी [a]यत्रैको विनिवेशितः ।
कूटलेख्यं तु [b]तत्प्राह लेखको वाऽपि [c]तादृशः ॥ ३१

यदुज्वलं[2][d] चिरकृतं मलिनं [e]स्वल्पकालिकम् ।
भग्नं[f] म्लिष्टाक्षरयुतं लेख्यं कूटत्वमाप्नुयात् ॥ ३२

दर्पणस्थं[3] यथा विम्बमसत्सदिव दृश्यते ।
तथा लेख्यसविम्बानि कुर्वन्ति कुशला जनाः ॥ ३३

तथ्येन[4] हि प्रमाणं तु दोषेणैव तु दूषणम् ।
एवं दुष्टं नृपस्थाने यस्मिंस्तद्धि विचार्यते ॥ ३४

विमृश्य[5] ब्राह्मणैः सार्धं वक्तृदोषं निरूपयेत् । ३५

येन ते कूटतां यान्ति साक्षिलेखककारकाः ।
तेन दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत् ॥ ३६

दत्तं[6] लेख्ये स्वहस्तं तु ऋणिको यदि निह्नुते ।
पत्रस्थैः[7] साक्षिभिर्वाचा लेखकस्य मतेन च ॥ ३७

[1] या. अप., p. 686; स्मृ. कल्प., p. 43; [b] तत्प्राहुः; [c] तद्विधः (परा. मा., p. 131; व्य. नि., p. 74; व्य. सौ., p. 213; स्मृ. कल्पवत्पाठः); वी. मि., p. 198; [a] एकोऽपि; [b] तत्प्रोक्तं; [c] तद्विधः; व्य. मा., p. 84; वी. मि वत्पाठः.

[2] या. अप., p. 686; स्मृ. कल्प., p. 43; [f] भग्नोन्मृ; परा. मा., p. 131; [d] अत्युज्वलं; [e] चाल्प; [f] भग्नोन्मृ; व्य. नि., p. 74; स्मृ. कल्पवत्पाठः; व्य. सौ., p. 214; [f] भग्नोन्मृ; व्य. मा., p. 84; स्मृ. च वत्पाठः.

[3] व्य. मा., p. 84.

[4] परा. मा., p. 132.

[5] परा. मा., p. 133.

[6] परा. मा., p. 133.

[7] परा. मा., p. 133.

5

स्थानभ्रष्टास्त्वकान्तिस्थाः[1][a] सन्दिग्धा लक्षणच्युताः ।
यत्रैवं [b]स्युः स्थिता वर्णा लेख्यं दुष्टं [c]तदा भृगुः ॥ ३८

उद्धरेल्लेख्यमाहर्ता[2] तत्पुत्रो भुक्तिमेव [d]तु ।
अभियुक्तः [e]प्रमीतश्चेत् [f]तत्पुत्रस्तत्समुद्धरेत् ॥ ३९

ज्ञात्वा[3] कार्यं[g] देशकालकुशलाः[h] कूटकारकाः ।
कुर्वन्ति सदृशं लेख्यं तद्यत्नेन विचारयेत् ॥ ४०

लेख्यमालेख्यवत्केचिल्लिखन्ति[4] कुशला जनाः ।
तस्मान्न लेख्यसामर्थ्यात्सिद्धिरैकान्तिकी मता ॥ ४१

स्त्रीबालार्तान्[5][i] लिप्यविज्ञान् वञ्चयन्ति [j]स्वबान्धवाः ।
लेख्यं [k]कृत्वा स्वनामाङ्कं ज्ञेयं [l]युक्त्यागमैस्तु तत् ॥ ४२

त्रिविधस्यास्य[6][m] लेख्यस्य भ्रान्तिः सञ्जायते यदा ।
ऋणिसाक्षिलेखकानां [n]हस्तोक्त्या [o]शोधयेत्ततः ॥ ४३

[1] या. अप., p. 687; व्य. नि., p. 73; [a] श्च मलिना; [b] सुस्थिता; [c] तु तद्भवेत्.

[2] स्मृ. च., III, p. 171; स्मृ. कल्प., p. 43; [d] च; [f] पुत्रोऽपि; व्य. त., p. 222; [d] हि; [f] सुतोऽपि तदुद्धरेत्; व्य. सौ., p. 219; [d] च; [f] पुत्रोऽपि; वी. मि., p. 199; [e] सभातश्चेत् तत्पुत्रोऽपि तदुद्धरेत्; वि. से., p. 114; व्य. त वत्पाठः.

[3] स्मृ. च., III, p. 14; स्मृ. कल्प., p. 43; [h] देशकार्यौ; स. वि., p. 122; [g] काले देशकार्ये; व्य. सौ., p. 215; [g] कालं च देशं च; वी. मि., p. 197; [g] देशं च कालं च.

[4] व्य. मा., p. 85.

[5] स्मृ. च., III, p. 148; स्मृ. कल्प., p. 43; [i] र्तलिपिज्ञांश्च; [l] ततः; स. वि., p. 122; [k] कृत्वान्य; व्य. सौ., p. 215; [i] र्तलिपिज्ञांश्च; [j] वान्; वी. मि., p. 197; [i] लिपिज्ञांश्च; [l] ततः; व्य. मा., p. 85.

[6] परा. मा., pp. 129 and 134; स्मृ. कल्प., p. 43; [o] साधयेत्; व्य. सा., p. 71; [o] साधयेत्; व्य. सौ., p. 215; [m] अपि; [n] स्वहस्तोक्त्या तु साधयेत्.

उद्यामसुदयादानादाधानं[1] फलसङ्ग्रहात् ।
प्रतियोगिधनाढ्यत्वाज्ज्ञेयं[2] यत्रोपधिः कृतः ॥ ४४

दर्शितं[3] प्रतिकालं यच्छ्रावितं स्मारितं च यत् ।
लेख्यं सिध्यति सर्वत्र मृतेष्वपि हि साक्षिषु ॥ ४५

वाचकैर्यत्र[4] सामर्थ्यमक्षराणां विहन्यते ।
क्रियाणां सर्वनाशः स्यादनवस्था च जायते ॥ ४६

लेख्यं[5] त्रिंशत्समातीतमदृष्टाश्रावितं[a] च यत् ।
न [b]तत्सिद्धिमवाप्नोति [c]तिष्ठत्स्वपि हि साक्षिषु ॥ ४७

प्रयुक्ते[6] शान्तलाभे तु लिखितं यो न दर्शयेत् ।
न याचते च ऋणिकं [d]तत्सन्देहमवाप्नुयात् ॥ ४८

कुलश्रेणिगणादीनां[7] यथाकालं[e] प्रदर्शितम्[f] ।
श्रावयेत्स्मारयेच्चैव [g]तथा स्याद्बलवत्तरम् ॥ ४९

यदि[8] लब्धं भवेत्किञ्चित् प्रज्ञप्तिर्वा तथा भवेत् ।
प्रमाणमेव लिखितं मृता यद्यपि साक्षिणः ॥ ५०

[1] व्य. सौ., p. 215 ; स्मृ. कल्प., p. 43.

[2] व्य. सौ., p. 215 ; स्मृ. कल्प., p. 43.

[3] व्य. मातृ., p. 339.

[4] स्मृ., च., III, p. 151 ; स वि., p. 123.

[5] या. अप., p. 692 ; व्य. नि., p. 72 ; [b] लेख्यं सिद्धिमाप्नोति ; व्य. मातृ., p. 340 ; [a] अदृष्टश्रोत्रियं ; व्य. सौ., p. 222 ; [c] सन्तिष्ठत्स्वपि ; व्य. मा., p. 88.

[6] या. अप., p. 692 ; व्य. सौ., p. 222 ; [d] सन्दिग्धं.

[7] व्य. मा., p. 87 ; स्मृ. कल्प., p. 44 ; [f] प्रदर्शयेत् ; [g] यथा ; व्य. सौ., p. 220 ; [e] यथार्थलं ; [f] प्रदर्शयेत् ; [g] यथा ; वी. मि., p. 200 ; [f] प्रदर्शयेत्.

[8] व्य. मा., p. 87.

आढ्यस्य[1] निकटस्थस्य यच्छक्तेन न याचितम् ।
शुद्धर्णाशङ्कया[2a] तत्र[b] लेख्यं दुर्बलतामियात् ॥ ५१

उन्मत्तजडबालानां[3c] राजभीतप्रवासिनाम्[d] ।
अप्रगल्भभयार्तानां न लेख्यं हानिमाप्नुयात् ॥ ५२

अथ[4] पञ्चत्वमापन्नो लेखकः साक्षिभिः सह ।
तत्स्वहस्तादिभिस्तेषां* विशुध्येत न संशयः ॥ ५३

ऋणिस्वहस्तसन्देहे[5] जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥ ५४

लेख्ये[6] संशयमापन्ने साक्षिलेखककर्तृभिः ।
दुष्टेषु तेषु तद्धस्तकृतपूर्वाक्षरादिभिः ॥ ५५

न[7] जातु हीयते लेख्यं साक्षिभिः शपथेन वा ।
अदर्शनाश्राविताभ्यां[e] हानिं प्राप्नोत्युपेक्षया ॥ ५६

[1] या. अप., p. 692; स्मृ. कल्प., p. 44; व्य. मातृ., p. 340; व्य. सौ., p. 222.

[2] या. अप., p. 692; स्मृ. कल्प., p. 44; [b] तत्तु; व्य. मातृ., p. 340; व्य. सौ., p. 222; [a] शुद्धार्णाशङ्कया तत्तु.

[3] या. अप., p. 692; स्मृ. कल्प., p. 44; परा. मा., p. 135; [c] मूकानां; व्य. मातृ., p. 340; व्य. सौ., p. 223; वी. मि., p. 198; [d] भीति; व्य. मा., p. 89.

[4] व्य. नि., p. 72; व्य. सा., p. 72; * शेषम्.

[5] व्य. सा., p. 72.

[6] व्य. नि., p. 72.

[7] स्मृ. च. III, p. 151; व्य. नि., p. 72; [e] नादश्रवणात्; व्य. मातृ., pp. 314 and 340; पूर्वार्धं परम्.

अतः[1]* परीक्ष्यमुभयमेतद्राज्ञा विशेषतः ।
एकमेव[2] भवेल्लेख्यमेकस्यार्थस्य सिद्धये ॥ ५७

अनेकेषु तु लेख्येषु दोषमुत्पादयेदपि ।
देशाचारविरुद्धं[3] यत्सन्दिग्धं क्रमवर्जितम् ।
कृतमस्वामिना यच्च साध्यहीनं च दुष्यति ॥ ५८

[1] व्य. नि., p. 73; व्य. मा., p. 85; * परीक्ष्यमेतदुभयं स्वयं राज्ञा विशेषतः । लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः ।

[2] व्य. नि., p. 74.

[3] व्य. नि., p. 74.

## ॥ भुक्तिः ॥

धनमूलाः[1] क्रियाः सर्वा यत्नास्तत्साधने मताः ।
वर्धनं रक्षणं भोग इति तस्य विधिक्रमः ॥

### धनप्रभेदाः

तत्पुनस्त्रिविधं[2] ज्ञेयं शुक्लं शबलमेव च ।
कृष्णं च तत्र विज्ञेयः प्रभेदः सप्तधा पुनः ॥ २
श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम्[3] ।
धनं सप्तविधं शुक्लमुभयो ह्यस्य तद्विधः ॥ ३
कुसीदकृषिवाणिज्य-शुल्कशिल्पानुवृत्तिभिः[4] ।
कृतोपकारादाप्तं च शबलं समुदाहृतम् ॥ ४
पाशकद्यूतदूतार्थप्रतिरूपकसाहसैः[5] ।
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम् ॥ ५
तेन[6] क्रयो विक्रयश्च दानं ग्रहणमेव च ।
विविधाश्च प्रयुज्यन्ते क्रियासंभोगमेव च ॥ ६
यथाविधेन[7] द्रव्येण यत्किञ्चित्कुरुते नरः ।
तथाविधमवाप्नोति तत्फलं प्रेत्य चेह च ॥ ७
तत्पुनर्द्वादशविधं[8] प्रतिवर्णाश्रयं स्मृतम् ।
साधारणं स्यात्त्रिविधं शेषं नवविधं स्मृतम् ॥ ८
क्रमागतं[9] प्रीतिदायं प्राप्तं च सह भार्यया ।
अविशेषेण सर्वेषां वर्णानां त्रिविधं स्मृतम् ॥ ९

[1] व्य. मा., p. 90.
[2-4] व्यवहारमाला., p. 90.
[5-9] व्य. मा., p. 91.

वैशेषिकं[1] धनं ज्ञेयं ब्राह्मणस्य त्रिलक्षणम् ।
प्रतिग्रहणलब्धं यद्याज्यं तच्छिष्यतस्तथा ॥ १०

त्रिविधं[2] क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् ।
युद्धोपलब्धं करतो दण्डाच्च व्यवहारतः ॥ ११

वैशेषिकं[3] धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम् ।
कृषिगोरक्षवाणिज्यं शूद्रस्यैषामनुग्रहात् ॥ १२

सर्वेषामेव[4] वर्णानामेवं धर्म्यो धनागमः ।
विपर्ययादधर्मः स्यान्न चेदापद्गरीयसी ॥ १३

आपत्स्वनन्तरावृत्तिर्ब्राह्मणस्य[5] विधीयते ।
वैश्यवृत्तिश्च तस्योक्ता न जघन्या कथञ्चन ॥ १४

कथञ्चन[6] न कुर्वीत ब्राह्मणः कर्म वार्षलम् ।
वृषलः कर्म न ब्राह्मं पतनीये हि ते तयोः ॥ १५

उत्कृष्टं[7] चापकृष्टं च तयोः कर्म न विद्यते ।
मध्यमे कर्मणी हित्वा सर्वसाधारणी हि ते ॥ १६

आपदं[8] ब्राह्मणस्तीर्त्वा क्षत्रवृत्त्या भृते जने ।
उत्सृजेत्क्षत्रवृत्तिं तां कृत्वा पावनमात्मनः ॥ १७

तस्यामेव[9] तु यो भुक्तौ ब्राह्मणो रमते रसात् ।
काण्डपृष्ठश्च्युतो मार्गादङ्कितोऽयं प्रकीर्तितः ॥ १८

स्वकुलं[10] पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः ॥ १९

[1–4] व्य. मा., p. 92.

[5–10] व्य. मा., p. 93.

दिवाकृते[1] कार्यविधौ ग्रामेषु नगरेषु च ।
सम्भवे साक्षिणां चैव [a]न दिव्या भवति क्रिया ॥ २०

द्वारमार्गक्रियाभोगजलवाहादिके[2] तथा ।
भुक्तिरेव तु गुर्वी स्यान्न लेख्यं न च साक्षिणः ॥ २१

एतद्विधानमाख्यातं[3] साक्षिणां लिखितस्य च ।
सम्प्रति[b] स्थावरप्राप्तेर्भुक्तेश्च[c] विधिरुच्यते ॥ २२

विद्यया[4] क्रयबन्धेन [d, e]शौर्यभागान्वयागतम् ।
सपिण्डस्याप्रजस्यांशं स्थावरं [f]सप्तधाऽऽप्यते ॥ २३

भोगाः सप्तविधः

पित्र्ये[5 g] लब्धक्रयाधाने* रिक्थशौर्यप्रवेदनात्[h] ।
प्राप्ते[i] सप्तविधे [j]भोगः †सागमः सिद्धिमाप्नुयात् ॥ २४

क्रमागतः[6] शासनिकः [k]क्रयाधानसमन्वितः ।
एवंविधस्तु यो भोगः स तु सिद्धिमवाप्नुयात् ॥ २५

[1] व्य. नि., p. 59; स्मृ. कल्प., p. 24; स. वि., p. 106; [a] दैवी न; व्य. सौ., p. 123.

[2] व्य. नि., p. 61.

[3] परा. मा., p. 139; स्मृ. कल्प., p. 45; [b] साम्प्रतं स्थावरे प्राप्ते भुक्तस्य; व्य. नि., p. 100; [b] साम्प्रतं स्थावरे प्राप्ते; व्य. मातृ., p. 341; [c] स्थावरे; व्य. सौ., p. 225; व्य. निवत्पाठः; वी. मि., p. 203; [c] स्थावरे.

[4] या. अप., p. 635; स्मृ. कल्प., p. 45; [f] स्मृतं; स्मृ. च., III, p. 161; [d] शौर्याप्तं भार्ययान्वितम्; परा. मा., p. 139; व्य. सा., p. 49; [d] शौर्यभार्यार्थयोगतः; [f] स्मृतं; व्य. सौ., p. 225; वी. मि., p. 203; [e] भार्या; [f] कृतं.

[5] वी. मि., p. 203; स्मृ. कल्प., p. 45; [h] अथ; व्य. नि., p. 100; [g] पित्र्य; [i] धान; [j] भोगे; व्य. सा., p. 50; [h] वाक्य; व्य. सौ., p. 225; [h] अथ; व्य. मा., p. 94; [g] पित्र्य; * धानरिक्थ; † स मार्ग.

[6] वी. मि., p. 203; स्मृ. कल्प., p. 45; व्य. नि., p. 100; [k] गमागतः; व्य. सा., p. 50; [k] नागमान्वितः; व्य. सौ. p. 225.

संविभागक्रयप्राप्तं[1 a*] पित्र्यं[b] लब्धं च राजतः ।
स्थावरं सिद्धिमाप्नोति [c]भुक्त्वा [d]हानिमुपेक्षया ॥ २६

प्राप्तमात्रं[2] येन भुक्तं [e, f]स्वीकृत्यापरिपन्थितम् ।
तस्य तत्सिद्धिमाप्नोति [g]हानिं चोपेक्षया [h]यथा ॥ २७

अध्यासनात्समारभ्य[3 i] भुक्तिर्यस्याविघातिनी* ।
त्रिंशद्वर्षाण्यविच्छिन्ना[j] तस्य तां न [k]विचालयेत् ॥ २८

न[4] स्त्रीणामुपभोगः स्याद्विना लेख्यं कथञ्चन ।
राजश्रोत्रियवित्ते च जडबालधनेन च ॥ २९

भुक्त्या[5] केवलया नैव [l]भुक्तिः सिद्धिमवाप्नुयात् ।
आगमेनापि शुद्धेन द्वाभ्यां सिध्यति नान्यथा ॥ ३०

बालश्रोत्रियवित्ते[6] च प्राप्ते च पितृतः क्रमात् ।
नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ॥ ३१

[1] या. अप., p. 635; स्मृ. कल्प., p. 45; [a] सन्धि; [c] भुक्त्वा; व्य. नि., p. 100; [b] पित्रा लब्धं तु; [c] भुक्त्वा; व्य. मातृ., p. 344; [d] हानिश्चोपेक्षया तथा दा. भा., p. 179; व्य. त., p. 223; [c] भुक्त्वा. पूर्वार्धं परम् । व्य. सा., p. 50; * क्रम; [c] भुक्त; व्य. सौ., p. 225; [c] भुक्त्वा; वी. मि., p. 203; [b] पितृलब्धं; [c] भुक्त्वा. वि. से., p. 89.

[2] या. अप., p. 635; स्मृ. कल्प., p. 45; [e] स्वीकृत्य; [g] हानिश्च; दा. त., p. 179; [h] तथा; शु. त., p. 348; [f] पन्थिनं; [h] तथा; व्य. सा., p. 50; शु. तवत्पाठः; व्य. सौ., p. 225; [h] नरः; वी. मि., p. 203.

[3] या. अप., p. 635; स्मृ. कल्प., p. 45; स्मृ. च., III, p. 161; [j] त्वविच्छिन्ना; व्य. नि., p. 100; व्य. मातृ., pp. 342 and 344; [i] 342 तमपुटे अभ्यासनात्; व्य. सा., p. 50; * यस्य विघातिनी; व्य. सौ., p. 225; [k] विचारयेत्; वी. मि., p. 204.

[4] स्मृ. च., III, p. 159.

[5] स्मृ. च., III, p. 161; स. वि., pp. 131 and 163; [l] भूमि इति 131 तमपुटे; [l] द्वाभ्यां इति 163 पुटे.

[6] वी. मि., p. 221.

पशुस्त्रीपुरुषादीनामिति[1] धर्मो व्यवस्थितः ।
यद्येकशासने[2][a] ग्रामक्षेत्रारामाश्च[b] लेखिताः ॥ ३२
एकदेशोपभोगेऽपि[c] सर्वे भुक्ता भवन्ति ते ।
आगमोऽपि[3] बलं नैव भुक्तिः स्तोकाऽपि यत्र नो ॥ ३३
अनुमानाद्गुरुः[4][d] साक्षी साक्षिभ्यो लिखितं [e]गुरु ।
अव्याहता त्रिपुरुषी [f]भुक्तिरेभ्यो गरीयसी ॥ ३४
अनुमानं[5] वसत्यत्र[g] साक्षी चामरणाद्भवेत् ।
अव्याहतं [h]लेखभोगं प्रमाणं तु [i]त्रिपौरुषम् ॥ ३५
पितापितामहो[6] यस्य जीवेच्च प्रपितामहः ।
त्रिंशत्समा तु या भुक्ता भूमिरव्याहता परैः ॥ ३६
भुक्तिः[7] सा पौरुषी ज्ञेया द्विगुणा च [j]द्विपूरुषी ।
त्रिपूरुषी[k] च त्रिगुणा परतः [l]स्याच्चिरन्तना ॥ ३७
यत्राहृतोऽभियुक्तः[8] स्याल्लेख्यं साक्षी तदा गुरुः ।
तदभावे तु पुत्राणां भुक्तिरेका गरीयसी ॥ ३८

[1] वी. मि., p. 221.

[2] या. अप., p. 635 ; स्मृ. कल्प., p. 45 ; स्मृ. च., III, p. 154 ; [a] यस्य परा. मा., p. 149 ; व्य. नि., p. 103 ; [c] देशेऽपि भोगेऽपि, दा. त., p. 179 ; व्य. सौ., p. 231 ; वी. मि., p. 221 ; [b] ग्रामे.

[3] वी. मि., p. 223.

[4] व्य. मातृ., p. 350 ; स्मृ., कल्प., p. 46 ; व्य. नि., p. 103 ; व्य. त., p. 224 ; [d] गुरु ; [f] तेभ्यः, व्य. सौ., p. 231 ; [d] वरं ; [e] वरं, वि. से., p. 90.

[5] व्य. मातृ., p. 350 ; स्मृ. कल्प., p. 46 ; [g] सद्य एव ; [h] लेख्य ; [i] पूरुषं, व्य. नि., p. 103 ; स्मृ. कल्पवत्पाठः.

[6] परा. मा., p. 142 ; स्मृ. च., III, p. 164.

[7] परा. मा., p. 142 ; स्मृ. च., III, p. 164 ; [j] पौरुषी ; [k] त्रिपौरुषी ; [l] चिरन्तनी.

[8] स्मृ. च., III, p. 164.

आहर्ता[1] शोधयेद्भुक्तिमागमं[a,b] वाऽपि[c] संसदि।
तत्पुत्रो[d] भुक्तिमेवैकां [e]पौत्रादिस्तु न किञ्चन॥ ३९
रिक्थिभिर्वा[2 f] परैर्द्रव्यं समक्षं यस्य दीयते।
अन्यस्य भुञ्जतः पश्चान्न स तल्लब्धुमर्हति॥ ४०
पश्यन्नन्यस्य[3] ददतः क्षितिं यो न [g]निवारयेत्।
सताऽपि[h] लेख्येन भुवं न [i]पुनस्तामवाप्नुयात्॥ ४१
ऋक्थिभिर्वापरैर्वाऽपि[4] दत्तं तेनैव तद्गुरुः। ४२
भुक्तिस्त्रिपुरुषी[5 j] सिध्येत्परेषां[k] नात्र संशयः।
अनिवृत्ते[l] सपिण्डत्वे सकुल्यानां न सिध्यति॥ ४३
अस्वामिना[6m] तु यद्भुक्तं [n]गृहक्षेत्रापणादिकम्।
सुहृद्बन्धुसकुल्यस्य[o] न तद्भोगेन हीयते॥ ४४

[1] या. अप., p. 636; स्मृ. कल्प., p. 46; [c] चापि; [d] तत्सुत्रः; [e] पौत्रादिषु, स्मृ. च., III, p. 165; [a] साधयेत्; [d] तत्सुतः, व्य. नि., p. 108; [b] भोगमागमं चैव; [d] तत्सुतः, (दा. त., p. 181; व्य. त., p. 225; म. त., p. 756; स्मृ., कल्पवत्पाठः); व्य. सौ., p. 232; [c] चापि; [d] तत्सुतः; [e] तत्पुत्रादिर्न.

[2] या. अप., p. 632; स्मृ. कल्प., p. 46; [f] ऋक्थिभिः, स्मृ. च., III, p. 154; वी. मि., p. 209; [f] ऋक्थिभिः.

[3] या. अप., p. 632; स्मृ. कल्प., p. 46; [g] विचालयेत्; [h] स्वामी सतापि लेख्येन; [i] समा, (स्मृ. च., III, p. 154; व्य. मातृ., p. 348; स्मृ. कल्पवत्पाठः), वी. मि., p. 209; [i] समा, व्य. मा., p. 100. स्वामी सतापि लेख्येन न स तां लब्धुमर्हति.

[4] व्य. मातृ., p. 348.

[5] या. अप., p. 637; स्मृ. कल्प., p. 47; व्य. नि., p. 102; [j] त्रैपुरुषी; व्य. मातृ., p. 351; [j] त्रिपुरुषिकी, (दा. त., p. 180; व्य. त., p. 227; [j] त्रैपुरुषी; [k] अपरेषां न, व्य. सौ., p. 237; वी. मि., p. 221; [j] त्रैपुरुषी वि. से., p. 93; दा. त. वत्पाठः, व्य, मा., p. 101; [j] त्रिपौरुषी सिध्यै वैरेषा; [l] अनुवृत्ते.

[6] या. अप., p. 637; स्मृ. कल्प., p. 47; परा. मा., p. 149; [m] अनागमं; [n] त्रप; [o] सकुल्यैश्च, दा. त., p. 180; व्य. त., p. 227; व्य. सौ., p. 237; वी. मि., p. 221; वि. से., p. 93; [o] सकुल्यानां.

धर्मोऽक्षयः[1] श्रोत्रियस्य अभयं राजपूरुषे ।
स्नेहः सुहृद्बान्धवेषु भुक्तमेतैर्न हीयते ॥ ४५

वैवाह्य[2a] श्रोत्रियैर्भुक्तं [b]राज्ञामात्यैस्तथैव च ।
सुदीर्घेणापि[c] कालेन तेषां [d]सिध्यति [e]तन्न तु ॥ ४६

अशक्तालसरोगार्तबालभीतप्रवासिनाम्[3] ।
शासनारूढमन्येन भुक्तं भुक्त्या न हीयते ॥ ४७

च्छिन्नभोगे[4 f] गृहे क्षेत्रे सन्दिग्धं यत्र जायते ।
लेख्येन[5] भोगविद्भिर्वा[g] साक्षिभिः [h]शुद्धिमाहरेत् ॥ ४८

नामघाटागमं[6 i] संख्यां कालं दिग्भागमेव च ।
भोगच्छेदनिमित्तं च ये [j]विदुस्तत्र साक्षिणः ॥ ४९

उत्पन्नाश्चात्यासन्ना[7 k] ये ये च देशान्तरस्थिताः ।
मौलास्ते तु समुद्दिष्टाः प्रष्टव्याः कार्यनिर्णये ॥ ५०

[1] परा. मा., p. 149.

[2] या. अप., p. 637; स्मृ. कल्प., p. 47; [a] विवाह्य; [b] राजामात्यैः; [d] सिध्येन्न तद्धनं, व्य. मातृ., p. 351; [a] विभाज्य; [b] राजामात्यैः; [d] सिध्येन्न तद्धनं; दा. त., p. 180; [a] विवाह्य; [e] तत्तु न, व्य. त., p. 227; [b] राजामात्यैः; [d] तत्तु न सिध्यति, व्य. सौ., p. 237; [c] अदी; [d] सिध्येत तत्तु न वी. मि., p. 221; स्मृ. कल्पवत्पाठः, या. वी., p. 436; [b] राजामात्यैः; [c] स्व.; वि. से., p. 93; दा. त. वत्पाठः.

[3] व्य. मातृ., p. 351; स्मृ. कल्प., p. 47.

[4] वी. मि., p. 222; स्मृ. कल्प., p. 47; व्य. सौ., p. 240; [f] विच्छिन्नेषु च भोगेषु.

[5] वी. मि., p. 222; स्मृ. कल्प., p. 47; [g] भागविद्भिर्वा; [h] तद्विभावयेत्. व्य. सौ., p. 240; [h] तद्विभावयेत्.

[6] वी. मि., p. 222; स्मृ. कल्प., p. 47; व्य. सौ, p. 240; [i] नामाद्या गमं संख्यां दिग्भागं कालमेव च । भोगे; [j] तेऽत्र.

[7] व्य. सौ., p. 240; स्मृ. कल्प., p. 47; [k] तदुत्पन्नाश्च सामन्ताः.

अदुष्टास्ते[1a] तु यद्ब्रूयुः [b]सन्दिग्धे समदृष्टयः ।
तत्प्रमाणं [c]प्रकर्तव्यमेवं धर्मो न हीयते ॥ ५१

स्थावरेषु[2d] तदाख्यातं लाभभोगप्रसाधनम् ।
प्रमाणहीनवादे तु निर्देश्या दैविकी क्रिया ॥ ५२

राजान्तरैस्त्रिभिर्भुक्तं[3] प्रमाणेन विनाऽपि यत् ।
ब्रह्मदेयं न हर्तव्यं राज्ञा तस्य कदाचन ॥ ५३

भुक्तिस्त्रैपुरुषी[4] यत्र चतुर्थे सम्प्रवर्तिता ।
तद्भोगः[5] स्थिरतां याति न पृच्छेदागमं क्वचित् ॥ ५४

अनिषिद्धेन[6e] यद्भुक्तं पुरुषैस्त्रिभिरेव तु ।
तत्र नैवागमः कार्यो भुक्तिस्तत्र गरीयसी ॥ ५५

स्थावरेषु[7] विवादेषु भुक्तिस्त्रिपुरुषी च या ।
स्वतन्त्रैव हि सा ज्ञेया प्रमाणं साध्यनिर्णये ॥ ५६

यस्य[8] त्रिपुरुषा भुक्तिः सम्यग्लेख्यसमन्विता ।
एवंविधा ब्रह्मदेया हर्तुं तस्य न शक्यते ॥ ५७

यस्य[9] त्रिपुरुषा भुक्तिः पारम्पर्यक्रमागता ।
न सा चालयितुं शक्या पूर्वकाच्छासनादृते ॥ ५८

[1] वी. मि., p. 222; स्मृ. कल्प., p. 47; [b] सन्दिग्धौ; [c] तु कर्तव्यं, ग्र. र., p. 213; [b] सन्दिग्धौ, व्य. सौ., p. 240; [a] अपृष्टास्तेषु यद्ब्रूयुः सन्दिग्धौ; [c] तु कर्तव्यं.

[2] वी. मि., p. 222; स्मृ. कल्प., p. 47; [d] रस्यैतदाख्यातम्.

[3] स्मृ. च., III, p. 166.

[4] परा. मा., p. 141; स्मृ. च., III, p. 166.

[5] परा. मा., p. 141; स्मृ. च., III, p. 166.

[6] परा. मा., p. 141; स्मृ. च., III, p. 167; [e] अविच्छेदेन.

[7] स्मृ. च., III, p. 167.

[8] स्मृ. च., III, p. 169.

[9] परा. मा., p. 144.

त्रिपुरुषं[1a] भुज्यते येन [b]समक्षं भूरवारिता ।
तस्य सा नापहर्तव्या क्षमालिङ्गं न चेद्वदेत् ॥ ५९

भुक्तिर्बलवती[2] शास्त्रे ह्यविच्छिन्ना चिरन्तनी ।
विच्छिन्नाऽपि[3] हि सा ज्ञेया या तु पूर्वं प्रसाधिता ॥ ६०

पित्रा[4] भुक्तं तु यद्द्रव्यं भुक्त्याचारेण धर्मतः ।
तस्मिन् प्रेतेऽपि तत्प्राप्तं भुक्त्या प्राप्तं तु तस्य तत् ॥ ६१

त्रिभिरेव[5] तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याभावे तु तां तत्र चतुर्थः समवाप्नुयात् ॥ ६२

सनाभिभिर्बान्धवैश्च[6] भुक्तं यत्स्वजनैस्तथा ।
भोगात्तत्र न सिद्धिः स्याद्भोगमन्येषु कल्पयेत् ॥ ६३

सागमो[7] दीर्घकालश्च निच्छिद्रोपरवो धनम् ।
प्रत्यर्थिसन्निधानं च परिभोगोऽपि पञ्चधा ॥ ६४

चतुष्पाद्धनधान्यादि[8] वर्षाद्धानिमवाप्नुयात् । ६५

भूमेरभुक्तिर्लेख्यस्य[9] यथाकालमदर्शनम् ।
साक्ष्यस्यास्मरणं[c] चैव स्वार्थहानिकराणि [d]तु ॥ ६६

[1] परा. मा., p. 147 ; व्य. नि., p. 105 ; [a] त्रिवर्षं, स. वि., p. 135 ; [a] त्रिवर्षं ; [b] समग्रा.

[2] परा. मा., p. 145 ; स्मृ. च., III, p. 170.

[3] परा. मा., p. 145 ; स्मृ. च., III, p. 170.

[4] व्य. नि., p. 100.

[5] व्य. नि., p. 100 ; व्य. मा., p. 94.

[6] व्य. मा., p. 101.

[7] व्य. नि., p. 103.

[8] स. वि., p. 135 ; व्य. नि., p. 105.

[9] व्य. नि., p. 109 ; व्य. सौ., p. 237 ; [c] अस्मारणं साक्षिणां च [d] च. व्य. मा., p. 100.

तस्माद्यत्नेन[1] कर्तव्यं प्रमाणपरिपालनम् ।
तेन कार्याणि सिध्यन्ति स्थावराणि चराणि च ॥ ६७

असाक्षिके[2] चिरकृते पृच्छेदुत्तरसाक्षिणः ।
शपथैर्वाऽनुयुञ्जीत[a] उपधां वा प्रयोजयेत् ॥ ६८

देशनाप्रतिघातं[3] च युक्तिलेशस्तथैव च । ६९

चोरापहृतं[4] तु सर्वेभ्योऽन्विष्य अर्पणीयं
अलाभे स्वकोशाद्वा अददचोरकिल्बिषी स्यात् ॥ ७०

[1] व्य. नि., p. 109 ; व्य. सौ., p. 237.

[2] वी. मि., p. 223 ; स्मृ. कल्प., p. 47 ; [a] शपथान्वा प्रयुञ्जीयादुपाधिं वापि योजयेत् । व्य. नि., p. 98 ; [a] शपथान्वा प्रयुञ्जीत युक्तिलेशमथापि वा । व्य. सौ., p. 242 ; अर्थचापहृते वादे तत्रोक्तस्त्रिविधो विधिः ।

[3] व्य. सौ., p. 242.

[4] या. बा., p. 215.

८

## ॥ दिव्यानि ॥

स्थावरस्य[1][a] तथाऽऽख्यातं लाभभोगप्रसाधनम् ।
प्रमाणहीने वादे तु निर्दोषा दैविकी क्रिया ॥ १

प्रदुष्टेष्वनुमानेषु[2] दिव्यैः कार्यं विशोधयेत् ।
धटाद्या[3] धर्मजान्ता च दैवी नवविधा स्मृता ॥ २

धटोऽग्निरुदकं[4] चैव विषं [b]कोशश्च [c]पश्चमम् ।
षष्ठं[d] च[e] तण्डुलाः [f]प्रोक्तं सप्तमं [g]तप्तमाषकः ॥ ३

अष्टमं[5] कालमित्युक्तं[h] नवमं [i]धर्मकं तथा ।
दिव्येनायाति[j] सर्वाणि[k] निर्दिष्टानि स्वयम्भुवा ॥ ४

[1] परा. मा., p. 150; व्य. सौ., p. 240; [a] स्यैतदाख्यातं लाभभोगप्रसाधकम् । प्रमाणहीनवादे तु निर्देश्या दैविकी क्रिया ॥

[2] परा. मा., p. 89.

[3] स्मृ. च., III, p. 115.

[4] व्य. म., p. 28; स्मृ. कल्प., p. 48; स्मृ. च., III, pp. 114 and 228; [g] माषकं, दि. त., p. 574; [b] कोषश्च पञ्चमः; [d] षष्ठश्च तण्डुलः प्रोक्तः सप्तमः, स. वि., pp. 105 and 167; [c] पञ्चमः; [g] माषकं, व्य. सौ., p. 245; [c] पञ्चमः; [f] प्रोक्ताः, वी. मि., p. 225; [c] पञ्चमः; [e] तु; [f] प्रोक्ताः; [g] माषकं, (या. वी., p. 528 and मि. बा., p. 327; व्य. सौ., वत्पाठः), रा. कौ., p. 406.

[5] परा. मा., p. 150; स्मृ. कल्प., p. 48; [i] धर्मजं भवेत्; [k] धर्माणि, स्मृ. च., III, pp. 114 and 228; [i] धर्मजं भवेत्; [j] दिव्यान्येतानि, स. वि., pp. 105 and 168; स्मृ. च., वत्पाठः, व्य. सौ., p. 245; [i] धर्मजं मतं; [j] दिव्यान्येतानि, वी. मि., p. 225; [i] धर्मजं; [j] दिव्यान्येतानि, या. वी., p. 528; [h] कालमित्युक्तं धर्मजं नवमं भवेत् । (व्य. म., p. 28; [i] धर्मजं, पूर्वार्धमात्रश्च पाठः), मि. बा., p. 327; [i] धर्मजं स्मृतं; [j] दिव्यान्येतानि, रा. कौ., p. 406.

## दिव्यव्यवस्था

यस्माद्देवैः[1] प्रयुक्तानि [a]दुष्करार्थे महात्मभिः।
अहमुद्देशतां[2] वच्मि सन्दिग्धार्थविशुद्धये।
देशकालार्थसङ्ख्याभिः[3] प्रयुक्तान्यनुपूर्वशः॥ ५

अपराधानुपूर्व्येण[4] साध्वसाधुविवक्षया।
शास्त्रोदितेन विधिना प्रदातव्यानि नान्यथा॥ ६

ऋणादिकेषु[5 b] कार्येषु [c]विसंवादे परस्परम्।
द्रव्यसंख्यान्विता देया पुरुषापेक्षया तथा॥ ७

लोके[6] संव्यवहारार्थं संज्ञेयं कथिता भुवि।
ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः॥ ८

निष्कं[7] सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः।
ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः॥ ९

स[8] एव [d]चान्द्रिका प्रोक्ता ताश्चतस्रस्तु [e]धानकाः।
ता द्वादश सुवर्णस्तु दीनाराख्यः स एव [f]तु॥ १०

[1] परा. मा., p. 150; स. वि., p. 106; [a] पुष्करार्थे मनीषिभिः। परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः॥

[2] स्मृ. कल्प., p. 48.

[3] स्मृ. कल्प., p. 48.

[4] स्मृ. कल्प., p. 48.

[5] स्मृ. च., III, p. 239; स्मृ. कल्प., p. 48; स. वि., p. 171; [c] संविवादे, व्य. सौ., p. 246; [b] ऋणादिषु तु.

[6] वि. र., p. 667.

[7] वी. मि., p. 234; (स्मृ. च., III, p. 231; परा. मा., p. 158; उत्तरार्धमात्रः पाठः); व्य. सा., p. 77; उत्तरार्धं परम्.

[8] वी. मि., p. 234; स्मृ. च., III, p. 231; [d] चाण्डिका; [e] धानका, वि. र., p. 667; [d] चन्द्रिका; [e] धानिका; [f] हि, परा. मा., p. 158; [d] चन्द्रिका; [e] धानका, व्य. सा., p. 77; [e] धानका.

कार्षापणसहस्रं[1] तु दण्ड उत्तमसाहसः ।
तदर्धं[2] मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ॥ ११

ब्राह्मणस्य[3] घटो देयः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥ १२

साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः ॥ १३

स्नेहात्क्रोधाल्लोभतो[4] वा भेदमायान्ति साक्षिणः ।
विधिदत्तस्य[a] दिव्यस्य न भेदो जायते क्वचित् ॥ १४

यथोक्तविधिना[5] देयं दिव्यं दिव्यविशारदैः ।
अयथोक्तं[b] प्रदत्तं चेन्न दत्तं साध्यसाधने ॥ १५

अदेशकालदत्तानि[6] बहिर्वादिकृतानि च ।
व्यभिचारं [c]सदाऽर्थेषु कुर्वन्तीह न संशयः ॥ १६

अभियुक्ताय[7] दातव्यं दिव्यं दिव्यविशारदैः ।
रुच्या चान्यतरः कुर्यादितरो वर्तयेच्छिरः ॥ १७

विनापि[8] शीर्षकं कुर्यान्नृपद्रोहे च पातके ।
दिव्यप्रदानमुदितमन्यत्र[9] नृपशासनात् ।
न कश्चिदभियोक्तारं दिव्येष्वेवं नियोजयेत् ॥ १८

[1] परा. मा., p. 159; द. वि., p. 23.

[2] परा. मा., p. 159.

[3] स. वि., p. 171.

[4] स्मृ. च., III, p. 248; स्मृ. कल्प., p. 50; दि. त., p. 575; [a] दृष्टस्य, वी. मि., p. 242.

[5] मि. बा., p. 353; दि. त., p. 575; [b] क्तप्रदत्तं तु न शक्तं, व्य. सौ., p. 260; दि. त. वत्पाठः.

[6] मि. बा., p. 353; दि. त., p. 575; [c] सदा त्वेवं.

[7] व्य. सौ., p. 261.

[8] व्य. सौ., p. 261.

[9] व्य. सौ., p. 261.

## दिव्यदेवताः

धरोध्रुवस्तथा[1] सोम आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ १९
देवेशेशानयोर्मध्य[2] आदित्यानां तथायनम् ।
धाताऽर्यमा च मित्रश्च वरुणोंशो भगस्तथा ॥ २०
इन्द्रो[3] विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥ २१
इत्येते[4] द्वादशादित्या नामभिः परिकीर्तिताः ।
अग्नेः[5] पश्चिमभागे तु रुद्राणामयनं विदुः ।
वीरभद्रश्च शम्भुश्च गिरीशश्च महायशाः ॥ २२
अजेकपादहिर्बुध्न्या[6] पिनाकी चापराजितः । २३
भुवनाधीश्वराश्चैव कपाली च विशांपतिः ।
स्थाणुर्भगश्च[7] भगवान् रुद्राश्चैकादश स्मृताः ॥ २४
प्रेतेशरक्षसोर्मध्ये[8] मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ २५
वाराही[9] चैव माहेन्द्री चामुण्डा गणसंयुता ।
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ॥ २६
वरुणस्योत्तरे[10] भागे मरुतां स्थानमुच्यते ।

1 व्य. नि., p. 120.
2 व्य. नि., p. 120.
3 व्य. नि., p. 120.
4 व्य. नि., p. 120.
5 व्य. नि., p. 120.
6 व्य. नि., p. 120.
7 व्य. नि., p. 120.
8 व्य. नि., p. 120.
9 व्य. नि., p. 120.
10 व्य. नि., p. 120.

श्वसनः[1] स्पर्शनो वायुरनिलो मारुतस्तथा ।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ॥ २७

द्रव्यसंख्यया दिव्यानि

संख्या[2] रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणान्ता[a] सा दिव्ये नियोज्या [b]विनयेत्तथा ॥ २८
विषं[3] सहस्रेऽपहृते पादोने च हुताशनः ।
त्रिपादोने[c] च सलिलमर्धे देयो धटः [d]सदा ॥ २९
चतुःशताभियोगे[4 e] च[f] दातव्यस्तप्तमाषकः ।
त्रिशते[g] तण्डुला देयाः *कोशश्चैव तदर्धके ॥ ३०
शते[5 h] हृतेऽपह्नुते[i] च दातव्यं धर्मशोधनम् ।
गोचौरस्य[j] प्रदातव्यं[k] सभ्यैः[l] फालः[m] प्रयत्नतः ॥ ३१

[1] व्य. नि., p. 120.

[2] या. अप., p. 699; स्मृ. कल्प., p. 48; स्मृ. च., III, p. 232; [b] विनये तथा, परा. मा., p. 159; दि. त., p. 580; स्मृ. च वत्पाठः; व्य. सौ., p. 247; [a] न्न सा दिव्या नियोज्या विनये तथा ।

[3] या. अप., p. 699; स्मृ. कल्प., p. 48; [d] तथा, स्मृ. च., III, p. 236; [c] त्रिभागोने, परा. मा., p. 154; व्य. नि., p. 157; स्मृ. च वत्पाठः, दि. त., p. 580; स. वि., p. 177; व्य. सा., p. 75; [c] द्विपादोने; व्य. सौ., p. 247; वी. मि., p. 230; या. वी., p. 538.

[4] या. अप., p. 699; स्मृ. कल्प., p. 48; [f] तु; [e] शतेऽभि, स्मृ. च., III, p. 236; परा. मा., p. 154; व्य. नि., p. 156; [f] तु; [g] त्रिंशतः, दि. त., p. 580; [f] तु, स. वि., p. 177; [f] तु; [g] त्रिंशतः, व्य. सा., p. 76; * तु शपथास्तु; व्य. सौ., p. 247; वी. मि., p. 230; [e] धनुः, या. वी., p. 538; स. वि वत्पाठः.

[5] या. अप., p. 700; स्मृ. कल्प., p. 48; स्मृ. च., III, pp. 235 and 236; परा. मा., p. 154; व्य. नि., pp. 155 and 156; [i] अपह्नवे, दि. त., p. 580; [k] प्रदातव्यं; [m] फालं, स. वि., p. 176; दि. त वत्पाठः; व्य. सा., p. 76; [j] गोचरस्य; [m] फालं उत्तरार्धं परम्; व्य. सौ., p. 247; [j] गोचरस्य; [m] फालावलेहनम्; वी. मि., p. 230; [h] शतहृते; [l] सद्यः कालावहेलनम्; या. वी., p. 538; व्य. सौ वत्पाठः॥

यवार्धिकस्य[1] वा नाशे तदर्धस्य च तण्डुलाः ।
ततोऽर्धार्धार्धनाशे च लौकिकी च क्रिया मता ॥ ३२

## शपथविधिः

सतां[2a] वाहनशस्त्राणि गोबीजकनकानि च ।
देवब्राह्मणपादाश्च[b,c] पुत्रदारशिरांसि च ॥ ३३

एते[d] च[e] शपथाः प्रोक्ताः [f]अल्पार्थे सुकराः सदा ।
साहसेष्वभिशापेषु[3g] दिव्यान्याहुर्विशोधनम् ॥ ३४

ब्रूहीति[4] ब्राह्मणं ब्रूयात्सत्यं ब्रूहीति पार्थिवम् ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैश्च पातकैः ॥ ३५

सत्येन[h] शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोरक्षकान्वाणिजकांस्तथाकारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्छूद्रवदाचरेत् ॥ ३६

येऽप्यपेताः स्वधर्मेभ्यः परपिण्डोपजीविनः ।
द्विजत्वमभिकाङ्क्षन्ते तांश्च शूद्रवदाचरेत् ॥ ३७

वर्णानुरूपैः शपथैः शपनीयं पृथक् पृथक् । ३८

[1] व्य. सौ., p. 252.

[2] परा. मा., p. 151; स्मृ. कल्प., p. 56; [a] सत्यं; [b] पादास्तु; [c] तु; [f] स्वल्पेऽर्थे, व्य. नि., p. 155; [c] तु; [f] स्वल्पेऽर्थे, दि. त., p. 612; [a] सत्यं; [d] इत्येते, व्य. त., p. 228; [b] पादांश्च; [c] तु; [f] मनुना स्वल्पकारणे, सतामित्यर्धं न दृश्यते । स. वि., pp. 105 and 176; [a] सत्यं; [b] देवता पितृपादाश्च दत्तानि सुकृतानि च, 'एते च' इत्यर्धं 105 तमपुटे न दृश्यते; [b] पादांश्च; [c] तु; [f] सत्येऽर्थे इति 176 तमे पुटे । वी. मि., pp. 226 and 287; [a] सत्य; [f] मुनिभिः स्वल्पकारणे, या. वी., p. 565, वी. मि., p. 287; [a] सत्यं वाहनमस्त्राणि; [f] मनुना स्वल्पकारणे, वी. मि., p. 226, व्य. म., p. 54; [a] सत्यं.

[3] व्य. म., p. 54; दि. त., p. 612; [g] योगेषु, व्य. त., p. 228; [g] शापे च दिव्यानि तु.

[4] व्य. मा., p. 71; [h] व्य. मा., pp. 71, 72, 73.

कामिनीषु विवाहेषु गवां भुक्ते तथेन्धने ।
ब्राह्मणाभ्यवपत्तौ च शपथे नास्ति पातकः ॥ ३९
सभान्तरस्थैर्वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः ।
सर्वसाक्ष्येष्वयं धर्मो ह्यन्यत्र स्थावरेषु च ॥ ४०
वधे चेत्प्राणिनां साक्ष्यं वादयेच्छवसन्निधौ ।
तदभावे तु चिह्नस्य नान्यथैव विवादयेत् ॥ ४१
नापृष्टैरनियुक्तैर्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः ॥ ४२
स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनःपुनः ॥ ४३
साक्षिसभ्यावसन्नानां नैव पौनर्भवो विधिः ॥ ४४
सप्तर्षयस्तथेन्द्राद्याः[1] पुष्करार्थे तपोधनाः ।
शेपुः शपथमव्यग्राः परस्परविशुद्धये ॥ ४५
सप्ताहे[2] वा द्विसप्ताहे न विपद्राजदैविकी ।
बान्धवेषु सपिण्डेषु धनेषु शपथैः शुचिः ॥ ४६
अशेषमानुषाभावे[3] दिव्येनैव विनिर्णयः ।
सम्भवे साक्षिणां प्राज्ञो दैविकीं तु विवर्जयेत् ॥ ४७
एवं[4a] संख्या निकृष्टानां [b]मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां[c] तु[d] कल्पनीया [e]परीक्षकैः ॥ ४८

[1] स. वि., p. 106.
[2] व्य. नि., p. 167.
[3] स. वि., p. 106.
[4] परा. मा., p. 154; स्मृ. कल्प., p. 48; [a] एषा; [e] प्रयत्नतः, या. अप., p. 700; [a] एका; [d] च, स्मृ. च., III, pp. 235 and 236; व्य. नि., p. 161; [b] प्राणिनां; [a] एषा, दि. त., p. 580; [a] एषा; [d] च, स. वि., p. 180; [a] एषा; [c] गुणा चोत्तमानां, व्य. सा., p. 76; व्य. सौ., p. 247; स. वि वत्पाठः, वी. मि., p. 230; स्मृ. च., वत्पाठः, या. वी., p. 538; दि. त., वत्पाठः.

## घटविधिः

घटेऽभियुक्तस्तुलितो[1 a] हीनश्चेद्धानिमाप्नुयात् ।
तत्समस्तु [b]पुनस्तुल्यो वर्धितो विजयी भवेत् ॥ ४९

शिक्यच्छेदेऽक्षभङ्गे[2] वा दद्याच्छिक्यं पुनर्नृपः ।
साक्षिणो ब्राह्मणाः श्रेष्ठा यथादृष्टार्थवादिनः ॥ ५०

ज्ञातिनः[3] शुचयो लुब्धाः नियोक्तव्या नृपेण तु ।
तेषां वचनतो गम्यः शुध्यशुद्धिविनिर्णयः ॥ ५१

कक्षच्छेदे[4] तुलाभङ्गे घटकर्कटयोस्तथा ।
रज्जुच्छेदेऽक्षभङ्गे वा [c]तथैवाशुद्धिमाप्नुयात् ॥ ५२

## अग्निविधिः

अग्नेर्विधिं[5] प्रवक्ष्यामि यथावद्विधिचोदितम् ।
कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमे तथा ॥ ५३

आग्नेयं[6] मण्डलं त्वाद्यं द्वितीयं वारुणं स्मृतम् ।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ॥ ५४

पञ्चमं[7] त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ।
सप्तमं सोमदैवत्यमष्टमं सर्व(सूर्य ?)दैवतम् ॥ ५५

[1] या. अप., p. 704; स्मृ. च., III, p. 259; दि. त., p. 590; [a] तोल्यो, स. वि., p. 192; [b] नियुक्त; [a] तौल्ये, व्य. सौ., p. 274; [a] तौल्यः, वी. मि., p. 253.

[2] स. वि., p. 192.

[3] स. वि., p. 192.

[4] वी. मि., p. 254; दि. त., p. 591; [c] आदिशेत्.

[5] स्मृ. कल्प., p. 52.

[6] स्मृ. कल्प., p. 52.

[7] स्मृ. कल्प., p. 52; दि. त., p. 594 cites this verse from पितामहः and ends it thus: सावित्रमष्टमं तथा ।

पुरस्तान्नवमं[1] यत्तु तन्महत्पार्थिवं विदुः ।
गोमयेन कृतानि स्युरद्भिः पर्युषितानि च ॥ ५६

द्वात्रिंशदङ्गुलान्याहुर्मण्डलान्मण्डलान्तरम्[2] ।
कर्तुः समपदं कार्यं मण्डलं तु प्रमाणतः ॥ ५७

## तोयविधिः

शरप्रक्षेपणस्थानाद्युवा[3] जवसमन्वितः ।
गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः ॥ ५८

मध्यमं[4] शरमादाय पुरुषोऽन्यस्तथाविधः ।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥ ५९

आगन्तस्तु[5] शरग्राही न पश्यति यदा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धिं विनिर्दिशेत् ॥ ६०

आनीते[6] मध्यमे बाणे मग्नाङ्गः शुचितामियात् ।
अन्यथा[7] न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वाऽन्यत्र[8] गमनाद्यस्मिन् पूर्वं निवेशयेत् ॥ ६१

अप्सु[9] प्रवेश्य पुरुषं [a]प्रेषयेत्सायकत्रयम् ।
इषून्[10] निक्षिपेद्विद्वान्मारुते वाति वै भृशम् ॥ ६२

[1] स्मृ. कल्प., p. 52.
[2] स्मृ. कल्प., p. 52.
[3] दि. त., p. 601.
[4] दि. त., p. 601.
[5] दि. त., p. 601.
[6] या. अप., p. 711 ; स्मृ. कल्प., p. 52 ; व्य. सा., p. 91.
[7] दि. त., p. 601 ; व्य. सा., p. 91.
[8] दि. त., p. 601 ; व्य. सा., p. 91.
[9] वी. मि., p. 271 ; स्मृ. कल्प., p. 54 ; व्य. सौ., p. 290 ; मि. बा., p. 387 ; [a] प्रक्षिपेत्, रा. कौ., p. 426.
[10] वी. मि., p. 271.

विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले ।
तृणगुल्मलतावल्लीपङ्कपाषाणसंयुते ॥ ६३

विधिदत्तं[1] विषं येन जीर्णं [a]मन्त्रौषधं विना ।
स शुद्धः स्यादन्यथा तु दण्ड्यो दाप्यश्च तद्धनम् ॥ ६४

सप्ताहाद्वा[2] द्विसप्ताहाद्यस्य[b] हानिर्न जायते ।
पुत्रदारधनानां च [c]स शुद्धः स्यान्न संशयः ॥ ६५

## कोशविधिः

यद्भक्तः[3] सोऽभियुक्तः स्यात्तदेवायुधमण्डलम् ।
प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥ ६६

त्रिरात्रं[4] पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम् ।
निरुद्धं[5] चारयेत्तत्र कुहकाशङ्कया नृपः ॥ ६७

महाभियोगे[6] निर्धर्मे कृतघ्ने क्लीबकुत्सिते ।
नास्तिके दृष्टदोषे च कोशपानं विसर्जयेत् ॥ ६८

दिव्यानि[7] वर्जयेन्नित्यमार्तानां तु गदैर्नृणाम् ।

[1] या. अप., p. 713; दि. त., p. 604; व्य. सौ., p. 301; [a] मन्त्रौषधीर्विना; वी. मि., p. 276; [a] मन्त्रौषधैर्विना; रा. कौ., p. 430.

[2] परा. मा., p. 193; स्मृ. कल्प., p. 55; [b] यस्यार्तिर्न प्रजायते; [c] विशुद्धः, (स्मृ. च., III, p. 274; वी. मि., p. 281; उभयत्रापि; [b] यस्यार्तिर्न प्रजायते) व्य. म., p. 51; [b] यस्यार्तिर्न प्रदृश्यते, व्य. मा. p. 110; स्मृ. च वत्पाठः.

[3] या. अप., p. 714; स्मृ. कल्प., p. 55; व्य. सौ., p. 303; व्य. म., p. 50.

[4] या. बा., p. 240.

[5] या. बा., p. 240.

[6] अख., p. 20.

[7] अख., p. 20.

### तण्डुलविधिः

तण्डुलैर्नाभियुञ्जीत प्रजानां मुखरोगिणाम् ॥ ६९

सोपवासः[1] सूर्यग्रहे[a] तण्डुलान् भक्षयेच्छुचिः ।
शुद्धः[b] स्याच्छुक्लनिष्ठीवे[c,d] विपरीते[e] तु दोषभाक् ॥ ७०

शोणितं[2] दृश्यते [f]यत्र [g]हनुस्तालु च [h]शीर्यतः ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥ ७१

### तप्तमाषविधिः

समुद्धरेत्तैलघृतात्सुतप्तात्तप्तमाषकम्[3] ।
अङ्गुष्ठाङ्गुलियोगेन सत्यमामन्त्र्य वीतभीः ॥ ७२

सौवर्णे[4] राजते ताम्रे आयसे मृण्मयेऽपि वा ।
गव्यं[5] घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥ ७३

सौवर्णीं[6] राजतीं ताम्रीमायसीं वा सुशोभनाम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥ ७४

भ्रमद्वीचीतरङ्गाढ्ये[7] ह्यनखस्पर्शगोचरे ।
परीक्षेदार्द्रपर्णेन चरुकारं सघोषकम् ॥ ७५

[1] परा. मा., p. 195; स्मृ. कल्प., p. 56; [e] रक्तमिश्रे च, स्मृ. च., III, p. 227; [b] शुद्धिः; [e] रक्तमिश्रे, व्य. नि., p. 144; [a] दिने; [c] स शुद्धनिष्ठीवे रक्तमिश्रे, स. वि., p. 212; [b] शुद्धिः; [e] रक्तमिश्रे तु दोषकृत्, व्य. सौ., p. 308; [d] निष्ठीवी रक्तमिश्रे, वी. मि., p. 282; व्य. सौ वत्पाठः.

[2] परा. मा., p. 195; स्मृ. कल्प., p. 56; [f] यस्य; [h] सीदति; व्य. सौ., p. 308; [g] हनुवालं च सीदति.

[3] स्मृ. कल्प., p. 56; वी. मि., p. 283; पूर्वार्धं परम्, रा. कौ., p. 436.

[4] वी. मि., p. 283.

[5] वी. मि., p. 283.

[6] वी. मि., p. 284.

[7] वी. मि., p. 284.

ततश्चानेन[1] मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रममृतं घृत त्वं यज्ञकर्मसु ॥ ७६
दह पावक पापं त्वं हिमशी(तो ? तः) शुचौ भव ।
उपोषितं[2] ततः स्नातमार्द्रवाससमागतम् ।
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ॥ ७७
प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः ।
कराग्रं[3] यो[a] नु धुनुयात् विस्फोटो वा न जायते ।
शुद्धो[4] भवति धर्मेण पितामहवचो यथा ॥ ७८

## फालविधिः

आयसं[5] द्वादशपलं[b] घटितं फालमुच्यते ।
अदग्धश्चेच्छुद्धिमियादन्यथा[c] त्वपहीयते ॥ ७९
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ।

[1] वी. मि., p. 284.

[2] वी. मि., p. 284.

[3] वी. मि., p. 284; स्मृ. कल्प., p. 56; [a] च धुनेयस्तु, व्य. सौ., p. 309; स्मृ. कल्पवत्पाठः, रा. कौ., p. 436.

[4] वी. मि., p. 284; स्मृ. कल्प., p. 56; व्य. सौ., p. 309; रा. कौ., p. 406.

[5] या. अप., p. 716; स्मृ. कल्प., p. 56; [c] अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् । (स्मृ. च., III, p. 279; परा. मा., p. 197; व्य. नि., p. 148; स्मृ. कल्पवत्पाठः), दि. त., p. 608; [b] पलघटितं; [c] अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तरम् । स. वि., p. 215; स्मृ. कल्पवत्पाठः, व्य. सा., p. 98; दि. त. वत्पाठः, व्य. सौ. p. 310; दि. त. वत्पाठः, (या. वी. p. 564; व्य. म., p. 52, मि. बा., p. 406; स्मृ. कल्पवत्पाठः).

अग्निवर्णं[1] तु[a] तच्चोरो जिह्वया [b]लेलिहेत्सकृत् ।
न[c] दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥ ८०
गोचरस्य[2d] प्रदातव्यं [e]सभ्यैः फालं प्रयत्नतः ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ ८१

धर्मकविधिः

पत्रद्वये[3f] लेखनीयौ धर्माधर्मौ सितासितौ ।
जीवदानादिभिर्मन्त्रैः[g] गायत्र्याद्यैश्च[h] सामभिः ॥ ८२
आमन्त्र्य[4] पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।
अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥ ८३
समौ[5] कृत्वा [i]तु तौ कुम्भे स्थाप्यौ चानुपलक्षितौ ।
ततः कुम्भात्पिण्डमेकं [j]प्रगृह्णीताविलम्बितः ॥ ८४
धर्मे गृहीते शुद्धः [k]स्यात्स पूज्यश्च परीक्षकैः ।

[1] परा. मा., p. 197 ; स्मृ. कल्प., p. 56 ; [b] लेहयेत्, स्मृ. च., III, p. 279 ; स्मृ. कल्प. वत्पाठः, व्य. नि., p. 148 ; [c] अ. दि. त., p. 608 ; [a] ततश्चौरः ; [b] लेहयेत्, स. वि., p. 215 ; [c] अदग्धश्चेच्छुचिर्भूयात्, व्य. सा., p. 98 ; व्य. सौ., p. 310 ; स्मृ. कल्पवत्पाठः, या. वी., p. 564 ; [b] संलिहेत् ; [c] अ. व्य. म., p. 52 ; मि. बा., p. 506 ; [b] संलिहेत्.

[2] स्मृ. च., III, p. 228 ; दि. त., p. 608 ; [d] चौरस्य ; [e] तप्तफालावहेलनम् .

[3] या. अप., p. 716 ; स्मृ. कल्प., p. 56 ; व्य. नि., p. 149 ; [f] वस्त्र ; [g] दानादिकैः, दि. त., p. 609 ; [g] दानादिकैः, व्य. सौ., p. 310 ; दि. त वत्पाठः, वी. मि., p. 286 ; व्य. म., p. 53 ; मि. बा., p. 405 ; [g] दानादिकैः ; [h] गायत्राद्यैश्च.

[4] या. अप., p. 716 ; स्मृ. कल्प., p. 56 ; व्य. नि., p. 149 ; दि. त., p. 609 ; व्य. सौ., p. 311 ; वी. मि., p. 286 ; व्य. म., p. 53 ; मि. बा., p. 405.

[5] या. अप., p. 716 ; स्मृ. कल्प., p. 56 ; [i] नवे ; [k] सम्पूज्यश्च, (स्मृ. च., III, p. 281 ; पूर्वार्धं परम्), व्य. नि., p. 149 ; [i] नवे, दि. त., p. 609 ; [i] and [k] स्मृ. कल्पवत्पाठः ; [j] याद, व्य. सौ., p. 311 ; स्मृ. कल्पवत्पाठः, वी. मि., p. 286 ; [i] नवे ; [j] अनुयाचितः ; [k] सम्पूज्यश्च, व्य० म., p. 53 ; मि. बा., p. 405.

अधर्मे[1] सङ्गृहीते तु दण्ड्यो निर्वास्य एव वा ॥ ८५

लिखेद्भूर्जपटे[2] वाऽपि धर्माधर्मौ सितासितौ ।
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ॥ ८६

सितपुष्पस्तु[3] धर्मः स्यादधर्मोऽसितपुष्पधृत् ।
एवं विधायोपलिप्य पिण्डयोस्तानि धापयेत् ॥ ८७

गोमयेन[4] मृदा वाऽपि पिण्डौ कार्यौ समौ ततः ।
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ॥ ८८

उपलिप्ते[5] शुचौ देशे देवब्राह्मणसन्निधौ ।
समर्चयेत्ततो देवान् लोकपालांश्च पूर्ववत् ॥ ८९

धर्मावाहनपूर्वं[6] तु प्रतिज्ञापत्रकं लिखेत् ।
यदि पापविमुक्तोऽहं धर्मश्चायातु मे करे ॥ ९०

अभिशस्तस्तयोश्चैकं[7] प्रगृह्णीतावलिम्बितः ।
धर्मे गृहीते शुद्धिः स्यादधर्मे तु स हीयते ॥ ९१

एवं[8] विचारयन् राजा धर्मार्थाभ्यां न हीयते ॥ ९२

[1] व्य. नि., p. 149.
[2] स. वि., p. 216.
[3] स. वि., p. 216.
[4] स. वि., p. 216.
[5] स. वि., p. 216.
[6] स. वि., p. 216.
[7] स. वि., p. 216.
[8] व्य. सौ., p. 252.

## ९

# ॥ निर्णयप्रकारः ॥

धर्मेण[1] व्यवहारेण चारित्रेण नृपाज्ञया ।
चतुष्प्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णयः ॥ १

एकैको[2] द्विविधः प्रोक्तः [a]क्रियाभेदान्मनीषिभिः ।
अपराधानुरूपं[b] तु दण्डं च परिकल्पयेत् ॥ २

सम्यग्विचार्य[3] कार्यं तु युक्त्या सम्परिकल्पितम् ।
परीक्षितं तु शपथैः स ज्ञेयो धर्मनिर्णयः ॥ ३

प्रतिवादी[4] प्रपद्येत यत्र धर्मः स निर्णयः ।
दिव्यैर्विशोधितः[c] सम्यङ्निर्णयः[d] समुदाहृतः ॥ ४

प्रमाणनिश्चितो[5][e] यस्तु व्यवहारः स उच्यते ।
वाक्छलानुत्तरत्वेन[f] द्वितीयः परिकीर्तितः ॥ ५

अनुमानेन[6] निर्णीतं [g]चारित्रमिति कथ्यते ।
देशस्थित्या [h]तृतीयस्तु [i]शास्त्रविद्भिरुदाहृतः ॥ ६

[1] स्मृ. च., III, p. 21.

[2] परा. मा., p. 198; स्मृ. कल्प., p. 57; [a] महर्षिभिः पूर्वार्धं परं, स्मृ. च., III, p. 22; पूर्वार्धं परम्; व्य. सौ., p. 316; [b] रूपश्च दण्डोऽत्र परिकल्पितः, वी. मि., p. 118; पूर्वार्धं परम्.

[3] वी. मि., p. 118; स्मृ. कल्प., p. 57; स्मृ. च., III, p. 22.

[4] परा. मा., p. 198; स्मृ. च., III, p. 22; [c] वा; [d] द्वितीयः स उदाहृतः, वी. मि., p. 118; [d] द्वितीयः स उदाहृतः.

[5] परा. मा., p. 198; स्मृ. कल्प., p. 57; [e] प्रमाणैः, स्मृ. च., III, pp. 23 and 156; [f] नन्तरत्वेन इति 23 तमे पृष्ठे, व्य. नि., p. 110; पूर्वार्धं परं, वी. मि., p. 118; [e] प्रमाणैः.

[6] परा. मा., p. 198; स्मृ. कल्प., p. 57; स्मृ. च., III, p. 23; [h] द्वितीयस्तु, व्य. सौ., p. 317; [g] चरित्रं; [h] द्वितीयं तु, वी. मि., p. 118; [g] चरित्रमिति कीर्तितं; [h] द्वितीयं तु; [i] उदाहृतं.

प्रमाणसमतायां[1 a] तु राजाज्ञा निर्णयः स्मृतः ।
शास्त्रसभ्याविरोधेन[b] चतुर्थः परिकीर्तितः ॥ ७
धर्मशास्त्रविरोधे[2] तु युक्तियुक्तो विधिः स्मृतः ॥ ८
वधादृते[3] ब्राह्मणस्य दण्डो भवति कर्हिचित् ।
अवध्या ब्राह्मणा गावो लोकेऽस्मिन् वैदिकी स्मृतिः ॥ ९
महापातकयुक्तोऽपि[4] न विप्रो वधमर्हति ।
निर्वासनाङ्कने[c] मौण्ड्यं तस्य कुर्यान्नराधिपः ॥ १०
महापराधयुक्तांश्च[5 d] वधदण्डेन [e]शासयेत् । ११
स्वल्पेऽपराधे[6 f] वाग्दण्डो[g] धिग्दण्डः पूर्वसाहसे ।
मध्योत्तमेऽर्धदण्डस्तु[h] राजद्रोहे[i] च बन्धनम् ॥ १२

[1] परा. मा., p. 199; स्मृ. कल्प., p. 57; [a] सहितायस्तु; [b] सभ्य-विरोधेन तथान्यः सम्प्रकीर्तितः, स्मृ. च., III, p. 23; [a] रहितो यस्तु; [b] रील्यविरोधेन तथा चान्यः प्रकीर्तितः, व्य. सौ., p. 318; [a] सहिताया तु; [b] सभ्यविरोधेन तथान्यः परिकीर्तितः, वी. मि., p. 119; [a] सहितायस्तु; [b] सभ्यविरोधे च तथान्यः परिकीर्तितः ।

[2] वी. मि., p. 119.

[3] मि. बा., p. 115.

[4] स्मृ. च., III, pp. 294 and 753; वि. र., p. 634; [c] ङ्कनं, मि. बा., p. 115; व्य. मा., p. 338; [c] ङ्कितं कुर्यान्मौण्ड्यं तस्य, वि. से., p. 326.

[5] स्मृ. च., III, p. 295; वि. र., p. 629; व्य. नि., p. 391; [d] पातक; [e] दण्डयेत् व्य. मा., p. 337; व्य. नि. वत्पाठः.

[6] परा. मा., p. 206; स्मृ. च., III, p. 295; [f] स्वल्पा; [h] मध्यमे त्वर्थ; [i] राजद्रोहेषु वि. र., p. 629; [g] वाग्दण्डं धिग्दण्डं; [h] मध्ये तु रोधनं चैव, व्य. नि., p. 390; [i] राजद्रोहे वधः स्मृतः, द. वि., p. 63; [g] वाग्दण्डं धिग्दण्डं; [h] मध्योत्तरे धनं दण्डं.

निर्वासनं[1] वधो[a] वाऽपि कार्यमात्महितैषिणा ।
व्यस्ताः[b] समस्ता एकस्य [c]महापातककारिणे ॥ १३

मित्रादिषु[2] प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनाम् ।
विवादिनो नरांश्चापि द्वेषिणोऽर्थेन दण्डयेत् ॥ १४

पिताचार्यः[3] सुहृन्माता भार्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥ १५

ऋत्विक्पुरोहितामात्याः[4] पुत्राः सम्बन्धिबान्धवाः ।
धर्माद्विचलिता दण्ड्या निर्वास्या [d]राजभिः पुरात् ॥ १६

गुरून्[5] पुरोहितान्पूज्यान्[e] वाग्दण्डेनैव दण्डयेत् ।
विवादिनो नरांश्चान्यान् [f]धिग्धनाभ्यां च दण्डयेत् ॥ १७

प्रतिलोमास्तथा[6] चान्त्याः पुरुषाणां मलाः स्मृताः ।
ब्राह्मणातिक्रमे वध्या न दातव्या दमं क्वचित् ॥ १८

वधार्हकः[7][g] स्वर्णशतं दमं दाप्यस्तु पूरुषः ।
अङ्गच्छेदार्हकस्त्वर्धं[h] सदंशशस्तदर्धकम्[i] ॥ १९

[1] परा. मा., p. 206; स्मृ. च., III, p. 295; [c] कारिणः, वि. र., p. 629; [a] विरोधेऽपि; [b] योज्याः समस्ताश्चैकस्य महापातककारिणः, द. वि., p. 63; [a] निरोधोऽपि; [b] योज्यः समस्तः.

[2] परा. मा., p. 206; स्मृ. च., III, p. 295; व्य. नि., p. 391; यथोक्तं तस्य तत्कुर्युरनुक्तं साधुकल्पितम् ।

[3] परा. मा., p. 207.

[4] परा. मा., p. 207; स्मृ. च., III, p. 296; [d] राजहिंसकाः.

[5] परा. मा., pp. 206 and 207; 207 तमपुटे पूर्वार्धं परं, स्मृ. च., III, p. 296; वि. र., p. 629; [f] दोषिणोर्थेन, व्य. नि., p. 391; [e] पुत्रान्; [f] दोषिणोऽर्थेन द. वि., p. 57; पूर्वार्धं परं, व्य. मा., p. 337; [e] चैव; [f] दोषिणोऽर्थैश्च; व्य. सा., p. 104; पूर्वार्धं परं, वि. से., p. 325; [f] पापिनोऽर्थेन.

[6] द. वि., p. 58.

[7] परा. मा., p. 212; स्मृ. च., III, p. 298; वि. र., p. 656; [g] र्हः सुवर्ण; [h] र्हस्तदर्धं; [i] सन्दंशार्हः, द. वि., p. 64; [g] र्हस्तु; [h] र्हस्तदर्धं; [i] सन्दंशार्हः, वि. से., p. 313; [g] र्हः सुवर्ण; [i] सन्दंशार्ह.

ताडनं[1] बन्धनं चैव तथैव च [a]विडम्नकम् ।
एष दण्डो हि शूद्रस्य नार्थदण्डो बृहस्पतिः ॥ २०

प्रतिज्ञा[2] भावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य [b]चादानाज्जयी लोके निगद्यते ॥ २१

पलायनादनुत्तरादन्यपक्षाश्रयेण[3 c] च ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य च ॥ २२

कुलादिभिर्निश्चितेऽपि[4] न सन्तोषं गतस्तु यः ।
विचार्य तत्कृतं राजा कुकृतं पुनरुद्धरेत् ॥ २३

निश्चित्य[5] बहुभिः सार्धं ब्राह्मणैः शास्त्रपारगैः ।
दण्डयेज्जयिना [d]साकं [e]पूर्वसभ्यांस्तु दोषिणः ॥ २४

अपराधानुरूपश्च[6] दण्डोऽत्र परिकल्पितः ।
साक्षिलेख्यानुमानेन[7] सम्यग्दिव्येन वा जितः ॥ २५

यो न दद्याद्देयदमं स निर्वास्यस्ततः पुरात् ॥ २६

ललाटाङ्कं[8] ब्राह्मणस्य नान्यो दण्डो विधीयते ।
महापातकयुक्तोऽपि न विप्रो वधमर्हति ।
निर्वासनाङ्ककरणे मौण्ड्यं कुर्यान्नराधिपः ॥ २७

[1] परा. मा., p. 212; स्मृ. च., III, p. 298; [a] विडम्बनम्.

[2] व्य. त., p. 230; स्मृ. कल्प., p. 58; वि. से., p. 125; [b] वा.

[3] व्य. मातृ., p. 310; व्य. त., p. 231; [c] नुत्तरत्वात्, वी. मि., p. 122; व्य. त. वत्पाठः.

[4] स्मृ. च., III, p. 302; स्मृ. कल्प., p. 58; वी. मि., p. 123.

[5] परा. मा., p. 213; स्मृ. कल्प., p. 58; स्मृ. च., III, p. 302; [e] पूर्वं, वी. मि., p. 123; [d] सार्धं.

[6] वी. मि., p. 124; स्मृ. कल्प., p. 58.

[7] द. वि., p. 68.

[8] परा. मा., p. 210; व्य. सा., p. 105; निर्वासनेत्यर्धं नास्ति.

प्रमाणं[1] तत्कृतं सर्वं लाभालाभव्ययोदयम् ।
स्वदेशे वा [a]विदेशे वा [b]न स्वातन्त्र्यं विसंवदेत् ॥ २८

यः[2] स्वामिना [c]नियुक्तस्तु [d]धनायस्यापलापने ।
कुसीदकृषिवाणिज्ये[e, f] निसृष्टार्थस्तु स स्मृतः ॥ २९

राज्ञा[3] यत्नेन कर्तव्यं सन्दिग्धार्थविचारणम् ।
त्रयस्तत्रोपचीयन्ते हानिरेकस्य जायते ॥ ३०

जेताऽऽप्नोति[4] धनं पूजां जितो विनयनिग्रहम् ।
जयं दानं दमं राजा सभ्याः पुण्यमवाप्नुयुः ॥ ३१

एवं[5] शास्त्रोदितं राजा कुर्वन्निर्णयपालनम् ।
वितत्येह यशो लोके [g]महेन्द्रसदृशो भवेत् ॥ ३२

साक्षिलेख्यानुमानेन[6] प्रकुर्वन् कार्यनिर्णयम् ।
वितत्येह यशो राजा ब्रध्नस्याप्नोति विष्टपम् ॥ ३३

यत्रैवं[7] वेत्ति नृपतिः निर्णयं तु बताध्वरम् ।
सोऽस्मिन्लोके यशः प्राप्य याति शक्रसलोकताम् ॥ ३४

[1] परा. मा., p. 218; स्मृ. कल्प., p. 59; [b] स्वामी तन्न; व्य. नि., p. 192; [a] अन्यदेशे वा स्वामी न तु, स. वि., p. 502; स्मृ., कल्पवत्पाठः, व्य. सौ., p. 333; [b] तं ज्यायान्न विचारयेत् वी. मि., p. 127; स्मृ. कल्पवत्पाठः.

[2] परा. मा., p. 218; व्य. त., p. 233; [d] धनायव्ययपालने स. वि., p. 502; [c] अभियुक्तस्तु; [d] धनायव्ययपालने, व्य. सौ., p. 333; [d] धनायव्ययपालने; [f] वाणिज्यनि, वी. मि., p. 127; [d] धनायव्ययपालने; [e] कुसी कृषी च वाणिज्ये.

[3] स्मृ. च., III, p. 289.

[4] स्मृ. च., III, p. 289.

[5] परा. मा., p. 219; स्मृ. कल्प., p. 4; [g] सचिवः, (स्मृ. च., III, p. 289; व्य. सा., p. 106; [g] सदृशः वी. मि., p. 125; स्मृ. कल्पतरुवत्पाठः).

[6] परा. मा., p. 219; स्मृ. च., III, p. 289.

[7] स्मृ. कल्पतरु., last verse in निर्णयप्रकारः, according to A.S.B. and S.B. MSS. A.S.B. reads निर्णयन्त तद्विधम्.

## ॥ ऋणादानम् ॥

पदांशसहितस्त्वेष[1a] व्यवहारः प्रकीर्तितः ।
विवादकारणान्यस्य पदानि [b]शृणुताधुना ॥ १

ऋणादानप्रधानानि[2 c, d] द्यूताह्वानान्तिकानि च ।
क्रमशः सम्प्रवक्ष्यामि क्रियाभेदांश्च तत्वतः ॥ २

ऋणं[3] देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्मौ च ऋणादानमिति स्मृतम् ॥ ३

वृद्धिविचारः

अशीतिभागो[4] वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥ ४

परिपूर्णं[5] गृहीत्वाऽऽधिं बन्धं वा साधुलग्नकम् ।
लेख्यारूढं[e] साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥ ५

[1] परा. मा., p. 219; स्मृ. कल्प., p. 59; [a] गसहितत्वेन, वि. र., p. 4; [a] गसहितः सम्यग्विवाद स्त्वेष कीर्तितः, वी. मि., p. 292; [a] गसहितः अयं श्लोकः द्विः पठ्यते द्वितीयपाठे; [b] तानि तु.

[2] परा. मा., p. 219; स्मृ. कल्प., p. 59; वि. र., p. 4; [d] प्रदानानि, वी. मि., p. 292; [c] दानोद्ग्रहादीनि, व्य. माला., p. 110.

[3] व्य. मा., p. 110.

[4] व्य. मा., p. 110.

[5] व्य. म., p. 104; स्मृ. कल्प., p. 59; स्मृ. च., III, p. 317; वि. र., p. 5; स्मृ. सा., p. 325; वि. चि., p. 2; व्य. सा., p. 108; वी. मि., p. 293; वि. से., p. 2; [e] नूढं.

कुत्सितात्सीदतश्चैव[1] निर्विशङ्कैः [a]प्रगृह्यते ।
चतुर्गुणं वाऽष्टगुणं [b]कुसीदाख्यमतः स्मृतम् ॥ ६

पुराणे[2] पणम् । ॥ ७

## वृद्धिप्रभेदाः

वृद्धिश्चतुर्विधा[3] प्रोक्ता [c]पञ्चधाऽन्यैः प्रकीर्तिता ।
षड्विधाऽन्यैः[4 d, e] समाख्याता [f, g]तत्वतस्ता निबोधत ॥ ८

कायिका[5] कालिका चैव [h]चक्रवृद्धिरतोऽपरा ।
कारिता [i]च [j]शिखावृद्धिर्भोगलाभस्तथैव च ॥ ९

कायिका[6] कर्मसंयुक्ता[k, l] मासाद्ग्राह्या[m] च कालिका ।
वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता ॥ १०

[1] व्य. म., p. 104; स्मृ. कल्प., p. 59; वि. र., p. 5; [a] तु; [b] ऋणं च तत् वि. चि., p. 2; [b] ऋणं ततः, वी. मि., p. 293; वि. से., p. 2; वि. चि. वत्पाठः.

[2] वि. च., p. 8.

[3] या. अप., p. 642; स्मृ. कल्प., p. 60; वि. र., p. 9; परा. मा., p. 220; व्य. नि., p. 171; [c] बहुधा, वि. चि., p. 4; व्य. सा., p. 108; स. वि., p. 222; वी. मि., p. 294; या. वी., p. 458; वि. से., p. 5.

[4] या. अप., p. 642; स्मृ. कल्प., p. 60; [e] अस्मिन्; [g] सन्ति, वि. र., p. 9; [e] अस्मिन्; [g] तां, परा. मा., p. 220; व्य. नि., p. 171; [d] बहुधा; [f] तत्वं तस्मात्, वि. चि., p. 4; [g] तां व्य. सा., p. 109; वि. चिवत्पाठः, स. वि., p. 222; [g] तां, वी. मि., p. 294; [g] तां या. वी., p. 458; वि. से., p. 5.

[5] या. अप., p. 642; स्मृ. कल्प., p. 60; [h] अथापरा, वि. र., p. 9; [h] अथ परा. मा., p. 220; वि. चि., p. 5; [h] अथ, स. वि., p. 222; [h] अथापरा; [i] अथ वी. मि., p. 294; [i] सशिखा, या. वी., p. 458; वि. चिवत्पाठः वि. से., p. 5; [h] तथैव च; [i] अथ; [j] तथापरा.

[6] या. अप., p. 642; म. कु., p. 296; [k] काय; [m] मास, म. रा., p. 971; म. कुवत्पाठः, म. न., p. 971; [l] संशोध्या; [m] मास, गौ. मि., p. 95; परा. मा., p. 220; स. वि., p. 223; [m] मास, वी. मि., p. 294; [m] मास.

प्रत्यहं[1] गृह्यते या तु शिखावृद्धिस्तु सा [a]स्मृता ।
शिखेव[b] वर्धते नित्यं शिरश्छेदान्निवर्तते ॥ ११

ऋणिकेन[2] तु या वृद्धिरधिका सम्प्रकल्पिता ।
आपत्कालकृता नित्यं दातव्या सा तु कारिता ।
अन्यथा कारिता वृद्धिर्न दातव्या कथञ्चन ॥ १२

शिखेव[3] वर्धते नित्यं शिरश्छेदान्निवर्तते ।
मूले दत्ते तथैवैषा [c]शिखावृद्धिस्ततः स्मृता ॥ १३

गृही[4 d] स्तोमः शदः क्षेत्राद्भोगलाभः प्रकीर्तितः ॥ १४

कायिकां[5] भोगवृद्धिं च कारितां च शिखात्मिकाम् ।
चतुष्टयीं वृद्धिमाहुश्चक्रवृध्या तु पञ्चमीम् ॥ १५

शिखा* वृद्धिं कायिकां च भोगलाभं तथैव च ।
धनी तावत् समादद्याद्यावन्मूलं न शोधितम् ॥ १६

## हिरण्यधान्यादीनां वृद्धिः

हिरण्ये[6] द्विगुणा वृद्धिस्त्रिगुणा [e]वस्त्रकुप्यके ।
धान्ये चतुर्गुणा प्रोक्ता [f]शदवाह्यलवेषु च ॥ १७

[1] या. अप., p. 642; स्मृ. कल्प., p. 60; वि. र., p. 12; [a] मता, परा. मा., p. 221; [b] गृहात्स्तोमः शदः क्षेत्राद्भोगलाभः प्रकीर्तितः । वि. चि., p. 5; [a] मता, स. वि., p. 223; वी. मि., pp. 294 and 295; [b] गृहात्तोषः फलं क्षेत्राद्भोगलाभः प्रकीर्तितः । वि. से., p. 6; [a] मता.

[2] वी. मि., p. 295. Attributed to Kātyāyana, स्मृ. च., III, p. 360; वि. र., p. 10; वि. चि., p. 4; स. वि., p. 223.

[3] स्मृ. च., III, p. 360; वी. मि., p. 295; [c] वृद्धिस्तु सा.

[4] या. अप., p. 642; स्मृ. कल्प., p. 60; वि. र., p. 13; उत्तरार्धमात्रं; वि. चि., p. 6; [d] गृहात्, स. वि., p. 223; [d] गृहात्तोषः फलं, वि. से., p. 6; [d] गृहात्.

[5] स. वि., p. 224. * या. अप., p. 642.

[6] परा. मा., p. 226; स्मृ. कल्प., p. 61; [f] सद, स्मृ. च., III, p. 371; [e] कुप्ययोः, वि. र., p. 18; [f] सद, व्य. नि., p. 173; [e] रूप्यके, वि. चि., p. 12; स. वि., p. 227; [f] शदे वाह्य लवेषु च, वि. नि., p. 298; या. वी., p. 459; [f] सद, व्य. स., p. 105; वि. से., p. 10.

उक्तपञ्चगुणा[1][a] शाके [b,c]बीजेऽक्षौ षड्गुणा स्मृता ।
लवणस्वेदमद्येषु[d] वृद्धिरष्टगुणा [e]मता ।
गुडे मधुनि चैवोक्ता प्रयुक्ते [f]चिरकालिके ॥ १८

तैलानां[2] चैव सर्वेषां मद्यानां मधुसर्पिषाम् ।
वृद्धिरष्टगुणा प्रोक्ता गुडस्य लवणस्य च ॥ १९

स्यात्कोशानां[3] पञ्चगुणा कार्पासस्य चतुर्गुणा ।
काष्ठानां चन्दनादीनां वृद्धिरष्टगुणा भवेत् ॥ २०

भागो[4][g] यद्द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते ।
पूर्णे[h] च सोदयं पश्चाद्वार्धुष्यं [i]तद्विगर्हितम् ॥ २१

अशीति[5] भागो वर्धेत लाभे द्विगुणतामियात् ।
प्रयुक्तं [j]सप्तभिर्वर्षैस्त्रिभागोनैर्न संशयः ॥ २२

[1] परा. मा., p. 227; स्मृ. कल्प., p. 61; [e] स्मृता, स्मृ. च., III, p. 372; [a] उक्ता, वि. र., p. 19; [a] उक्ता; [d] स्नेह; [e] स्मृता, व्य. नि., p. 173; [a] उक्ता; [c] चैव चतुर्गुणा, वि. चि., p. 12; वि. रवत्पाठः, स. वि., p. 227; [a] उक्ता; [b] बीजस्था षड्गुणा स्थिता; [d] स्नेह; [e] स्मृता; [f] कालिका, वी. मि., p. 298; [a] उक्ता; [d] स्नेह, या. वी., p. 459; [a] उक्ता; [e] स्मृता, व्य. मा., p. 115; [a] उक्ता; [b] बीजे चैव तु षड्गुणा; [d] स्नेह गुडे इत्यर्धं न दृश्यते, वि. से., pp. 10 and 315; [a] उक्ता. 10 तमपुटे पूर्वार्धं परं, 315 तमे, वि. रवत्पाठः.

[2] व्य. मा., p. 115, but ascribed to कात्यायन by वि. र., p. 19; स्मृ. च., III, p. 373; परा. मा., III, p. 228; व्य. म., p. 170; वी. मि., p. 299.

[3] व्य. मा., p. 115.

[4] म. कु., p. 296; स्मृ. कल्प., p. 61; [g] भोगो; [h] मूलं, म. रा., p. 971; म. कु वत्पाठः; वि. र., p. 14; [g] भोगो; [h] मूलं; वि. चि., p. 8; [g] भोगो; [h] मूलं; [i] तत्तु, या. वी., pp. 459 and 492; [i] तत्तु.

[5] स्मृ. च., III, p. 372; स्मृ. कल्प., p. 60; वि. र., p. 7; [j] भागो नैव, व्यव. माधव., p. 115.

तृणकाष्ठेष्टकासूत्रकिण्वचर्मास्थिवर्मणाम्[1a,b] ।
हेतिपुष्पफलानां* च [c]वृद्धिस्तु न निवर्तते ॥ २३

हिरण्यधान्यवस्त्राणां[2] वृद्धिर्द्वित्रिचतुर्गुणा ।
घृतस्याष्टगुणा वृद्धिस्ताम्रादीनां चतुर्गुणा ॥ २४

शिखावृद्धिं[3] कायिकां च [d]भोगे लाभं तथैव च ।
धनी तावत्समादद्याद्यावन्मूलं न शोधितम् ॥ २५

पादोपचयात्क्रमेणेतरेषाम्[4] । २६

सर्वेष्वर्थविवादेषु[5] वाक्छलेनावसीदति ।
परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते ॥ २७

समवृद्धिः[6] सदा कुर्याद्विषमस्तु निवर्तते ॥ २७(अ)

## धनवृद्धिः

वसिष्ठवचनप्रोक्तां[7] वृद्धिं वार्धुषिके शृणु ।
पञ्च माषास्तु विंशत्या एवं धर्मो न हीयते ॥ २८

[1] परा. मा., p. 229; स्मृ. च., III, p. 374; वि. र., p. 19; [b] पर्णास्थिचर्मणां, व्य. नि., p. 174; [a] कीलचर्मास्थिपक्ष्मणां, वि. चि., p. 13; [b] पर्णास्थिचर्मणां; [c] च. न विधीयते, व्य. मातृ., p. 293; स. वि., p. 228; वी. मि., p. 300; व्य. मा., p. 116; [a] कील; * फलादीनाम्, वि. से., p. 11; वि. चि वत्पाठः, अख., p. 23; व्य. निवत्पाठः.

[2] अख., p. 23.

[3] या. अप., p. 642; स्मृ. कल्प., p. 61; [d] भोगलाभं, स्मृ. च., III, p. 375; वि. र., p. 13; परा. मा., p. 230; (वि. चि., p. 6; स. वि., p. 230; वी. मि., p. 300; वि. से., p. 7; स्मृ. कल्पवत्पाठः).

[4] या. बा., p. 215.

[5] अख., p. 15.

[6] अख., p. 16.

[7] या. अप., p. 642; स्मृ. कल्प., p. 60.

माषो[1] विंशतिभागस्तु पलस्य परिकीर्तितः। २९

तत्र[2] त्विदमुपेक्षां वा यः कश्चित्कुरुते नरः।
चतुःसुवर्णं षण्णिष्कास्तस्य दण्डो विधीयते ॥ ३०

समूहकार्यसिध्यर्थं[3] राजादीनां च दर्शने।
ततो लभेत यत्किञ्चित्सर्वेषामेव तत्समम् ॥ ३१

सान्तानिकादिषु[4] तथा धर्म एषां सनातनः।
यत्तैः प्राप्तं रक्षितं वा गणार्थे वा ऋणं कृतम् ॥ ३२

अकृतवृद्धिः

स्वदेशस्थोऽपि[5] वा यस्तु न दद्याद्याचितोऽसकृत्।
स तत्र कारितां वृद्धिमनिच्छन्नपि चाहरेत् ॥ ३३

षाण्मास्यं[6] मासिकं वाऽपि विभक्तव्यं यथांशतः।
देयं वा निःस्ववृद्धार्तस्त्रीबालातुररोगिषु ॥ ३४

ऋतुत्रयस्योपरिष्टाद्धनं[7] वृद्धिमवाप्नुयात्।
एवमादिष्वशीति[8] भागवृद्धिर्विवक्षिता ॥ ३५

न[9] निःस्रवति यत्तत्स्याद्धनिको मूलभाग्भवेत्।
द्विगुणादपि चोत्कर्षे कालिका यस्य चादिनाम् ॥ ३६

विवादन्यायतत्वज्ञैस्तदा[10] राजा विनिर्णयेत् ॥ ३६(अ)

[1] वि. चि., p. 3; स्मृ. कल्प., p. 60; वि. से., p. 3.
[2] व्य. नि., p. 175a.
[3] व्य. नि., p. 175b.
[4] व्य. नि., p. 175b.
[5] व्य. नि., p. 175b. Kane (p. 63) cites this verse with a slight modification as Kātyāyana's.
[6] व्य. नि., p. 175b.
[7] व्य. नि., p. 175b.
[8] व्य. नि., p. 175b.
[9] व्य. नि., p. 181.
[10] व्य. नि., p. 181.

## आधिः

आधिस्तु[1] भुज्यते तावद्यावत्तन्न प्रदीयते ॥ ३७

आधिर्बन्धः[2] समाख्यातः स च *प्रोक्तश्चतुर्विधः ।
जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ॥ ३८

यादृच्छिकः [a]सावधिश्च लेख्यारूढोऽथ [b]साक्षिमान् ।
अशान्तलाभे[3 c] च ऋणे तथा पूर्णेऽवधौ धनी ॥ ३९

यो भुङ्क्ते बन्धकं लोभान्न स लाभो भवेत्पुनः ।
न्यासवत्परिपाल्योऽसौ[4*] वृद्धिर्नश्यति† हापिते ॥ ४०

दैवराजोपघाते[5 d] च [e]यथाधिर्नाशमाप्नुयात् ।
तत्राधिं[6 f] दापयेद्दद्यात्सोदयं* धनमन्यथा[g] ॥ ४१

[1] वि. से., p. 7.

[2] परा. मा., p. 230; स्मृ. कल्प., p. 61; [a] सावधिको, स्मृ. च., III, p. 317; वि. र., p. 22; व्य. नि., p. 177; व्य. सा., p. 132. * तु षड्विधः स. वि., p. 233; अनयोः यादृच्छिक इत्यर्धं नास्ति; वी. मि., p. 305; [b] साक्षिवान्, या. वी., p. 484; व्य. म., p. 106; वि. से., p. 15; अख., p. 25.

[3] वी. मि., p. 306; स्मृ. कल्प., p. 62; [c] अश्रान्त, वि. र., p. 22.

[4] वी. मि., p. 306; स्मृ. कल्प., p. 62; वि. र., p. 23; परा. मा., p. 232; व्य. सा., p. 133; * स; † नश्येत दापिते.

[5] परा. मा., p. 232; स्मृ. कल्प., p. 62; वि. र., p. 25; [d] राजदैवोपघातेन, वि. चि., p. 16; [e] यद्याधिः, वी. मि., p. 309; व्य. म., p. 107; व्य. मा., p. 121; व्य. सा., p. 134; [d, e] दैवराजोपघातेन यत्राधिर्नाशमाप्नुयात्.

[6] परा. मा., p. 232; स्मृ. कल्प., p. 62; [f] अन्यं दापयेद्बन्धं सोदयं च ऋणं धनी; वि. र., p. 25; [f] अन्यं दापयेद्बन्धं, वि. चि., p. 16; [f] अन्यं दाप्यते बन्धं शोधयेत्; व्य. सा., p. 134; * प्रापयेद्द्यात्साधयित्वा ऋणं धनम् । वी. मि., p. 309; [f] अन्यं दापयेद्बन्धं शोधयेद्वा धनं ऋणी; व्य. म., p. 107; [g] वा धनं ऋणी, व्य. मा., p. 121; [f] अन्यद्दाप्यते बन्धः सोदयं वा धनं त्वृणी.

बन्धहस्तस्य[1] यद्देयं चित्रेण चरितेन वा ।
अदत्तेऽर्थेऽखिलं बन्धं नाकामो दाप्यते क्वचित् ॥ ४२

भुक्ते[2a] चासारतां[b] प्राप्ते [c]मूलहानिः प्रजायते ।
बहुमूल्यं तत्र नष्टमृणिकं तत्र तोषयेत् ॥ ४३

क्षेत्रमेकं[3] द्वयोर्बन्धे[d] दत्तं यत्समकालिकम् ।
येन भुक्तं [e]भवेत्पूर्वं तस्य [f]सिद्धिमवाप्नुयात् ॥ ४४

तुल्यकालोपस्थितयोर्द्वयोरपि[4] समं भवेत् ।
प्रदाने विक्रये चैव विधिः [g]स परिकीर्तितः ॥ ४५

आधानं[5] विक्रयो दानं साक्षिलेख्यकृतं यदा ।
एकक्रियानिबन्धेन लेख्यं तत्रापहारकम् ॥ ४६

अनिर्दिष्टं[6] च निर्दिष्टं एकत्र च विशेषितम् ।
विशेषलिखितं[7] ज्याय इति कात्यायनोऽब्रवीत् ॥ ४७

[1] वि. र., p. 27; स्मृ. कल्प., p. 62.

[2] या. अप., p. 659; स्मृ. कल्प., p. 62; स्मृ. च., III, pp. 327 and 328; वि. र., p. 25; परा. मा., p. 132; वि. चि., p. 16; व्य. सा., p. 133; [a] भुक्ते वा, वी. मि., p. 309; [a] भुङ्क्ते वाऽसारतां, या. वी., p. 487; [c] फल, व्य. म., p. 107; [b] त्वसारतां, वि. से., pp. 17 and 315; [b] वा.

[3] या. अप., p. 659; स्मृ. कल्प., p. 63; [d] बन्धं; [f] तत्सिद्धिमाप्नुयात्, स्मृ. च., III, p. 336; वि. र., p. 36; [f] तत्सिद्धिमाप्नुयात्, परा. मा., p. 233; व्य. नि., pp. 186 and 196; [e] तयोः पूर्वं तस्य तत्सिद्धिमाप्नुयात्, स. वि., p. 236; वी. मि., p. 312; वि. से., p. 19; [d] वेधे; [f] तत्सिद्धिमाप्नुयात्.

[4] वि. र., p. 37; स्मृ. कल्प., p. 63; [g] सं, (या अप., p. 659; स्मृ. च., III, p. 337; पूर्वार्धं परं) व्य. नि., pp. 186 and 196; (स. वि., p. 237; पूर्वार्धं परं) वि. से., p. 19.

[5] वि. र., p. 37; वि. से., p. 19.

[6] वि. से., p. 20. Doubtful. Ascribed to Kātyāyana by स्मृ. च., III, p. 338; परा. मा., III, p. 234; स. वि., p. 237, and वी. मि., p. 312 citing कल्पतरु.

[7] वि. से., p. 20.

हिरण्ये[1] द्विगुणीभूते पूर्णे काले [a]धृतावधौ ।
बन्धकस्य धनी स्वामी द्विसप्ताहं [b]प्रतीक्ष्य [c]तु ॥ ४८

तदन्तरा[2] धनं दत्वा ऋणी [*]बन्धमवाप्नुयात् ।
पूर्णे[3][d] विधौ सान्तलाभे बन्धस्वामी ततो भवेत् ।
अनिर्गते दशाहे तु ऋणी [e]मोक्षितुमर्हति ॥ ४९

गोप्याधिर्द्विगुणादूर्ध्वं[4] कृतकालो[f] यथाविधि ।
श्रावयित्वा[g] ऋणिकुले[h] भोक्तव्यः समनन्तरम् ॥ ५०

हिरण्ये[5] द्विगुणीभूते[i] नष्टे[j] चैवाधमर्णके ।
द्रव्यं तदीयं सङ्गृह्य [k]विक्रीणीत ससाक्षिकम् ॥ ५१

[1] व्य. म., p. 108; या. मि., p. 159; [a] कृतावधेः व्य. सा., p. 136; [a] कृतावधेः; [c] च, वी. मि., p. 315; [a] कृतावधौ; [b] प्रतीक्ष्यते, मि. बा., p. 225; [a] कृतावधेः; [c] च.

[2] वी. मि., p. 315; व्य. सा., p. 139; * चाधिं, मि. बा., p. 225.

[3] परा. मा., p. 240; स्मृ. कल्प., p. 62; [d] पूर्णेऽवधौ शान्तः स्मृ. च., III, pp. 331 and 389; [d] पूर्णावधौ शान्तलाभे बन्धे स्वामी धनी भवेत् । वि. र., p. 31; स्मृ. च., वत्पाठः, व्य. नि., p. 181; स्मृ. च. वत्पाठः. वी. मि., p. 316; [e] मोचितुं; [d] स्मृ. च. वत्पाठः, या. वी., p. 485; [d] पूर्णावधौ शान्तलाभे बन्धे स्वामी धने भवेत्; [e] प्रोञ्छितुं, व्य. मा., p. 125; [d] पूर्णे वाधौ शान्तलाभे बन्धे स्वामी धनी भवेत्.

[4] या. अप., p. 658; स्मृ. कल्प., p. 63; [f] कालस्तथा; [g] शोधयित्वा, स्मृ. च., III, p. 332; वि. र., p. 33; [f] कालस्तथापरः, व्य. नि., p. 178; [f] कालस्तथावधेः; [h] त्वृणी काले, वी. मि., p. 316; [f] कालस्तथावधेः; [g] आवेदयित्वर्णिकुले.

[5] या. अप., p. 644; स्मृ. कल्प., p. 67; [j] मृते नष्टे, (स्मृ. च., III, p. 332; वि. र., p. 73; स्मृ. कल्पतरुवत्पाठः) परा. मा., p. 240; (वि. चि., p. 33; स. वि., p. 245; स्मृ. कल्पवत्पाठः) वी. मि., p. 316; [i] भूते; [k] विक्रीणीते; व्य. म., p. 108; वि. से., p. 36; स्मृ. कल्पतरुवत्पाठः.

रक्षेद्वा[1] कृतमूल्यं तु दशाहं जनसंसदि।
ऋणानुरूपां[a] परतो [b, c]गृहीत्वाऽन्यं तु वर्जयेत्॥ ५२

न[2] भुङ्क्ते यः स्वमाधानं नादद्यान्न निवेदयेत्।
प्रमीतसाक्षी[d] ऋणिकः तस्य लेख्यमपार्थकम्॥ ५३

गृहवार्यापणं[3] धान्यं पशुस्त्रीवाहनानि च।
उपेक्षया विनश्यन्ति यान्ति चासारतां तथा॥ ५४

स्वधनं[4] च[e] स्थिरीकृत्य [f]गणनाकुशलैर्नृभिः।
तद्बन्धुज्ञातिविदितं[g] प्रगृह्णन्नापराध्नुयात्[h]॥ ५५

विवादोऽष्टादशोपेतः[5] पूर्वोत्तरविशेषितः।
व्याख्यातस्त्वधुना सम्यक्क्रियाभेदान्निबोधत॥ ५६

पूर्वं[6] कृता क्रिया या तु पालनीया तथैव सा।
अन्यथा क्रियते यत्र क्रियाभेदस्तदा भवेत्॥ ५७

विहाय[7] करणं पूर्वं धनिको वाधमर्णिकः।
कुर्यान्न्यूनाधिकं तुल्यं क्रियाभेदः स उच्यते॥ ५८

[1] या. अप., p. 644; स्मृ. कल्प., p. 67; [b] गृहीता, स्मृ. च., III, p. 332; [b] गृह्णीतान्यत्तु वि. र., p. 73; [a] रूपं परतो; [b] गृह्णीतान्यत्तु, परा. मा., p. 240; वि. चि., p. 33; [b] गृह्णीतान्यत्तु, स. वि., p. 245; [a] रूपं; [c] अन्यांस्तु, वी. मि., p. 316; वि. रवत्पाठः, वि. से., p. 36; [a] रूपं गृह्णीयात्तदन्यत्तु विवर्जयेत्.

[2] स्मृ. च., III, p. 336; स्मृ. कल्प., p. 63; वि. र., p. 35; [d] साक्षिऋणिकं.

[3] वि. र., p. 35; स्मृ. कल्प., p. 63.

[4] या. अप., p. 644; स्मृ. कल्प., p. 68; [f] नरैः, वि. र., p. 73; [f] नरैः; [h] प्रतिगृह्णन्नवाप्नुयात्, वि. चि., p. 33; [e] तु; [f] नरैः; [g] तद्धनं ज्ञातृविदितं, वि. से., p. 36; [f] नरैः.

[5] वि. र., p. 618.

[6] वि. र., p. 619.

[7] वि. र., p. 619.

द्विकेनार्थं[1] समादाय प्रपन्नः पञ्चकं तु यः ।
लाभं तत्र प्रमाणं स्यात्पश्चिमं [a]यद्धि निश्चितम् ॥ ५९

अस्वामिना[2] कृतो यस्तु दायो विक्रय एव वा ।
अकृतः स तु विज्ञेयो व्यवहारे यथास्थितिः ॥ ६०

उत्तरोत्तरबन्धेन[3] प्राग्बन्धः शिथिलो भवेत् ।
यः पश्चिमः क्रियाकारः स पूर्वाद्बलवत्तरः ॥ ६१

न्यासं[4] कृत्वा[b] परत्राधिं[c] कृत्वा वाधिं करोति यः ।
विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरा ॥ ६२

कृतं[5] चेदेकदिवसे विक्रयाधिप्रतिग्रहम् ।
त्रयाणामपि [d]सन्दिग्धे कथं तत्र विचारणा ॥ ६३

त्रीण्येवात्र[6][e] प्रमाणानि [f]विभजेयुर्यथांशतः ।
उभौ [g]चार्थानुसारेण [h]त्रिभागेन प्रतिग्रही ॥ ६४

सामकं[7] कर्षितं तत्स्यात्तदा न धनभाग्धनी ।
ऋणी च न लभेद्बन्धं परस्परमतं विना ॥ ६५

[1] वि. चि., p. 256; वि. र., p. 619; [a] तद्धि, वि. से., p. 127; [a] यद्धि.

[2] वि. चि., p. 256; वि. से., p. 128.

[3] वि. चि., p. 257; वि. र., p. 620; वि. से., p. 128.

[4] वि. चि., p. 257; वि. र., p. 620; [c] ततश्चार्थं गृहीत्वाधिं, वि. च., p. 101; [b] दत्वा ततश्चार्थं गृहीत्वाधिं, वि. से., p. 128; [b] कृत्वोत्तरं पूर्वं ततश्चाधिं.

[5] स्मृ. च., III, p. 340; वि. र., p. 620; वि. च., p. 101; वि. से., p. 91; [d] सन्देहे.

[6] स्मृ. च., III, p. 340; वि. र., p. 620; [e] व हि; [f] विभजेरन्; [g] रूपेण; [h] भागेण प्रतिग्रहः, वि. से., p. 91; वि. रत्नपाठः.

[7] व्य. सा., p. 139.

धनं[1] मूलीकृतं *दत्वा यदाधिं प्रार्थयेदृणी ।
तदैव† तस्य मोक्तव्यस्त्वन्यथा [a]दोषभाग्धनी ॥ ६६

क्षेत्रादिकं[2] यदा भुक्तमुत्पन्नमधिकं ततः ।
मूलोदयं प्रविष्टं चेत्तदाधिं प्राप्नुयादृणी ॥ ६७

प्रयोजके[3] सति धनं मूले न्यस्याऽऽधिमाप्नुयात् ।
परिभाष्य[4] यदा‡ क्षेत्रं [b]दद्यात्तु धनिने ऋणी ।
तदा [c] तच्छान्तलाभेऽर्थे [d]मोक्तव्यमिति [e]निश्चयः ॥ ६८

आधिस्तु [f] सोदये द्रव्ये प्रदातव्यं त्वया मम ।
कुसीदाधिविधिस्त्वेष[5] धर्म्यः सम्परिकीर्तितः ॥ ६९

यत्राधिकं[6][g] गृहक्षेत्रं भोगेन प्रकर्षान्वितम् ।
तत्रर्णी [h]चाप्नुयाद्बन्धं धनी चैव ऋणं तथा ॥ ७०

[1] परा. मा., p. 243; स्मृ. कल्प., p. 62; स्मृ. च., III, p. 341; व्य. सा., p. 139; * कृत्वा; † तथैव, स. वि., p. 241; वी. मि., p. 319; [a] दण्डभाक्.

[2] परा. मा., p. 244; स्मृ. कल्प., p. 62; स्मृ. च., III, p. 342; वि. र., p. 29; व्य. सा., p. 140; वी. मि., p. 320; व्य. म., p. 109.

[3] स. वि., p. 241.

[4] परा. मा., p. 244; स्मृ. कल्प., p. 62; [b] प्रदद्याद्धनिके; [d] व्य. इति निश्चितः; [f] प्रविष्टे सोदये द्रव्यं प्रदातव्यं पुनर्मम। वि. र., p. 29; [c] त्वयैतत्; [e] निश्चितः; [b, f] स्मृ. कल्पवत्पाठः द्रव्ये इति च भेदः, व्य. सा., p. 140; ‡ तदा क्षेत्रं दृष्ट्वा तु धनिके ऋणम्. पूर्वार्धं परम्, स. वि., p. 241; [b] प्रदद्याद्धनिके; [c] त्वयैतत् after निश्चयः, प्रविष्टे सोदये द्रव्ये प्रदातव्यं पुनर्मम, वी. मि., p. 320; स. विवत्पाठः.

[5] वि. र., p. 29; स्मृ. कल्प., p. 62.

[6] परा. मा., p. 245; स्मृ. कल्प., p. 62; [h] न, स्मृ. च., III, p. 343; [g] हितं, वि. र., p. 32; [g] हितं गृहं; [h] न, वि. चि., p. 17; वि. र वत्पाठ·

पूर्णे[1] प्रकर्षे [a]तत्साम्यमुभयोः [b]परिकीर्तितम् ।
अपूर्णे[2] तु प्रकुर्यातां परस्परमतेन तौ ॥ ७१

यदि[3] प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी ।
ऋणी न [c]लभते बन्धं परस्परमतं विना ॥ ७२

## प्रतिभूः

दर्शने[4] प्रत्यये दाने [d]ऋणिद्रव्यार्पणे तथा ।
चतुष्प्रकारः प्रतिभूः [e]शास्त्रे दृष्टो मनीषिभिः ॥ ७३

आहैको[5] [f] दर्शयामीति[g, h] साधुरेषोऽपरोऽब्रवीत्[i] ।
दाताहमेतद्द्रविणमर्पताम्यपरो*[j] वदेत्[k] ॥ ७४

दर्शनप्रतिभूर्यस्तु[6] देशे काले च दर्शयेत् ।
निबन्धं वाऽऽवहेत्तत्र दैवराजकृताद्दते ॥ ७५

[1] परा. मा., p. 246; स्मृ. कल्प., p. 63; [a] तत्स्याम्यमुभयोरपि, स्मृ. च., III, p. 344; वि. र., p. 32; वि. चि., p. 17; [b] अपि.

[2] परा. मा., p. 246; स्मृ. कल्प., p. 63; स्मृ. च., III, p. 344; वि. र., p. 32; वि. चि., p. 17.

[3] परा. मा., p. 246; या. मि., p. 169; [c] लभेत्, स्मृ. च., III, p. 345.

[4] या. अप., p. 655; स्मृ. कल्प., p. 63; स्मृ. च., III, p. 346; वि. र., p. 40; परा. मा., p. 246; व्य. नि., p. 184; वि. चि., p. 18; [d] ऋणे, स्मृ. सा., p. 326; वी. मि., p. 321; व्य. मा., p. 129; [e] शास्त्रदृष्टः, वि. से., p. 20; [d] ऋणे.

[5] या. अप., p. 655; स्मृ. कल्प., p. 63; [f] आहैकोऽहं दर्शयामि, स्मृ. च., III, p. 346; [g] दर्शयिष्यामि; [j] मीति चापरः; वि. र., p. 40; [h] एनं साधुरेष परोऽब्रवीत् । परा. मा., p. 246; व्य. नि., p. 184; वि. चि., p. 19; वि. रत्पाठः; स्मृ. सा., p. 326; स. वि., p. 247; [k] अब्रवीत्, वी. मि., p. 321; [i] इत्यपरः; [k] अब्रवीत्, या. वी., p. 479; [f] अथैको व्य. मा., p. 129; [f] आहैनं; [i] इत्यपरः; * एवं; [j] मि परो, वि. से., p. 20; [h] एनं; [k] अब्रवीत्.

[6] परा. मा., p. 247.

नष्टस्यान्वेषणे[1a] कालं दद्यात्प्रतिभुवे धनी ।
देशाध्वरूपतः[b] पक्षं मासं [c]सार्धमथापि वा ॥ ७६
यो[2] यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः ।
अदर्शयं[3] स तं तस्मै प्रयच्छेत्स्वधनाद्दणम् ॥ ७७
आद्यौ[4] तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ [d]तु विसंवादे तौ विना तत्सुतौ [e]तथा ॥ ७८
स्वामी[5] रिपुनिरुद्धाधिकृतदण्डितसंशयाः
रिक्थमात्रान्तावसायिराजवृत्तवीतराग-
व्रतिदरिद्रबालवृद्धस्त्रीरुग्णा न प्रतिभुवः ॥ ७९
उपस्थाप्यविपत्तौ[6] उपस्थाप्यस्य पुनः प्रतिभूः दाप्यः।८०
पुत्रेणापि[7] समं देयमृणं सर्वं तु पैतृकम् । ८१
प्रतिभाव्यं[8 f] तु यो दद्यात्पीडितः प्रतिभावितः ।
त्रिपक्षात्परतः सोऽर्थं द्विगुणं [g]लब्धुमर्हति ॥ ८२

[1] या. अप., p. 656; स्मृ. च., III, p. 348; [a] षणे, वि. र., p. 45; [a] षणे; [b] नुरूपतः, परा. मा., p. 247; व्य. नि., p. 186; [b] नुरूपतः; [c] अब्दं, वि. चि., p. 21; स्मृ. च वत्पाठः, (स. वि., p. 248; वी. मि., pp. 323 and 330; वि. रवत्पाठः) व्य. मा., p. 131; [c] अब्दं, वि. से., p. 22; वि. रवत्पाठः.

[2] वी. मि., p. 322.

[3] वी. मि., p. 322.

[4] या. अप., p. 655; स्मृ. कल्प., p. 63; [d] च, वि. र., p. 40; [e] अपि, परा. मा., p. 250; व्य. नि., p. 184; वि. चि., p. 19; [e] अपि, स्मृ. सा., p. 326; स. वि., p. 249; वी. मि., pp. 322 and 325; या. वी., p. 479; [e] अपि, व्य. म., p. 110; व्य. मा., p. 219; [e] अपि, वि. से., p. 20; [e] अपि.

[5] व्य. मा., p. 130.

[6] या. बा., p. 221.

[7] वी. मि., p. 327.

[8] व्य. म., p. 110; वि. र., p. 45; [f] प्राति, वि. चि., p. 21; वी. मि., p. 328; [f] प्राति; [g] दातुं, या. वी., p. 480; वि. से., p. 23; [f] प्राति.

साधुत्वाचेन्मन्दधिय[1] ऋणं दद्युरभाविताः ।
यदर्थं दापितास्तस्मान्न लभेरन् कथञ्चन ॥ ८३

नात्यन्तं[2] पीडनीयाः स्युर्ऋणं दाप्याः शनैः शनैः ।
स्वसाक्ष्येण नियोज्याः स्युर्विधिः प्रतिभुवामयम् ॥ ८४

नष्टे[3] मृते वा ऋणिके धनी पत्रं प्रदर्शयेत् ।
तत्कालावधिसंयुक्तं स्थानलेख्यं च कारयेत् ॥ ८५

प्रतिभुवा[4] तु यद्दत्तमपृष्टमृणिके धनम् ।
द्विगुणं न प्रतिभुवे प्रदेयमृणिकेन तु ॥ ८६

धर्मोपधिबलात्कारैर्गृहसंरोधनेन[5] [a] च ।
प्रतिपन्नमृणं[6] [b] दाप्यः सामादिभिरुपक्रमैः ।
धर्मोपधिबलात्कारैर्गृहसंरोधनेन च ॥ ८७

सुहृत्सम्बन्धिसन्दिष्टैः[7] सामोक्त्यानुगमेन[c] च ।
प्रायेण [d]धनिने दाप्यो [e]धर्म एष उदाहृतः ॥ ८८

ब्राह्मणस्तु[8] परिक्षीणः शनैर्दाप्यो यथोदयम् । ८९

[1] या. अप., p. 656; वि. र., p. 46. अभाषिताः । तदन्यदापिताः कस्माल्लभेरंस्ते कथं पुनः ॥

[2] या. अप., p. 656; वि. र., p. 45; वि. चि., p. 21; पूर्वार्धं परं, वी. मि., pp. 328 and 330; 328 तमे पूर्वार्धं परं दृश्यते.

[3] या. अप., p. 658; स्मृ. कल्प., p. 63; वि. र., p. 33.

[4] परा. मा., p. 253.

[5] परा. मा., p. 255; [a] धर्मावधि.

[6] व्य. म., p. 111; स्मृ. कल्प., p. 67; [b] पत्रमृणी, स्मृ. च., III, pp. 382 and 383; [b] पत्र ऋणी, वि. र., p. 69; वी. मि., p. 332; व्य. मा., p. 140.

[7] परा. मा., p. 255; म. कु., p. 277; [c] साम्ना च; [d] वा ऋणी, म. रा., p. 902; [c] साम्ना वानुनयेन च; [d] वा ऋणी, स्मृ. कल्प., p. 67; [d] वा ऋणी, स्मृ. च., III, p. 383; वि. र., p. 67; [e] धर्म्यं, वि. चि., p. 31; व्य. मा., p. 140; वि. से., p. 33; [d] वा ऋणी.

[8] वि. चि., p. 31.

## ऋणस्य दापनप्रकाराः

छद्मना[1] याचितं[a] चार्थमानीय[*] ऋणिकाद्धनी[b] ।
अन्वाहितादि[c] वाहृत्य[d] दाप्यते [e]यत्र सोपधिः ॥ ९०

यदा[2 f] स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते यत्र बलात्कारः [g]स कीर्तितः ॥ ९१

कर्मणापि[3] समं कुर्याद्धनिकं वाधमर्णिकः ।
समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥ ९२

हीनजातिं[4] परिक्षीणमृणार्थे कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ ९३

दारपुत्रपशून्[5 h] बध्वा[i] कृत्वा [j]द्वारोपवेशनम् ।
यत्रर्णी[k] दाप्यतेऽर्थं स्वं तदाचरितमुच्यते ॥ ९४

प्रतिपन्नस्य[6] धर्मोऽयं [l]व्यपलापी तु संसदि ।
लेख्येन साक्षिभिर्वाऽपि भावयित्वा [m]प्रदाप्यते ॥ ९५

[1] परा. मा., p. 256; म. कु., p. 277; [b] बली; [c] न्याहृ; [e] तत्र, म. रा., p. 902; म. कु. वत्पाठः, स्मृ. कल्प., p. 67; स्मृ. च., III, p. 383; वि. र., p. 67; वि. चि., p. 31; [a] याचयित्वार्थं, व्य. मा., p. 140; * वार्थं; वि. से., p. 33; [a] याचयित्वार्थं; [d] चाहृत्य.

[2] परा. मा., p. 256; म. कु., p. 277; [f] बध्वा; [g] प्र, म. रा., p. 902; [f] बध्वात्म, स्मृ. कल्प., p. 67; [f] बध्वा, स्मृ. च., III, p. 383; वि. र., p. 68; [f] बध्वा; [g] स. उच्यते, वि चि., p. 31; [f] बध्वा; [g] प्र. व्य. मा., p. 141; [f] बध्वा. वि. से., p. 34; वि. र. वत्पाठः.

[3] व्य. मा., p. 141.

[4] व्य. मा., p. 141.

[5] परा. मा., p. 256; म. कु., p. 277; [i] हत्वा; [k] यत्रार्थी, म. रा., p. 902; [j] सेवनं; [k] यद्दणी दाप्यते ह्यर्थं, स्मृ. कल्प., p. 67; [i] रुध्वा, स्मृ. च., III, p. 383; वि. र., p. 68; [h] पुत्रदार; [i] रुध्वा, परा. मा., p. 256; वि. चि., p. 31; [i] रुध्वा, वि. से., p. 34; [h] पुत्रदार.

[6] व्य. म., p. 112; स्मृ. कल्प., p. 68; [l] व्यवसाय; [m] प्रदापयेत्, स्मृ. च., III, p. 387; वि. र., p. 75; वी. मि., p. 336.

प्रदातव्यं[1] यद्भवति [a,b]न्यायतस्तद्ददाम्यहम् ।
एवं यत्रर्णिको ब्रूते क्रियावादी स उच्यते ॥ ९६

न[2] [c] रोद्धव्यः क्रियावादी सन्दिग्धेऽर्थे कथञ्चन ।
आसेधयंस्त्वनासेध्यं[d] दण्ड्यो भवति धर्मतः ॥ ९७

रूपसंख्यादिलाभेषु[3] यत्र भ्रान्तिर्द्वयोर्भवेत् ।
देयानादेययोर्वाऽपि सन्दिग्धोऽर्थः [e]स कीर्तितः ॥ ९८

पूर्णावधौ[4] शान्तलाभ[f] ऋणमुद्ग्राहयेद्धनी ।
धारयेद्वा[g] ऋणी लेख्यं चक्रवृद्धिव्यवस्थया ॥ ९९

द्विगुणस्योपरि[5] यदा चक्रवृद्धिः प्रगृह्यते ।
भोगलाभस्तदा[h] तत्र मूलं स्यात्सोदयं [i]नृणाम् ॥ १००

अनावेद्य[6] तु राज्ञे यः सन्दिग्धेऽर्थे प्रवर्तते ।
प्रसह्य स विनेयः स्यात्स चाप्यर्थो न सिध्यति ॥ १०१

[1] व्य. म., p. 113; स्मृ. कल्प., p. 68; स्मृ. च., III, p. 387; [b] प्रददामि तत्, वि. र., p. 75; [a] धर्मतः, वि. चि., p. 34; [b] तद्ददामि, वी. मि., p. 336; वि. से., p. 37; [b] तद्ददामि.

[2] व्य. म., p. 112; स्मृ. कल्प., p. 68; [c] नासेद्धव्यः; [d] सेध्य, स्मृ. च., III, p. 387; वि. र., p. 75; [c] नासेद्धव्यः, वि. चि., p. 34; [c] नासेद्धव्यः, वी. मि., p. 336; वि. से., p. 37; [c] नासेद्धव्यः; [d] सेध्य.

[3] स्मृ. च., III, p. 388; स्मृ. कल्प., p. 68; [e] प्रकीर्तितः, वि. र., p. 75; [e] स उच्यते वि चि., p. 34; अदेयदेययोर्वाऽपि सन्दिग्धार्थः प्रकीर्तितः। वी. मि., p. 336; वि· से., p. 37; वि. चिवत्पाठः.

[4] वि. चि., p. 28; स्मृ. कल्प., p. 67; [f] लाभमृणं; [g] कारयेद्वा, वि. र., p. 72; [g] कारयेद्वा, वि. चि., p. 33; वी. मि., p. 337; व्य. म., p. 112; वि. रवत्पाठः, वि. से., p. 36; [g] कारयेद्वा धनी.

[5] स्मृ. च., III, p. 389; स्मृ. कल्प., p. 67; [h] तथा; [i] ऋणं, वि. र., p. 72; [i] ऋणं, वि. चि., p. 33; [i] ऋणं, वी. मि., p. 337; वि. से., p. 36; स्मृ. कल्पवत्पाठः.

[6] परा. मा., p. 258; स्मृ. च., III, p. 388; वी. मि., p. 336; व्य. म., p. 113.

ऋणस्य दापनप्रकाराः

छद्मना[1] याचितं[a] चार्थमानीय[*] ऋणिकाद्धनी[b] ।
अन्वाहितादि[c] वाहृत्य[d] दाप्यते [e]यत्र सोपधिः ॥ ९०

यदा[2 f] स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते यत्र बलात्कारः [g]स कीर्तितः ॥ ९१

कर्मणापि[3] समं कुर्याद्धनिकं वाधमर्णिकः ।
समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥ ९२

हीनजातिं[4] परिक्षीणमृणार्थे कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ ९३

दारपुत्रपशून्[5 h] बध्वा[i] कृत्वा [j]द्वारोपवेशनम् ।
यत्रर्णी[k] दाप्यतेऽर्थं स्वं तदाचरितमुच्यते ॥ ९४

प्रतिपन्नस्य[6] धर्मोऽयं [l]व्यपलापी तु संसदि ।
लेख्येन साक्षिभिर्वाऽपि भावयित्वा [m]प्रदाप्यते ॥ ९५

[1] परा. मा., p. 256; म. कु., p. 277; [b] बली; [c] न्याहृ; [e] तत्र, म. रा., p. 902; म. कु. वत्पाठः, स्मृ. कल्प., p. 67; स्मृ. च., III, p. 383; वि. र., p. 67; वि. चि., p. 31; [a] याचयित्वार्थं, व्य. मा., p. 140; * वार्थं; वि. से., p. 33; [a] याचयित्वार्थं; [d] चाहृत्य.

[2] परा. मा., p. 256; म. कु., p. 277; [f] बध्वा; [g] प्र, म. रा., p. 902; [f] बध्वात्म, स्मृ. कल्प., p. 67; [f] बध्वा, स्मृ. च., III, p. 383; वि. र., p. 68; [f] बध्वा; [g] स. उच्यते, वि चि., p. 31; [f] बध्वा; [g] प्र. व्य. मा., p. 141; [f] बध्वा. वि. से., p. 34; वि. र. वत्पाठः.

[3] व्य. मा., p. 141.

[4] व्य. मा., p. 141.

[5] परा. मा., p. 256; म. कु., p. 277; [i] हत्वा; [k] यत्रार्थी, म. रा., p. 902; [j] सेवनं; [k] यद्दणी दाप्यते ह्यर्थं, स्मृ. कल्प., p. 67; [i] रुध्वा, स्मृ. च., III, p. 383; वि. र., p. 68; [h] पुत्रदार; [i] रुध्वा, परा. मा., p. 256; वि. चि., p. 31; [i] रुध्वा, वि. से., p. 34; [h] पुत्रदार.

[6] व्य. म., p. 112; स्मृ. कल्प., p. 68; [l] व्यवसाय; [m] प्रदापयेत्, स्मृ. च., III, p. 387; वि. र., p. 75; वी. मि., p. 336.

प्रदातव्यं[1] यद्भवति [a,b]न्यायतस्तद्ददाम्यहम् ।
एवं यत्रर्णिको ब्रूते क्रियावादी स उच्यते ॥ ९६

न[2 c] रोद्धव्यः क्रियावादी सन्दिग्धेऽर्थे कथञ्चन ।
आसेधयंस्त्वनासेध्यं[d] दण्ड्यो भवति धर्मतः ॥ ९७

रूपसंख्यादिलाभेषु[3] यत्र भ्रान्तिर्द्वयोर्भवेत् ।
देयानादेययोर्वाऽपि सन्दिग्धोऽर्थः [e]स कीर्तितः ॥ ९८

पूर्णावधौ[4] शान्तलाभ[f] ऋणमुद्ग्राहयेद्धनी ।
धारयेद्वा[g] ऋणी लेख्यं चक्रवृद्धिव्यवस्थया ॥ ९९

द्विगुणस्योपरि[5] यदा चक्रवृद्धिः प्रगृह्यते ।
भोगलाभस्तदा[h] तत्र मूलं स्यात्सोदयं [i]नृणाम् ॥ १००

अनावेद्य[6] तु राज्ञे यः सन्दिग्धेऽर्थे प्रवर्तते ।
प्रसह्य स विनेयः स्यात्स चाप्यर्थो न सिध्यति ॥ १०१

[1] व्य. म., p. 113; स्मृ. कल्प., p. 68; स्मृ. च., III, p. 387; [b] प्रददामि तत्, वि. र., p. 75; [a] धर्मतः, वि. चि., p. 34; [b] तद्ददामि, वी. मि., p. 336; वि. से., p. 37; [b] तद्ददामि.

[2] व्य. म., p. 112; स्मृ. कल्प., p. 68; [c] नासेद्धव्यः; [d] सेध्य, स्मृ. च., III, p. 387; वि. र., p. 75; [c] नासेद्धव्यः, वि. चि., p. 34; [c] नासेद्धव्यः, वी. मि., p. 336; वि. से., p. 37; [c] नासेद्धव्यः; [d] सेध्य.

[3] स्मृ. च., III, p. 388; स्मृ. कल्प., p. 68; [e] प्रकीर्तितः, वि. र., p. 75; [e] स उच्यते वि चि., p. 34; अदेयदेययोर्वाऽपि सन्दिग्धार्थः प्रकीर्तितः । वी. मि., p. 336; वि. से., p. 37; वि. चिवत्पाठः.

[4] वि. चि., p. 28; स्मृ. कल्प., p. 67; [f] लाभमृणं; [g] कारयेद्वा, वि. र., p. 72; [g] कारयेद्वा, वि. चि., p. 33; वी. मि., p. 337; व्य. म., p. 112; वि. रवत्पाठः, वि. से., p. 36; [g] कारयेद्वा धनी.

[5] स्मृ. च., III, p. 389; स्मृ. कल्प., p. 67; [h] तथा; [i] ऋणं, वि. र., p. 72; [i] ऋणं, वि. चि., p. 33; [i] ऋणं, वी. मि., p. 337; वि. से., p. 36; स्मृ. कल्पवत्पाठः.

[6] परा. मा., p. 258; स्मृ. च., III, p. 388; वी. मि., p. 336; व्य. म., p. 113.

परहस्ताद्गृहीतं[1] यत्कुषीदविधिना[a] ऋणम्* ।
येन यत्र यथा देयमदेयं चोच्यतेऽधुना ॥ १०२

याचमानाय[2] दातव्यमल्पकालमृणं[b, c] कृतम् ।
पूर्णेऽवधौ[d] शान्तलाभमभावे च पितुः सुतैः ॥ १०३

तपस्वी[3] चाग्निहोत्री च ऋणवान् म्रियते यदि ।
तपस्या चाग्निहोत्रं च सर्वं तद्धनिनो भवेत् ॥ १०४

निर्धनं[4] ऋणिनं[e] कर्म गृहमानीय कारयेत् ।
शौण्डिकाद्यं ब्राह्मणस्तु दापनीयः शनैः शनैः ॥ १०५

धनस्त्रीहारिपुत्राणां[5] पूर्वाभावे, यथोत्तरं आधमर्ण्यं ॥ १०६

तदभावे क्रमशोऽन्येषां रिक्थभाजाम् ॥ १०७

### देयानि ऋणानि

ऋणं[6] धर्मादितो ग्राह्यं यस्तूपरि न लेखयेत् ।
न चैवोपगतं दद्यात्तस्य तद्वृद्धिमाप्नुयात् ॥ १०८

व्याधितोन्मत्तवृद्धानां[7] तथा दीर्घप्रवासिनाम् ।
ऋणमेवंविधं पुत्रान् जीवतामपि दापयेत् ॥ १०९

[1] वि. र., p. 47; स्मृ. कल्प., p. 64; [a] वा. व्य. मा., p. 132; * त्वृणम्, वि. से., p. 24; [a] वा.

[2] परा. मा., p. 262; स्मृ. कल्प., p. 64; स्मृ. च., III, pp. 372 and 392; वि. र., p. 47; [b] अप्रकालं; [d] पूर्णावधौ, वि. चि., p. 22; [b] अल्पकालकृतं ऋणम्। (स. वि., pp. 252 and 255; वी. मि., p. 340; वी. र. वत्पाठः,) वि. से., p. 24; [c] कृतं ऋणं; [d] पूर्णावधौ.

[3] स. वि., p. 252.

[4] वी. मि., p. 338; स्मृ. कल्प., p. 67; या. अप., p. 646; वि. र., p. 71; [e] ऋणिकं गेहमानीय कर्म कारयेत्, वि. से., p. 34; [e] ऋणिकं.

[5] या. बा., p. 218.

[6] स्मृ. च., III, p. 381.

[7] वि. से., p. 26.

सान्निध्येऽपि[1] पितुः पुत्रैर्ऋणं देयं विभावितम् ।
जात्यन्धपतितोन्मत्त[a] क्षयश्वित्रादिरोगिणः[b] ॥ ११०

एकच्छायाप्रविष्टानां[2] दाप्यो यस्तत्र दृश्यते ।
प्रोषितस्य सुतः सर्वं पित्र्यमंशं मृतस्य तु ॥ १११

एकच्छायाकृतं[3] सर्वं दद्यात्तु [c]प्रेषिते सुतः ।
मृते पितरि पित्र्यंशं परर्णं न कदाचन ॥ ११२

पित्र्यमेवाग्रतो[4][d] देयं पश्चादात्मीयमेव च ।
तयोः पैतामहं पूर्वं *देयमेवमृणं सदा ॥ ११३

ऋणमात्मीयवत्पित्र्यं[5] पुत्रैर्देयं[e] विभावितम् ।
पैतामहं समं [f]देयमदेयं तत्सुतस्य तु ॥ ११४

कुटुम्बार्थेऽध्यधीनोऽपि[6] व्यवहारं समाचरेत् ।
स्वदेशे वा विदेशे वा तं विद्वान्न विचालयेत् ॥ ११५

अतः[7] पुत्रेन जातेन स्वार्थमुत्सृज्य यत्नतः ।
ऋणात्पिता मोचनीयो यथा न नरकं व्रजेत् ॥ ११६

[1] परा. मा., p. 264; स्मृ. च., III, p. 394; वि. र., p. 51; व्य. नि., p. 189; वि. चि., p. 23; [a] बधिर, स वि., p. 256; वि. से., p. 26; [b] रोगिणां.

[2] व्य. नि., p. 190.

[3] वि. र., p. 51; व्य. नि., p. 191; वि. से., p. 26; [c] शोषिते.

[4] या. अप., p. 650; स्मृ. कल्प., p. 64; वि. र., p. 47; परा. मा., p. 264; व्य. सा., p. 120; * मेतादृणं, स. वि., p. 256; [d] आदौ पितृकृतं पूर्वार्धं वी. मि., p. 344; [d] पित्र्यं पूर्वमृणं, व्य. म., p. 115; अख., p. 27; पूर्वार्धं परम्.

[5] परा. मा., p. 265; या. मि., p. 152; [e] देयं पुत्रैः, गौ. मि., p. 97; स्मृ. कल्प., p. 64; वि. र., p. 49; [f] न देयं, वी. मि., p. 341; [f] न देयं, व्य. म., p. 114; मि. बा., p. 186; वि. से., p. 25; [f] न देयं तत्सुतेन तु.

[6] स्मृ. कल्प., p. 65.

[7] या. अप., p. 650; व्य. मा., p. 137.

पितर्युपरते[1] पुत्रा ऋणं दद्युर्यथांशतः ।
विभक्ता [a]अविभक्ता वा यो वा तामुद्वहेद्धुरम् ॥ ११७

सौराक्षिकं[2 b] वृथा दानं [c]कामक्रोधप्रतिश्रुतम् ।
प्रातिभाव्यं दण्डशुल्कशेषं [d]पुत्रं न दापयेत् ॥ ११८

शौण्डिकव्याधरजकगोपनापितयोषिताम्[3 e] ।
अधिष्ठाता ऋणं दाप्यस्तासां भर्तृक्रियासु तत् ॥ ११९

ऋणभाग्द्रव्यहारी[4 f] च यदि सोपद्रवः सुतः ।
स्त्रीहारी [g]तु तथैव स्यादभावे धनहारिणः ॥ १२०

पितृव्य[5 h] भ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति ॥ १२१

यः[6] स्वामिना नियुक्तस्तु धनायव्ययपालने ।
कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥ १२२

[1] व्य. मा., p. 133 ; वि. चि., p. 22 ; [a] ह्यविभक्ता.

[2] परा. मा., p. 265 ; स्मृ. कल्प., p. 65 ; वि. र., p. 57 ; [d] पुत्रान्न, वि. चि., p. 25 ; स. वि., p. 256 ; [b] कत्रृथादान ; [d] पुत्रैर्न, वी. मि., p. 343 ; या. वी., p. 468 ; [c] परि ; [d] पुत्रान्न, व्य. म., p. 115 ; वि. से., p. 28 ; [d] पुत्रान्न.

[3] वि. र., p. 60 ; स्मृ. कल्प., p. 64 ; वि. से., p. 30 ; [e] नाविक.

[4] वि. चि., p. 26 ; वि. र., p. 64 ; वी. मि., p. 345 ; [g] च. उत्तरार्धं परं, या. वी., p. 473 ; [f] व्यवहारी, व्य. म., p. 116 ; उत्तरार्धं परं ; [g] च.

[5] या. अप., p. 647 ; स्मृ. कल्प., p. 65 ; स्मृ. च., III, p. 406 ; वि. र., p. 54 ; वि. च., p. 24 ; परा. मा., p. 267 ; व्य. नि., p. 192 ; वि. चि., p. 27 ; दा. त., p. 178 ; व्य. त., p. 233 ; स. वि., pp. 253 and 263 ; [h] पितृद्रव्यं भ्रातृपुत्रदास. इति. 253 ; तमपृष्ठे ; वी. मि., p. 352 ; वि. से., p. 27.

[6] व्य. नि., p. 192.

उद्ग्रामादिकमादाय[1a] स्वामिने न ददाति यः ।
स तस्य दासः पुत्रः स्त्री पशुर्वा जायते गृहे ॥ १२३

ऋणं[2] पुत्रकृतं पित्रा शोध्यं यदनुमोदितम् ।
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति ॥ १२४

ऋणी[3] बन्धमवाप्नुयात् ।
फलभोग्यं पूर्णकालं दत्वा द्रव्यं तु सामकम् ॥ १२५

यदि[4] प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी ।
ऋणी[5] च न लभेद्बन्धं परस्परमतं विना ॥ १२६

अधमर्णोऽर्थसिध्यर्थमुत्तमर्णेन[6] वादितः ।
दापयेद्धनिकस्यार्थमधमर्णविभावितम् ॥ १२७

अर्थेऽपव्ययमानं[7] तु करणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः ॥ १२८

यो[8] यावन्निह्नुवीतार्थं मिथ्या यावति वादयेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्विगुणं दमम् ॥ १२९

धर्म्यादिनोद्ग्राह्य[9b] धनं यस्तूपरि न लेखयेत् ।
न चैवोपगतं दद्यात्तस्य तद्वृद्धिमाप्नुयात् ॥ १३०

[1] वि. र., p. 55 ; स्मृ. कल्प., p. 65 ; व्य. नि ; [a] उद्दामा, व्य. मा., p. 136 ; [a] उद्धारादिकमादाय.

[2] या. अप., p. 648 ; स्मृ. कल्प., p. 65 ; वि. र., p. 56 ; परा. मा., p. 268 ; वि. चि., p. 28 ; वी. मि., p. 353 ; वि. से., p. 28.

[3] या. मि., p. 162 ; व्य. सा., p. 139.

[4] या. मि., p. 162.

[5] या. मि., p. 162.

[6] स्मृ. कल्प., p. 68.

[7] स्मृ. कल्प., p. 68.

[8] स्मृ. कल्प., p. 68.

[9] वि. र., p. 80 ; स्मृ. कल्प., p. 69 ; [b] धर्मादिनोद्ग्राह्य ऋणं वि. से., p. 40.

## ११

## ॥ निक्षेपः ॥

ऋणादानं[1] प्रयोगादिदापनान्तं प्रकीर्तितम् ।
निक्षेपस्याधुना सम्यग्विधानं श्रूयतामिति ॥ १

### औपनिधिकम्

अनाख्यातं[2] व्यवहितमसंख्यातमदर्शितम् ।
मुद्राङ्कितं च [a]यद्दत्तं तदौपनिधिकं स्मृतम् ॥ २

### न्यासस्वरूपम्

राजचौराराति भयाद्दायादानां[3 b, c] च [d]वञ्चनात् ।
स्थाप्यतेऽन्यगृहे[e] द्रव्यं [f, g]न्यासस्तत्परिकीर्तितम् ॥ ३

[1] वि. र., p. 83; वि. से., p. 129.

[2] या. अप., p. 662; स्मृ. कल्प., p. 69; स्मृ. च., III, p. 4; परा. मा., p. 279; व्य. नि., p. 198; व्य. सा., p. 142; वी. मि., p. 361; [a] यद्द्रव्यं, व्य. मा., p. 148.

[3] या. अप., p. 662; स्मृ. कल्प., p. 69; [d] बन्धनात्, स्मृ. च., III, p. 5; [d] बाधनात्; [g] तः, वि. र., p. 83; [c] दिक; [e] अन्यस्य यद्द्रव्यं न्यासः स परिकीर्तितः। परा. मा., p. 279; व्य. नि., p. 199; [c] दिक; [f] तु परिकीर्तितः, व्य. सा., p. 142; [f] स परिकीर्तितः, स. वि., p. 265; [c] दिषु; [f] स परिकीर्तितः, वी. मि., p. 361; [b] चोरादिक; [f] स परिकीर्तितः, व्य. मा., p. 148; [f] स परिकीर्तितः, वि. से., p. 129; [b] चौरादिक; [e] अन्यत्र यद्द्रव्यं न्यासः स परिकीर्तितः.

### स्थापनप्रकारः

**स्थानं[1][a] गृहं [b]स्थलं चैव तद्दणं विविधान् गुणान् ।**
**सत्यं शौचं बन्धुजनं परीक्ष्य स्थापयेन्निधिम् ॥ ४**

### तस्य द्वैविध्यम्

**स[2] पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।**
**प्रतिदानं तथैवास्य प्रत्ययः स्याद्विपर्यये ॥ ५**
**ससाक्षिकं[3] रहोदत्तं द्विविधं [c]तदुदाहृतम् ।**
**पुत्रवत्परिपाल्यं [d]तु विनश्यत्यनवेक्षया ॥ ६**

### निक्षेपादिरक्षणं यत्नेन कर्तव्यम्

**ददतो[4] यद्भवेत्पुण्यं [e]हेमकुप्याम्बरादिकम् ।**
**तत्स्यात्पालयतो न्यासं [f]तथा च शरणागतम् ॥ ७**
**भर्तुर्द्रोहे[5][g] यथा नार्याः पुंसः पुत्रसुहृद्वधे ।**
**दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥ ८**

[1] परा. मा., p. 280; स्मृ. कल्प., p. 69; [b] गृहस्थं च तद्बलं विभवं वि. र., p. 85; स्मृ. कल्पवत्पाठः, व्य. नि., p. 198; [a] ज्ञानं गृहं गृहस्थं च तत्फलं विभवं, वी. मि., p. 362; [b] च तद्वर्णं विधानं च गुणं तथा। वि. से., p. 130; स्मृ. कल्पवत्पाठः.

[2] स्मृ. कल्प., p. 69.

[3] परा. मा., p. 281; स्मृ. कल्प., p. 69; [c] समु; [d] तत्, (स्मृ. च., III, p. 416; वि. र., p. 85; व्य. सा., p. 142; [c] तमु; [d] तत्; स. वि., p. 266; स्मृ. कल्पवत्पाठः, वी. मि., p. 362; [c] समु; [d] तद्विनश्यत्यनवेक्षणे, व्य. मा., p. 149; [c] समु; [d] तद्विनश्यत्यनवेक्षणात्.

[4] या. अप., p. 662; स्मृ. कल्प., p. 69; [e] रूप्य, स्मृ. च., III, p. 416; वि. र., p. 85; [f] तथैव, परा. मा., p. 281; व्य. नि., p. 201; [e] रूप्य, स. वि., p. 266; [e] रूप्य; [f] यथैव, वी. मि., p. 362; व्य. म., p. 118; [f] यथैव, व्य. मा., p. 150; [e] रूप्य.

[5] या. अप., p. 662; स्मृ. कल्प., p. 69; [g] भर्तृद्रोहे, स्मृ. च., III, p. 416; (वि. र., p. 86; व्य. नि., p. 201; स. वि., p. 266; स्मृ. कल्पवत्पाठः, वी. मि., p. 362; [g] भर्तृद्रोहं, व्य. मा., p. 150; वि. स्वंत्पाठः, वि. से., p. 130; स्मृ. कल्पवत्पाठः.

न्यासद्रव्यं[1] न गृह्णीयात् तन्नाशस्त्वयशस्करः ।
गृहीतं पालयेद्यत्नात्सकृद्याचितमर्पयेत् ॥ ९

स्थापितं[2] येन विधिना येन [a]यच्च [b]विभावितम् ।
तथैव *तस्य [c,d]दातव्यमदेयं प्रत्यनन्तरम् ॥ १०

निक्षेपनाशे व्यवस्था

देवराजोपघातेन[3] यदि [e]तन्नाशमाप्नुयात् ।
ग्रहीतृद्रव्यसहितं[f] तत्र दोषो न विद्यते ॥ ११

भेदेनोपेक्षया[4] न्यासं [g]ग्रहीता [h]यदि नाशयेत् ।
याच्यमानो न दद्याद्वा [i,j]दाप्यस्तत्सोदयं भवेत् ॥ १२

[1] स्मृ. कल्प., p. 69; स्मृ. च., III, p. 417; पूर्वार्धं परं, वि. र., p. 86; परा. मा., p. 286; चतुर्थपादं परम्, स. वि., p. 266; पूर्वार्धं परं, वी. मि., p. 362.

[2] परा. मा., p. 281; स्मृ. कल्प., p. 69; [a] येन; [d] न देयं प्रत्यनन्रे, स्मृ. च., III, p. 421; [c] तद्देयं न देयं प्रत्यनन्तरे, वि. र., p. 87; [a] यत्र यथाविधि न देयं प्रत्यनन्तरे, वि. चि., p. 37; [b] यथाविधि; [d] न देयं व्य. सा., p. 142; * तच्च वी. मि., p. 367; [b] यथाविधि; [c] तद्देयं न देयं प्रत्यनन्तरे; व्य. म., p. 118; [b] यथाविधि वि. से., p. 130; वि. मि., वत्पाठः.

[3] परा. मा., p. 281; वि. र., p. 88; व्य. नि., p. 201; स. वि., p. 266; वी. मि., p. 362; [f] तद्द्रव्यसहितं न तद्दोषो, व्य. म., p. 119; व्य. मा., p. 150; [e] नाशमवाप्नुयात्; [f] तुर्द्रव्यसहितं, वि. से., p. 131; पूर्वार्धं परम्.

व्य. नि., p. 201, has also this verse:

निक्षिप्तं यस्य यत्किञ्चित्तत्प्रयत्नेन पालयेत् ।
देवराजकृते नाशे गृहीतं दातुमर्हति ॥

In some manuscripts of this digest it is ascribed to Kātyāyana.

[4] या. अप., p. 663; वि. र., p. 90; [j] तं, वि. च., p. 32; परा. मा., p. 283, (व्य. नि., p. 201; वि. चि., p. 38; [i] दाप्यं), स. वि., p. 267; [j] तं, वी. मि., p. 364; [i] दाप्यं, व्य. म., p. 118; व्य. मा., p. 151; [g] गृहीतं; [j] स्यात्, वि. से., p. 132; [h] यद्वि; [i] दाप्यं.

## तस्य भोगदण्डः

न्यासद्रव्येण[1] यः[a] कश्चित्साधयेत्कार्यमात्मनः[b] ।
दण्ड्यः स [c]राज्ञो भवति दाप्यस्तच्चापि सोदयम् ॥ १३

## अपह्नवे निर्णयः

गृहीत्वाऽपह्नुते[2d*] यश्च[e] साक्षिभिः शपथेन वा ।
विभाव्य[†] दापयेन्न्यासं तत्समं [f]विनयं तथा ॥ १४

रहो[3] दत्ते निधौ यत्र विसंवादः [g]प्रजायते ।
विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥ १५

मिथो[4] दायः कृतो येन गृहीतो मिथ एव वा ।
मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः ॥ १६

समुद्रे[5] नाप्नुयात्किञ्चिद्यदि तस्मान्न संहरेत् । १७

[1] परा. मा., p. 284; स्मृ. कल्प., p. 70; [a] यत्किञ्चित्, वि. र., p. 91; [b] अर्थं, व्य. नि., p. 201; [a] यत्किञ्चित्; [c] राज्ञा भवति दाप्यं, वि. से., p. 133; [b] अर्थं.

[2] या. अप., p. 664; स्मृ. कल्प., p. 70; [e] यत्र, स्मृ. च., III, p. 421; वि. र., p. 93; [e] यस्तु, परा. मा., p. 285; [d] ग्रहीता; [f] विनयेन्नृपः, स. वि., p. 269; [d] ग्रहीता, वी. मि., p. 366; [e] यत्र, व्य. मा., p. 152; * अपह्नवे; † विभाव्यम्.

[3] या. अप., p. 664; स्मृ. कल्प., p. 70; वि. र., p. 95; परा. मा., p. 285; स. वि., p. 269; वी. मि., p. 366; व्य. मा., p. 152; [g] अपि जायते.

[4] व्य. मा., p. 153.

[5] व्य. मा., p. 153.

अन्वाहिते[1] [a]याचितके शिल्पिन्यासे [b]सबन्धके ।
एष एवोदितो धर्मस्तथा [c]च शरणागते ॥ १८

यस्तु[2d] संस्क्रियते न्यासो दिवसैः [e]परिनिष्ठितैः ।
तदूर्ध्वं [f]स्थापयन् शिल्पी दाप्यो [g]दैवहतोऽपि तत् ॥ १९

याचितं[3] स्वाम्यनुज्ञातं प्रददन्नापराध्नुयात् । २०

[1] परा. मा., p. 288; स्मृ. कल्प., p. 70; वि. चि., p. 39; [b] तथैव च; [c] एव, स. वि., p. 270; [c] एव, वी. मि., p. 370; व्य. म., p. 119; वि. से., p. 133; [a] याचिते च; [b] तथैव च; [c] एव.

[2] वि. च., p. 33; वि. चि., p. 39; [d] यैस्तु; [f] हापयेत्; [g] हतं तु तत्, वि. से., p. 133; [e] निश्चितैः; [d] यैस्तु; [g] हतोऽपि सन्.

[3] वि. र., p. 97; स्मृ. कल्प., p. 70.

१२

# ॥ अस्वामिविक्रयः ॥

निक्षेपानन्तरं[1] प्रोक्तो भृगुणाऽस्वामिविक्रयः ।
श्रूयतां [a]तं प्रयत्नेन सविशेषं ब्रवीम्यहम् ॥ १

### अस्वामिलक्षणम्

निक्षेपान्वाहितन्यासहृतयाचितबन्धकम्[2*b,c,d,e] ।
उपांशुजनविक्रीतमस्वामी[f] सोऽभिधीयते ॥ २

### अध्यक्षनिवेदितक्रयेण दोषः

येन[3] क्रीतं[g] तु [h]मूल्येन प्रागध्यक्षनिवेदितम् ।
न[i] विद्यते तत्र दोषः स्तेनः [j]स्यादुपधिक्रयात् ॥ ३

[1] वि. र., p. 100; वि. से., p. 134; [a] तत्.

[2] परा. मा., p. 291; स्मृ. कल्प., p. 71; [c] न्यासं; [e] ञ्मम्; [f] येन; वि. र., p. 100; [d] बन्धकयाचितं; [f] येन, व्य. सा., p. 170; * संक्षेपान्यकृतन्यासं; [f] येन, स. वि., p. 305; [f] येन; वी. मि., p. 374; [b] हितं न्यासं हृतं; [f] येन.

[3] या. अप., p. 777; स्मृ. कल्प., p. 71; [h] मूल्येन; [j] वि; वि. र., p. 107; [h] मूल्येन, परा. मा., p. 293; [h] मूल्येन प्राग्राज्ञे वि; [i] न तत्र विद्यते; [j] वि; वि. चि., p. 44; [j] धिक्रये, स. वि., p. 306; [h] मूल्येन तत्प्राग्राज्ञे; [i] न तत्र विद्यते, वी. मि., p. 375; [g] कृतं तु मूल्येन प्राग्राज्ञे वि; [i] न तत्र विद्यते; द. वि., p. 328; वि. से., p. 138; [h] मूल्येन; [j] उपधिक्रये; [h] मूल्येन इति पाठबाहुल्यात् अयं सङ्गृहीतम्.

## उपविक्रयलक्षणम्

अन्तर्गृहे[1] बहिर्ग्रामान्निशायामसतो[a] जनात् ।
हीनमूल्यं [b]च यत्क्रीतं [c,d]ज्ञेयोऽसावुपविक्रयः ॥ ४

## तत्र क्रेतृशुद्धिनिर्णयः

पूर्वस्वामी[2] तु[e] तद्द्रव्यं* यदागत्य [f]विचारयेत् ।
तत्र [g]मूल्यं दर्शनीयं क्रेतुः शुद्धिस्ततो भवेत् ॥ ५

मूले[3]* समाहृते क्रेता नाभियोज्यः कथञ्चन ।
मूलेन सह वादस्तु† नाष्टिकस्य विधीयते ॥ ६

विक्रेता[4] दर्शितो यत्र हीयते व्यवहारतः ।
क्रेत्रे[h] राज्ञे *मूल्यदण्डौ प्रदद्यात्स्वामिने धनम् ॥ ७

परद्रव्येऽभिलषति[5] योऽस्वामी लोभसंयुतः ।
अभावयंस्ततः पश्चाद्दाप्यः स्याद्द्विगुणं दमम् ॥ ८

[1] परा. मा., p. 293; स्मृ. कल्प., p. 71; [a] निश्युपांशु; वि. र., p. 107; [a] निश्युपांशु; [d] धिक्रयः; व्य. नि., p. 202; [a] उपांशुशत-योजनात्; [b] भयक्रीतं विज्ञेयोऽस्वामिविक्रयः; वि. चि., p. 44; वि. रवत्पाठः; स. वि., p. 306; [d] धिक्रयः; वी. मि., p. 375; [d] धिक्रयः, द. वि., p. 328; [a] निश्युपांशु; [c] दुष्टः परिक्रयः; वि. से., p. 138; [a] निश्युपांशु; [b] तु.

[2] परा. मा., p. 295; स्मृ. कल्प., p. 71; [f] विधारयेत्; स्मृ. च., III, p. 502; वि. र., p. 101; [f] विधारयेत्; [g] मूलं; वि. चि., p. 41; [e] ति; [f] विधारयेत्; [g] मूलं; व्य. सा., p. 174; * यत्; स. वि., p. 306; [g] मूलं; वि. से., p. 139; [g] मूलं.

[3] या. मि., p. 242; व्य. सा., p. 173; * मूल्ये समाहिते; † वाहस्तु.

[4] परा. मा., p. 295; स्मृ. कल्प., p. 7; [h] क्रेतृराज्ञोर्मूल्यदमौ; स्मृ. च., III, p. 503; (वि. र., p. 102; वि. चि., p. 42; स्मृ. कल्पवत्पाठः), व्य. सा., p. 175; * मूल; वी. मि., p. 379; व्य. म., p. 121; वि. से., p. 139; स्मृ. कल्पवत्पाठः.

[5] वि. र., p. 106.

प्रमाणहीने[1][a] वादे तु पुरुषापेक्षया नृपः ।
समन्यूनाधिकत्वेन[b] स्वयं [c]कुर्याद्विनिर्णयम् ॥ ९

वणिग्वीथीपरिगतं[2] विज्ञातं[d] राजपूरुषैः ।
अविज्ञाताश्रयात्क्रीतं[3][e] विक्रेता यत्र वा मृतः ॥ १०

स्वामी [f]दत्वाऽर्धमूल्यं तु [g]प्रगृह्णीत स्वकं धनम् ।
अर्धं[4] द्वयोरपि[h] हृतं तत्र स्याद्व्यवहारतः ॥ ११

अविज्ञातक्रयो दोषस्तथा चापरिपालनम् ।
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः ॥ १२

वणिग्वीथीपरिगतं[5] विज्ञातं राजपूरुषैः ।
दिवा गृहीतं सत्क्रेता समृद्धो लभते धनम् ॥ १३

विक्रीयोर्वी[6][i] तु यत्क्रेतुर्भुक्तिं यो न [च] साधयेत् ।
स तस्मै तद्धनं[j] दद्यादन्यथा चोरदण्डभाक् ॥ १४

[1] या. अप., p. 777; स्मृ. कल्प., [a] हीन, स्मृ. च., III, p. 506; वि. र., p. 107; [a] हीन, परा. मा., p. 299; वि. चि., p. 43; [a] हीन; वी. मि., p. 381; [b] च; द. वि., p. 329; [c] विनिश्चयम्, वि. से., p. 136; [a] हीनः.

[2] व्य. म., p. 122; म. कु., p. 304; म. रा., p. 1003; स्मृ. कल्प., p. 72; या. अप., p. 777; [d] तच्च स्याद्व्यवहारतः; वि. र., p. 109; वि. चि., p. 43; या. वी., p. 647; द. वि., p. 329.

[3] या. अप., p. 775; म. कु., p. 304; म. रा., p. 1003; स्मृ. कल्प., p. 72; वि. र., p. 109; व्य. नि., p. 202; [e] ततया क्रीतं; [f] तद; वि. चि., p. 43; या. वी., p. 647; द. वि., p. 329; व्य. म., p. 122; व्य. मा., p. 156; [g] प्रगृह्णीयात्; [g] प्रगृह्णीयात्, स्मृ. कल्प., p. 72.

[4] या. अप., p. 775; म. कु., p. 304; [h] अपहृतं, म. रा., p. 1003; वि, र., p. 109; वि. चि., pp. 43 and 44; [h] अपहृतं, व्य. म., p. 122; द. वि., p. 329; [h] अपहृतं.

[5] स्मृ. कल्प., p. 72.

[6] व्य. नि., p. 203; व्य. मा., p. 157; [i] विक्रयेऽपि तु यः क्रेतुः भुक्तियोग्यं न साधयेत्; [j] तत्समम्.

एतद्वयं[1] समाख्यातं द्रव्यहानिकरं बुधैः ।
अविज्ञातविशेषत्वाद्यत्र[a] मूल्यं न लभ्यते ॥ १५
हानिस्तत्र[2] समा कल्प्या क्रेतृनास्तिकयोर्द्वयोः । १६

[1] या. अप., p. 778; स्मृ. कल्प., p. 72; [a] निवेशत्वात्; उत्तरार्धं परम्.

[2] या. अप., p. 778.

१२

## ॥ सम्भूयसमुत्थानम् ॥

### सम्भूयकरणे अधिकारिणः

**कुलीनदक्षानलसैः[1] प्राज्ञैर्नाणकवेदिभिः[a] ।**
**आयव्ययज्ञैः शुचिभिः शूरैः [b]कुर्यात्सह [c]क्रियाः ॥ १**

**समोऽतिरिक्तो[2] हीनो वा यत्रांशो यस्य यादृशः ।**
**क्षयव्ययौ तथा वृद्धिस्तस्य तत्र तथाविधा ॥ २**

### अनधिकारिणः

**अशक्तालसरोगार्तमन्दभाग्यनिराश्रयैः[3 d, e] ।**
**वणिज्याद्याः[f] सहैतैस्तु न कर्तव्या बुधैः [g]क्रियाः ॥ ३**

### द्रव्यानुगुण्येन लाभः

**प्रयोगं[4] कुर्वते ये तु हेमधान्यरसादिना ।**
**समन्यूनाधिकैरंशैर्लाभस्तेषां [h]तथाविधः ॥ ४**

[1] या. अप., p. 832; स्मृ. कल्प., p. 72; [a] नानृतवादिभिः; स्मृ. च., III, p. 429; वि. र., p. 111; परा. मा., p. 302; व्य. नि., p. 205; [a] कण्टक; [b] कार्या सह क्रिया; व्य. सा., p. 146; [c] क्रियाम्; वी. मि., p. 383; [c] क्रियाम्, व्य. मा., p. 158; [c] क्रियाम्; वि. से., p. 140; [a] लाभादि; [b] कार्या सह क्रिया.

[2] वि. से., p. 140.

[3] या. अप., p. 831; स्मृ. कल्प., p. 72; वि. र., p. 111; परा. मा., p. 303; [d] असक्त; [f] वाणि; व्य. नि., p. 205; [f] वाणिज्या च; वी. मि., p. 384; [d] असक्त; [e] ग्या निराश्रयाः; [f] वाणि; [g] क्रिया; व्य. मा., p. 158; [e] निराश्रयाः.

[4] परा. मा., p. 303; स्मृ. कल्प., p. 74; स्मृ. च., III, p. 430; वि. र., p. 123; वी. मि., p. 384; [h] यथाविधः; वि. से., p. 144.

समो[1] न्यूनोऽधिको वांशो येन क्षिप्तस्तथैव [a]सः ।
व्ययं दद्यात्कर्म कुर्याल्लाभं गृह्णीत चैव हि ॥ ५

तेषु वादे निर्णयः

परीक्षकाः[2] साक्षिणश्च त एवोक्ताः परस्परम् ।
सन्दिग्धेऽर्थेऽवञ्चनायां*[b] न चेद्विद्वेषसंयुताः ॥ ६

यः[3] कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः [c]स विशोध्यः [d]स्यात्सर्ववादे त्वयं विधिः ॥ ७

द्रव्यहानौ निर्णयः

क्षयहानिर्यदा[4][e] तत्र *[f]दैवराजकृताद्भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया तथांशतः ॥ ८

[1] परा. मा., p. 303; स्मृ. कल्प., p. 72; [a] च, स्मृ. च., III, p. 430; वि. र., p. 112; वी. मि., p. 384.

[2] या. अप:., p. 832; स्मृ. कल्प., p. 72; स्मृ. च., III, p. 432; वि. र., p. 113; [b] वञ्चनायां; परा. मा., p. 305; व्य. नि., p. 206; [b] वञ्चनायां न च विद्वेषः; व्य. सा., p. 148; * सन्दिग्धार्थे वञ्चनायां वी. मि., p. 385; [b] वञ्चनाया; या अप. alone reads वञ्चनीया in the place of वञ्चनायां.

[3] या. अप., p. 832; स्मृ. कल्प., p. 72; स्मृ. च., III, p. 432; [d] अप्ययं, वि. र., p. 113; वि. च., p. 37; परा. मा., p. 305; व्य. नि., p. 206; वि. चि., p. 46; व्य. सा., p. 148; स. वि., p. 318; वी. मि., p. 385; [c] सोऽपि; व्य. मा., p. 159; वि. से., p. 141.

[4] परा. मा., p. 305; स्मृ. कल्प., p. 72; [e] क्षयो हानिः; स्मृ. च., III, p. 432; (वि. र., p. 113; वि. चि., p. 45; स्मृ. कल्पवत्पाठः) व्य. नि., p. 206; [e] क्रय; [f] कृता भवेत्, व्य. सा., p. 148; * देव; वी. मि., p. 385; [e] द्रव्य; वि. से., p. 141; स्मृ. कल्पवत्पाठः .

अनिर्दिष्टो[1] वार्यमाणः *प्रमादाद्यस्तु नाशयेत् ।
तेनैव[a] तद्भवेद्देयं सर्वेषां समवायिनाम् ॥ ९

राज्ञे[2] दत्वा तु षड्भागं लभेरंस्ते यथांशतः । १०

रक्षितुः दशमांशम्

दैवराजभयाद्यस्तु[3b] स्वशक्त्या परिपालयेत् ।
तस्यांशं दशमं दत्वा [c*]गृह्णीयुस्तेऽंशतोऽपरम् ॥ ११

शुल्कम्

शुल्कस्थानं[4] वणिक् प्राप्तः शुल्कं दद्याद्यथोचितम् ।
न तद्व्यभिचरेद्राज्ञां बलिरेष प्रकीर्तितः ॥ १२

नैवं[5] तस्करराजाग्निव्यसने समुपस्थिते ।
यस्तु स्वशक्त्या रक्षेत्तु तस्यांशो दशमः स्मृतः ॥ १३

सम्भूयकर्मकुर्वतां एकस्य हानौ निर्णयः

यदा[6] तत्र वणिक्कश्चित्प्रमीयेत प्रमादतः ।
तस्य भाण्डं दर्शनीयं नियुक्तैराजपूरुषैः ॥ १४

[1] या. अप., p. 833; स्मृ. कल्प., p. 72; स्मृ. च., III, p. 432; वि. र., p. 113; वि. च., p. 37; परा. मा., p. 305; व्य. नि., p. 206; [a] तस्यांशं दशमं दत्वा गृह्णीयुस्तेऽंशतोऽपरे; वि. चि., p. 45; व्य. सा., p. 148; * यदि; वी. मि., p. 385; वि. से., p. 141.

[2] वि. च., p. 39.

[3] या. अप., p. 833; स्मृ. कल्प., p. 72; [b] राजदैव; [c] स्वांशतोऽपरे; स्मृ. च., III, p. 433; [b] देव; [c] तेऽन्ततः परे; वि. र., p. 114; [b] राजदैव; वि. च., p. 37; [b] राजदैव; [c] तु; परा. मा., p. 306; वि. चि., p. 45; व्य. सा., p. 148; * परस्परम्; वी. मि., p. 386; वि. से., p. 141.

[4] या. अप., p. 834.

[5] स्मृ. कल्प., p. 72.

[6] वि. चि., p. 47; स्मृ. कल्प., p. 72; वि. र., p. 116; वि. से., p. 142.

यदा[1] कश्चित्समागच्छेत्तदा[a] रिक्थहरो नरः ।
स्वाम्यं[2] विभावयेदन्यैः स तदा लब्धुमर्हति ॥ १५

राजाऽऽददीत[3*] षड्भागं नवमं [b]दशमं तथा ।
शूद्रविट्क्षत्रजातीनां[†] विप्राद्गृह्णीत विंशकम् ॥ १६

त्र्यब्दादूर्ध्वं[4 c] तु नागच्छेद्यत्र[d] स्वामी कथञ्चन ।
तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणान् श्रयेत् ॥ १७

एवं[5 e] क्रियाप्रवृत्तानां[f] यदा[g] कश्चिद्विपद्यते ।
तद्बन्धुना [h]क्रिया कार्या [i]सर्वेषां सहकारिभिः ॥ १८

## ऋत्विजः

रथं[6] हरेद्यथाऽध्वर्युर्ब्रह्माऽऽधाने च वाजिनम् ।
होता [j]निविद्वरं चाश्वमुद्गाता चाप्यनः क्रये ॥ १९

[1] वि. चि., p. 47; स्मृ. कल्प., p. 72; [a] तत्र; वि. र., p. 116; वि. से., p. 143.

[2] वि. चि., p. 47; स्मृ. कल्प., p. 72; वि. र., p. 116; वि. से., p. 143.

[3] वि. चि., p. 47; स्मृ. कल्प., p. 73; (वि. र., p. 116; व्य. नि., p. 206; मि. बा., p. 827; व्य. मा., p. 161; * राजाददेत; [b] द्वादशं; † क्षत्रविट्च्छूद्रजातानाम्। वि. से., p. 143; [b] द्वादशं इति सर्वत्र ).

[4] वि. र., p. 116; स्मृ. कल्प., p. 73; [c] अब्दात्; व्य. नि., p. 207; [c] अब्दात्, षा. मि. बा., p. 827; [d] तत्र, वि. से., p. 143.

[5] वि. चि., p. 48; स्मृ. कल्प., p. 73; [f] प्रपन्नानां; [h] क्रियाः कार्याः सर्वैर्वा सेवकादिभिः; या. अप., p. 836; [e] एक; [i] सर्वैर्वा; वि. र., p. 117; [i] सर्वैर्वा शु. त., p. 329; [g] यदि; [i] सर्वैर्वा; स. वि., p. 275; शु. तवत्पाठः; वी. मि., p. 389; [i] सर्वैर्वा; वि. से., p. 144; शु. त. वत्पाठः.

[6] वी. मि., p. 387; स्मृ. कल्प., p. 73; [j] चापि हरेदश्वं. This is attributed to both Manu and Bṛhaspati by वी. मि.

सर्वेषामर्धिनो[1] मुख्यास्तदर्धेनार्धिनोऽपरे[a] ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च[2] पादिनः ॥ २०

आगन्तुकाः[3] क्रमायातास्तथा चैव स्वयंकृताः ।
त्रिविधास्ते समाख्याता वर्तितव्यं तथैव तैः ॥ २१

## सम्भूयकर्मप्रकारः

बहूनां[4] सम्मतो यस्तु दद्यादेको[b] धनं नरः ।
करणं कारयेद्वापि [c]सर्वैरेव कृतं भवेत् ॥ २२

ज्ञातिसम्वन्धिसुहृदामृणं[5] देयं सबन्धकम् ।
अन्येषां लग्नकोपेतं लेख्यसाक्षियुतं तथा ॥ २३

स्वेच्छादेयं[6] हिरण्यं[d] तु रसधान्यं तु सावधि ।
देशस्थित्या प्रदातव्यं गृहीतव्यं तथैव [e]तत् ॥ २४

समवेतैस्तु[7] यद्दत्तं प्रार्थनीयं तथैव तत् ।

[1] वी. मि., p. 387; स्मृ. कल्प., p. 73; [a] अर्धिनः.

[2] वी. मि., p. 387; स्मृ. कल्प., p. 73.

[3] वि. र., p. 120; स्मृ. कल्प., p. 73.

[4] परा. मा. p. 306; स्मृ. कल्प., p. 74; स्मृ. च; III, p. 431; वि. र., p. 123; प्रा. त., p. 533; [b] एकं; वी. मि., p. 385; [c] सर्वेणैव; व्य. म., p. 123; वि. से., p. 144.

[5] वि. र., p. 123; स्मृ. कल्प., p. 74; वि. से., pp. 16 and 144.

[6] वि. र., p. 123; स्मृ. कल्प., p. 74; वि. चि., p. 52; [e] च. पूर्वार्धे नास्ति वि. से., pp. 16 and 144; [d] हिरण्याद्यमिति 16 तमपुटे; [d] हिरण्यर्णमिति 144 तमपुटे.

[7] परा. मा., p. 306; स्मृ. कल्प., p. 74; स्मृ. च., III, p. 433; वि. र., p. 123; वि. चि., p. 52; स. वि., p. 273; वी. मि., p. 386; या. वी., p. 718; वि. से., pp. 16 and 144.

न[1] याचते [a]च यः कश्चिल्लाभात्स परिहीयते ॥ २५

प्रयोगः[2] सर्वमाख्यातः[b] समासेनोदितोऽधुना ।

सम्भूय कृषिकर्म

श्रूयतां कर्षकादीनां [c]विधानमिदमुच्यते ॥ २६

वाह्यवाहकबीजाद्यैः[3d] क्षेत्रोपकरणेन[e] च ।
ये [f]समाः स्युस्तु तैः सार्धं कृषिः कार्या विजानता ॥ २७

बाह्यबीजात्ययाद्यत्र[4g, h, i] क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्वेषां [j]कृषिजीविनाम् ॥ २८

पर्वते[5k] नगराभ्यासे तथा राजपथस्य च ।
उषरं[l] मूषिकव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥ २९

[1] परा. मा., p. 306; स्मृ. कल्प., p. 74; स्मृ. च., III, p. 433; वि. र., p. 123; वि. चि., p. 52; स. वि., p. 273; वी. मि., p. 386; या. वी., p. 718; [a] अत्र.

[2] या. अप., p. 838; स्मृ. कल्प., p. 74; [b] पूर्वं, वि. र., p. 123; वि. चि., p. 52; वि. से., p. 144; स्मृ. कल्पवत्पाठः; [c] विवादपदमुच्यते इति. वि. चि; पाठः.

[3] परा. मा., p. 309; स्मृ. कल्प., p. 74; [d] बाह्य; [f] समानास्तु या. अप., p. 838; [d] बाह्य; [e] क्षेत्राप; [f] समानास्तु, स्मृ. च., III, p. 434; या. अप वत्पाठः, वि. र., p. 123; स्मृ. कल्पवत्पाठः; वि. चि., p. 52; [f] समानास्तु; व्य. सा., p. 151; वी. मि., p. 389; स्मृ. कल्पवत्पाठः, वि. से., p. 144; [d] बाह्यैः; [f] समानास्तु.

[4] या. अप., p. 838; स्मृ. कल्प., p. 74; [g] बाह्य; [i] स्तु; स्मृ. च., III, p. 435; वि. र., p. 124; परा. मा., p. 310; वि. चि., p. 52; [i] यस्य, वी. मि., p. 390; या. वी., p. 718; [h] जातपराद्यस्य; [j] क्षेत्रकारिणाम्, वि. से., pp. 17 and 145; [i] यस्य; [j] कृषिजीविना.

[5] परा. मा., p. 309; स्मृ. कल्प., p. 74; [k] विजने; [l] ऊषरं, स्मृ. च., III, p. 434; वि. र., p. 123; [k] विवीते; [l] ऊषरं; व्य. सा., p. 151; [l] ऊषरं; वी. मि., p. 389.

गर्तानूपं[1] सुसेकं च [a]समन्तात्क्षेत्रसंयुतम् ।
प्रकृष्टं[2] च कृतं काले वापयन् फलमश्नुते ॥ ३०

कृशातिवृद्धं[3] क्षुद्रं च रोगिणं प्रपलायिनम् ।
काणं खञ्जं [b]विनाऽऽदद्यात् वाह्यं प्राज्ञः कृषीवलः ॥ ३१

एष[4] धर्मः समाख्यातः कीनाशानां पुरातनः । ३२

## शिल्पिनः

हिरण्यकुप्यसूत्राणां[5 c] काष्ठपाषाणचर्मणाम् ।
संस्कर्ता [d]तु कलाभिज्ञः शिल्पी [e]प्रोक्तो मनीषिभिः ॥ ३३

हेमकारादयो[6] यत्र शिल्पं सम्भूय कुर्वते ।
कर्मानुरूपं[f] निर्वेशं [g, h]लभेरंस्ते यथांशतः ॥ ३४

शिक्षकाभिज्ञकुशला[7] आचार्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् लभेयुस्ते यथोत्तरम् ॥ ३५

[1] वि. र., p. 124; स्मृ. कल्प; p. 74; [a] कर्म.

[2] वि. र., p. 124; स्मृ. कल्प., p. 74.

[3] परा. मा., p. 310; स्मृ. कल्प., p. 74; [b] च नादद्यात्; स्मृ. च., III, p. 434; वि. र., p. 124; वी. मि., p. 390; स्मृ. कल्पवत्पाठः.

[4] या. अप., p. 838; स्मृ. कल्प., p. 74; वि. र., p. 124; वि. से., p. 145.

[5] परा. मा., p. 311; स्मृ. कल्प., p. 74; [c] रूप्य, स्मृ. च., III, p. 435; (या. अप., p. 838; वि. र., p. 124; [e] चोक्तः); वि. चि., p. 53; [e] चोक्तः; व्य. सा., p. 149; वी. मि., p. 390; [d] तत्; वि. से., p. 145; [e] चोक्तः.

[6] या. अप., p. 838; स्मृ. कल्प., p. 74; [h] तु; स्मृ. च., III, p. 435; [f] रूपनि; वि. र., p. 124; परा. मा., p. 310; [f] रूपनि; वि. चि., p. 53; व्य. सा., p. 149; [g] लभेयुः स्वेच्छया च ते; स. वि., p. 273; [f] रूपनि; [h] तु; वी. मि., p. 390; या. वी., p. 718; [g] लभेयुः, वि. से., p. 145.

[7] व्य. सा., p. 149.

हर्म्यं[1a] देवगृहं [b]वाऽपि [c]धार्मिकोपस्कराणि च ।
सम्भूय कुर्वतां [d]चैषां [e]प्रमुखो द्व्यंशमर्हति ॥ ३६

नर्तकानामेष[2] एव [f] धर्मः सद्भिरुदाहृतः ।
तालज्ञो[g] लभतेऽध्यर्धं [h]गायनास्तु समांशिनः ॥ ३७

चोराणां लाभविभागः

स्वाम्याज्ञया[3] तु [i]यश्चौरैः परदेशात्समाहृतम् ।
राज्ञे दत्वा तु षड्भागं [j]भजेयुस्ते यथांशतः ॥ ३८

चतुरोऽंशांस्ततो[4k] मुख्यः शूरस्त्र्यंशं [l]समाप्नुयात् ।
समर्थस्तु हरेद् द्व्यंशं [m]शेषाः *सर्वे समांशिनः ॥ ३९

[1] या. अप., p. 838; स्मृ. कल्प., p. 74; [b] वापी चार्मिको; स्मृ. च., III, p. 436; वि. र., p. 125; स्मृ. कल्पवत्पाठः; परा. मा., p. 310; व्य. नि., p. 209; [b] वापी चार्मिको; [e] ख्योर्धांशं; वि. चि., p. 53; व्य. नि. वत्पाठः; व्य. सा., p. 149; [d] चैषां स. वि., p. 273; [b] वापीं चार्मिकोपस्करादि च; [e] खो हि; वी. मि., p. 390; [c] वाचिको; [d] तेषां; व्य. म., p. 124; व्य. मा., p. 163; [c] चार्मिको; [d] तेषां मुख्योऽध्यर्धांशं, वि. से., p. 145; [b] वापी चार्मिकोपस्कराणि च; [e] ख्यो; [a] धर्म्यं.

[2] या. अप., p. 839; स्मृ. कल्प., p. 74; स्मृ. च., III, p. 440; वि. र., p. 125; व्य. नि., p. 209; [h] गायकास्तु; वि. चि., p. 53; [f] धर्मो धर्मविद्भिः; स. वि., p. 276; [h] गायकानां समांशिनाम्; वी. मि., p. 391; [g] कालज्ञो; या. वी., p. 719; व्य. मा., p. 164; [h] गायकास्तु; वि. से., p. 145; वि. चिवत्पाठः.

[3] या. अप., p. 839; स्मृ. कल्प., p. 74; [i] यत्; स्मृ. च., III, p. 440; वि. र., p. 125; [i] यत्; [j] हरेयुः; परा. मा., p. 311; वि. चि., p. 53; [i] यत्; [j] लभन्ते व्य. सा., p. 149; [i] यत्; स. वि., p. 276; वी. मि., p. 391; [i] यत्; वि. से., p. 145; वि. चिवत्पाठः.

[4] या. अप., p. 839; स्मृ. कल्प., p. 74; [l] अवा; [m] शेषास्त्वन्ये; स्मृ. च., III, p. 440; [k] अंशान् भजेत्; [m] शेषास्त्वन्ये; वि. र., p. 125; [k] तथा; [l] अवा; परा. मा., p. 311; वि. चि., p. 54; स्मृ. कल्पवत्पाठः व्य. सा., p. 149; [k] भजेत्; [l] अवा; * साम्यं समाश्रिताः, स. वि., p. 276; [k] अंशान् भजेत्; [l] अवा; [m] शेषास्त्वन्ये, वी. मि., p. 391; स. वि. वत्पाठः.

१४

## ॥ अदेयदेयदत्तानि ॥

एषाऽखिलेनाभिहिता[1] सम्भूयोत्थाननिष्कृतिः ।
अदेयदेयदत्तानामदत्तस्य[a] च कथ्यते ॥ १

सामान्यं[2b] पुत्रदारादि[c] सर्वस्वं न्यासयाचितम् ।
प्रतिश्रुतं[d, e]तथाऽन्यस्य न देयं [f]त्वष्टधा स्मृतम् ॥ २

कुटुम्बभक्तवसनाद्देयं[3] यदतिरिच्यते ।
मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत् ॥ ३

सप्तारामाद्गृहक्षेत्राद्यद्यत्क्षेत्रं[4 g, h, i] प्रचीयते[j] ।
पित्रा[k] वाऽथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम् ॥ ४

[1] या. अप., p. 779; स्मृ. च., III, p. 441; वि. र., p. 127; परा. मा., p. 312; [a] अदत्तानां, वी. मि., p. 392; वि. से., p. 147.

[2] या. अप., p. 779; स्मृ. कल्प., p. 74; [b] न्यपुत्रदाराधिसर्वस्वन्या; [e] यस्य; [f] इति सम्मतम्, स्मृ. च., III, p. 442; [c] धिसर्वस्वन्या. वि. र., p. 127; स्मृ. चवत्पाठः, वि. च., p. 40; [b] न्यपुत्रदाराधिसर्वस्वन्या; [e] अन्यस्मिन्, परा. मा., p. 313; वि. चि., p. 55; स्मृ. च वत्पाठः व्य. सा., p. 162:

सामान्यः पुत्रदाराधि सर्वस्वन्यासयाचितम् ।
प्रतिश्रुतमथान्यस्यादेयमष्टविधा मतम् ॥

स. वि., p. 277; वी. मि., p. 392; [c] धिसर्वस्वन्या; [d] अथ, या. वी., p. 652; [b] न्यपुत्रदाराधिसर्वस्वन्याः, वि. से., p. 147; या. वी. वत्पाठः.

[3] या, अप., p. 780; स्मृ. च., III, p. 444; पूर्वार्धं परम्, वि. र., p. 129; वि. चि., p. 57; (वी. मि., p. 394; व्य. म., p. 125; पूर्वार्धं परम्) वि. से., p. 149.

[4] या. अप., p. 780; स्मृ. कल्प., p. 75; [g] गमात्; [j] प्रदीयते; [k] पित्र्यं वि. र., p. 130; स्मृ. कल्पवत्पाठः, वि. च., p. 43; [g] गमात्; [i] यस्य क्षेत्रं वि. चि., p. 58; [h] बृहत्; [i] स्वं स्वं; [k] पित्र्यं च, वी. मि., p. 394; वि. से., p. 150; स्मृ. कल्पवत्पाठः.

स्वेच्छादेयं[1] स्वयं प्राप्तं [a]बन्धाचारेण बन्धकम् ।
वैवाहिके[b] क्रमायाते [c]सर्वदानं न विद्यते ॥ ५

सौदायिकक्रमायातं[2d] शौर्यप्राप्तं च [e]यद्भवेत् ।
स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात् ॥ ६

सर्वस्वगृहवर्जं[3] तु कुटुम्बभरणादिकम् ।
यद् द्रव्यं तत्स्वकं देयमदेयं स्यादतोऽन्यथा ॥ ७

विभक्ता[4f] वाऽविभक्ता[g] वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र [h]दानादापनविक्रये ॥ ८

भृतिस्तुष्ट्या[5i] पण्यमूलं[j] स्त्रीशुल्कमुपकारिणे ।
श्रद्धानुग्रहसम्प्रीत्या[k] दत्तमष्टविधं[l] स्मृतम्[m] ॥ ९

[1] या. अप., p. 780; स्मृ. कल्प., p. 75; स्मृ. च., III, p. 447; [c] सर्वं, उत्तरार्धं परम्; वि. र., p. 130; वि. च., p. 42; उत्तरार्धं परम्; [b] कं क्रमायातं, परा. मा., pp. 316 and 317; सर्वं इति 317 तमपुटे, व्य. नि., p. 211; [c] सर्वं, उत्तरार्धं परम्; वि. चि., p. 58; [a] वारेण. वि. से., p. 150; [a] बद्धाचारेण.

[2] या. अप., p. 780; स्मृ. कल्प., p. 75; [d] कं क्रमायातं, स्मृ. च., III, p. 446; वि. र., p. 130; [d] कं क्रमायातं; [e] धनं, वि. च., p. 42; धनं पूर्वार्धं परं परा. मा., p. 317; वी. मि., p. 396; [d] कं क्रमायातं वि से., p. 150; वी. मि. वत्पाठः.

[3] वि. च., p. 41.

[4] या. अप., p. 780; स्मृ कल्प., p. 75; [h] धमन, स्मृ. च., III, p. 716; [h] धमन वि. र., p. 130; [f] अविभक्ता विभक्ता; [h] धमन, म. पा., p. 690; [g] अविभक्ता; [h] धमन, वि. च., p. 42; म. पा वत्पाठः, परा. मा., pp. 316 and 568; स्मृ. कल्पवत्पाठः, वि. चि., p. 59; म. पा. वत्पाठः, वी. मि., p. 714; स्मृ. कल्पवत्पाठः व्य. म., p. 85; [f] अविभक्ता विभक्ता, वि. से., p. 151; म. पा वत्पाठः.

[5] वि. चि., p. 60; स्मृ. च., III, p. 450; [i] भृत्या; [j] मूल्यं; [k] ग्राह, वि. र., p. 133; [j] मूल्यं व्य. नि., p. 213; [j] मूल्यं, स. वि., p. 285; [j] मूल्यं, वी. मि., p. 398; [j] मूल्यं; [l] सप्तविधं विदुः, या. वी., p. 652; वि. से., p. 152; वि. र वत्पाठः; स्मृ. कल्प; [m] विदुः.

शूद्रे[1] समगुणं[a] दानं वैश्ये [b]तद्द्विगुणं स्मृतम् ।
क्षत्रिये त्रिगुणं [c]दानं ब्राह्मणे षड्गुणं स्मृतम् ॥ १०

श्रोत्रिये[2] चैव साहस्रमुपाध्याये तु तद्द्वयम् ।
आचार्ये[d] त्रिगुणं ज्ञेयमाहिताग्निषु तद्द्वयम् ॥ ११

आत्मिके[3 e] शतसाहस्रमनन्तं त्वग्निहोत्रिणि ।
सोमपे शतसाहस्रमनन्तं [f]ब्रह्मवादिनि ॥ १२

स्त्रीधनं[4] स्त्री स्वकुल्येभ्यः [g]प्रयच्छेत्तं तु वर्जयेत् ।
कुल्याभावे तु बन्धुभ्यः तदभावे द्विजातिषु ॥ १३

मदूर्ध्वमिति[5] यद्दत्तं न तत्सत्वावहं भवेत् ।
तेनेदानीमदत्तत्वान्मृते रिक्थिनमापतेत् ॥ १४

क्रुद्धहृष्टप्रमत्तार्तबालोन्मत्तभयातुरैः[6 h] ।
मत्तातिवृद्धनिर्धूतैः [i]संमूढैः [j, k]शोकवेगिभिः ॥ १५

नन्ददत्तं[7 l] तथैतैर्यत्तददत्तं[m] प्रकीर्तितम् । १६

[1] या. अप., p. 287; हे. दा., III, p. 29; व्य. नि., p. 212; [b] द्विगुणमेव च; [c] प्राहुः, स. वि., p. 284; [a] लेक; [b] द्विगुणमेव च; [c] प्राहुः, दा. म., p. 4.

[2] स. वि., p. 284; हे. दा., III, p. 29; वै. दी. वत्पाठः, व्य. नि., p. 212; वै. दी. ब., p. 86; [d] आचार्ये द्विगुणं ततः । आत्मज्ञे शतसाहस्रमनन्तं त्वग्निहोत्रिणि ॥

[3] स. वि., p. 284; व्य. नि., p. 212; [e] आत्मज्ञे; [f] वादिने.

[4] स. वि., p. 284; व्य. नि., p. 213; [g] तन्तु वर्जिता.

[5] व्य. नि., p. 218.

[6] या. अप., p. 782; स्मृ. च., III, p. 453; [h] भ्रष्ट, वि. र., p. 136; [h] क्रुष्ट; [k] रोगिभिः, वि. च., p. 46; [i] प्रमूढैः; [k] रागिभिः उत्तरार्धं परं, वि. चि., p. 62; [j] शोकिरोगिभिः, वि. से., p. 154; [h] क्रुष्ट; [i] प्रमूढैः शौकिरोगिभिः; स्मृ. कल्प., p. 75.

[7] या. अप., p. 782; स्मृ. च., III, p. 453; [l] नर्म, वि. च., p. 46; [l] नर्म, वि. चि., p. 62; [l] नर्म, वि. से., p. 154; [m] अदत्तं तत्; स्मृ. कल्प; [l] नर्म.

प्रतिलाभेच्छया[1] दत्तमपात्रे पात्रशङ्कया ॥
कार्ये वाऽधर्मसंयुक्ते[a] स्वामी तत्पुनराप्नुयात् । १७
अदत्तभोक्ता[2] दण्ड्यः स्यात्तथाऽदेयप्रदायकः । १८

[1] स्मृ. च., III, p. 453; या. अप., p. 782; [a] धर्म, वि. र., p. 136; [a] चाधर्म, वि. चि., p. 63; वि. र. वत्पाठः, या. वी., p. 652; वि. से., p. 155; वि. रवत्पाठः, स्मृ. कल्प.

[2] स. वि., p. 288; व्य. नि., p. 219.

## १५

# ॥ अभ्युपेत्याशुश्रूषा ॥

अदेयादिकमाख्यातं[1] भृतानामुच्यते विधिः ।
शुश्रूषामभ्युपेत्यैतत्पदमादौ[a] निगद्यते ॥ १

अभ्युपेत्य[2] तु शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते ॥ २

वेतनस्यानपाकर्म[3] तदर्थं[b] स्वामिपालयोः ।
क्रमशः [c]कल्प्यते वादो भृतभेदत्रयं त्विदम् ॥ ३

अनेकधा[4] त्वभिहिता[d] जातिकर्मानुरूपतः ।
विद्याविज्ञानकामार्थनिमित्तेन [e]चतुर्विधा ॥ ४

एकैकः[5] पुनरेतेषां [f]क्रियाभेदात्प्रभिद्यते । ५

विद्या[6] त्रयी समाख्याता ऋग्यजुस्सामलक्षणा ।
तदर्थं गुरुशुश्रूषां [g]प्रकुर्याच्च प्रचोदिताम् ॥ ६

[1] वि. चि., p. 63; स्मृ. कल्प., p. 75; [a] अशुश्रूषाभ्युपेत्यैतत्, वि. र., p. 139; स्मृ. कल्पवत्पाठः, वि. से., p. 155; पूर्वार्धं परम्.

[2] स. वि., p. 289; व्य. नि., p. 220.

[3] वि. चि., p. 63; स्मृ. कल्प., p. 75; [b] तदनु; [c] कथ्यते, वि. से., p. 156; [c] कल्प्यते वादो भृतं.

[4] स्मृ. च., III, p. 7; स्मृ. कल्प., p. 75; [d] ते; [e] धाः, वि. र., p. 140; स्मृ. कल्पवत्पाठः, व्य. नि., p. 220; उत्तरार्धं परं, वि. चि., p. 64; उत्तरार्धं परम्.

[5] स्मृ. च., III, p. 7; स्मृ. कल्प., p. 75; वि. र., p. 140; [f] प्रपद्यते.

[6] परा. मा., p. 338; स्मृ. कल्प., p. 75; [g] शास्त्रचोदिताम्, स्मृ. च., III, p. 455; वि. र., p. 140; [g] शास्त्रदेशितां, व्य. नि., p. 220; स्मृ. कल्पवत्पाठः, वि. चि., p. 64; वि. र. वत्पाठः, व्य. सा., p. 155; [g] शास्त्र, वी. मि., p. 402; स्मृ. कल्पवत्पाठः, व्य. मा., p. 175; वि. से., p. 156; वि. र. वत्पाठः.

विज्ञानमुच्यते[1] शिल्पं[a] हेमरूप्यादिसंस्कृतिः[b]* ।
नृत्यादिकं[c] च [d]तत्प्राप्तं कुर्यात्कर्म गुरोर्गृहे ॥ ७

यो[2] भुङ्क्ते परदासीं तु स ज्ञेयो [e]बडवाभृतः ।
कर्म तत्स्वामिनः [f]कुर्याद्यथाऽन्नेन भृतो नरः ॥ ८

बहुधाऽर्थभृतः[3] प्रोक्तस्तथा [g]भागभृतोऽपरः ।
हीनमध्योत्तमत्वं[h] च सर्वेषामेव चोदितम् ॥ ९

दिनमासार्धषण्मासत्रिमासाब्दभृतस्तथा[4] ।
कर्म[5] कुर्यात्प्रतिज्ञातं [i]लभते परिभाषितम् ॥ १०

भृतकस्त्रिविधो[6] ज्ञेय उत्तमो मध्यमोऽधमः ।
शक्तिभक्त्यनुरूपैः स्यादेषां कर्माश्रया भृतिः ॥ ११
उत्तमस्त्वायुधीयोऽत्र[7] मध्यमस्तु कृषीवलः ।
अधमो भारवाहः स्यादित्येष त्रिविधो भृतः ॥ १२

[1] परा. मा., p. 338; स्मृ. कल्प., p. 75; [b] कुप्यादि; [d] तच्छिक्षन्, स्मृ. च., III, p. 456; वि. र., p. 141; [b] कुप्यादिसंस्थितिः; [d] तच्छिक्षन्, व्य. नि., p. 220; [c] नृत्तादिकं च तच्छिक्षन्, वि. चि., p. 64; [b] कुप्यादि, व्य. सा., p. 155; वी. मि., p. 402; [a] शिल्पे; [b] कुप्यादि; [d] तत्प्राप्तुं, व्य. मा., p. 175; * संस्कृतेः. वि. से., p. 157; स्मृ. कल्पवत्पाठः.

[2] परा. मा., p. 339; स्मृ. कल्प., p. 76; [e] वनिता; [f] अन्योऽर्थ, स्मृ. च., III, p. 458; वि. च., p. 47; [e] वनिता; [f] अन्योऽर्थे, व्य. नि., p. 223; [f] अन्यस्तु, वि. चि., p. 65; [f] अन्योन्न, उ. त., p. 150; [e] बडवाकृतः, व्य. सा., p. 153; [f] अन्योऽर्थ, वि. से., p. 150; [f] अर्थे भृतको.

[3] परा. मा., p. 339; स्मृ. कल्प., p. 76; स्मृ. च., III, p. 458; वि. चि., p. 65; [g] भोग; [h] कर्म कुर्यात्प्रतिज्ञातं लभते परिभाषितम्। व्य. सा., p. 153; वि. से., p. 150; वि. चि. वत्पाठः.

[4] परा. मा., p. 340; स्मृ. कल्प., p. 76; स्मृ. च., III, p. 458; व्य. नि., p. 222; व्य. सा., p. 153.

[5] परा. मा., p. 340; स्मृ. कल्प., p. 76; [i] लभेत, स्मृ. च., III, p. 458; व्य. नि., p. 222; व्य. सा., p. 153.

[6] स्मृ. कल्प., p. 76.

[7] स्मृ. कल्प., p. 76.

आयुधी[1a] तूत्तमः[b] प्रोक्तो मध्यमस्तु कृषीवलः ।
भारवाहोऽधमः प्रोक्तस्तथा च गृहकर्मकृत् ॥ १३

द्विप्रकारो[2c] भोगभृतः[d] कृषिगोजीविनां[e] स्मृतः ।
जातसस्यात्तथा [f]क्षीरात्स लभेत न संशयः ॥ १४

शुभकर्मकरा[3] ह्येते चत्वारः समुदाहृताः ।
[चत्वारः[4] शिष्योऽन्तेवासी भृतकः कर्मकरश्च ॥]

जघन्यकर्मभाजस्तु[5] शेषा दासास्त्रिपञ्चकाः । १५

कर्मापि द्विविधं प्रोक्तमशुभं शुभमेव च ॥
अशुभं[6] दासकर्मोक्तं शुभं [g]कर्मकरे स्मृतम् । १६

गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ॥
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्[7] । १७

गच्छतः स्वामिनः स्वाङ्गैरुपस्थानमथान्ततः ॥
अशुभं[8] कर्म विज्ञेयं शुभमन्यदतः परम् । १८

[1] व्य. म., p. 127; स्मृ. कल्प., p. 76; [a] आयुधीयोत्तमस्तेषां मध्यमः सीरवाहकः । वि. र., p. 143; [b] चोत्तमस्तेषां मध्यमः सीरवाहकः, व्य. नि., p. 221; स्मृ. कल्पवत्पाठः, द. वि., p. 85; वि. रवत्पाठः.

[2] या. अप., p. 791; स्मृ. कल्प., p. 76; [d] भाग, वि. र., p. 143; [d] भाग, परा. मा., p. 340; व्य. नि., p. 222; [c] रा भाग; [e] नः; [f] लभते परिभाषितम्, वि. चि., p. 65; व्य. मा., p. 178; [d] भाग; [c] नात्; [f] लभते परिभाषितम्, वि. से., p. 150.

[3] वि. चि., p. 66; व्य. मा., p. 178; वि. से., p. 159.

[4] वि. चि., p. 66. Apparently only an explanation.

[5] वि. चि., p. 66; व्य. मा., p. 178.

[6] वि. चि., p. 66; वि. से., p. 159; [g] कृतः, व्य. मा., p. 179; पूर्वार्धं परम्.

[7] वि. चि., p. 66; वि. से., p. 159.

[8] वि. चि., p. 66.

ततः[1] प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नोऽथ प्रतिग्राह्यो भवत्यभिमतः सताम् ॥ १९

[आविद्याग्रहणाच्छिष्यः[2] शुश्रूषेत्प्रयतो गुरुम् ।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ॥ २०

समावृत्तश्च[3] गुरवे प्रदाय गुरुदक्षिणाम् ।
प्रतियाति गृहानेषा शिष्यवृत्तिरुदाहृतः ॥ २१]

अत्र[4] पुर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥ २२

विक्रीणीते[5] स्वतन्त्रो यः *समात्मानं नराधमः ।
स जघन्यतमस्त्वेषां सोऽपि दास्यान्न मुच्यते ॥ २३

[दासेनोढा[6] त्वदासी या सोऽपि दासीत्वमाप्नुयात् ।
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनप्रभुर्यतः ॥ २४]

दासीसुताश्च[7] ये[a] जाताः तस्याः पत्या परेण वा ।
उत्पादको यदि स्वामी न [b]दासीं कारयेत्प्रभुः ॥ २५

[1] स. वि., p. 295.

[2] व्य. नि., p. 220 ; व्य. मा., p. 175. In some manuscripts of व्य. नि. this verse is attributed to नारद.

[3] व्य. नि., p. 220. Attributed to नारद in some manuscripts.

[4] व्य. नि., p. 223.

[5] व्य. नि., p. 223 ; * स्वमात्मानं ?

[6] व्य. नि., p. 225 ; वि. से., p. 320. This verse is quoted from कात्यायन in some manuscripts of व्य. नि., as well as by स्मृ. च., III, 469, स. वि., p. 194, वि. चि., p. 46, व्य. म., p. 211, and वी. मि., p. 412.

[7] स. वि., p. 295 ; व्य. नि., p. 225 ; [a] दासाः स्युर्जाताः पत्याऽवरेण वा ; [b] दासास्तस्य सूनवः.

## १६

## ॥ वेतनस्यानपाकर्म ॥

त्रिभागं[1] पञ्चभागं वा [a]गृह्णीयात्सीरवाहकः ।
भक्ताच्छादभृतः[b, c] सीराद्भागं[d] गृह्णीत[e] पञ्चमम्[f] ॥ १
जातसस्यात्त्रिभागं[g] तु [h]प्रगृह्णीयादथा भृतः ॥ २

भृतकस्तु[2] न कुर्वीत [i]स्वामिनः शाठ्यमण्वपि ।
भृतिहानिमवाप्नोति ततो [j]वादः प्रवर्तते ॥ ३

### भृतस्य कर्माकरणनिर्णयः

भृतोऽनार्तो[3] न कुर्याद्यो दर्पात्कर्म यथेरितम् ।
स दण्ड्यः कृष्णलानष्टौ न देयं चास्य वेतनम् ॥ ४

[1] या. अप., p. 798; स्मृ. कल्प., p. 77; [h] तोपधा, वि. र., p. 157; [a] शीर; [d] शीरभागं; [g] शस्यात्; [h] तोपधा, परा. मा., p. 322; व्य. नि., p. 231; [c] दिभृतकः; [h] तोपधा, वि. चि., p. 74; [c] छादनभृत्सीरी; [g] शस्य; [h] तोपधा, स. वि., p. 298; [b] वस्त्रा; [h] यादथो, या. वी., p. 672; [e] भुञ्जीत जातेत्यर्धं न दृश्यते; व्य. मा., p. 188; [c] दिभृतकः; [f] पञ्चकं; [h] तापरो, वि. से., p. 168; [c] छादनभृत्सीरी; [f] पञ्चकं; [g] सस्यत्रिभागं. त्रिभागमित्यर्धं न दृश्यते.

[2] या. अप., p. 797; स्मृ. कल्प., p. 78; [i] स्वामिना सार्धं; स्मृ. च., III, p. 472; वि. र., p. 159; परा. मा., p. 324; व्य. नि., p. 231; स. वि., p. 299; [j] हानिः.

[3] स. वि., p. 299.

## . गृहीतवेतनस्य दण्डः

**गृहीतवेतनः[1] कर्म न करोति यदा भृतः ।**
**समर्थश्चेद्दमं[2] दाप्यो द्विगुणं तच्च वेतनम् ॥ ५**
**गृहीतवेतनः[3] कर्म त्यजन् द्विगुणमावहेत् ॥**

## अगृहीतवेतनस्य दण्डः

**अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः ॥ ६**

## प्रतिश्रुत्याकरणे दण्डः

**प्रतिश्रुत्य[4] न कुर्याद्यः स कार्यः स्याद्बलादपि ।**
**स चेन्न [a]कुर्यात्तत्कर्म [b]प्राप्नुयाद्विंशतिं दमम् ॥ ७**
**स[5] दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥ ८**

## भृत्यदोषाभावः

**प्रभुणा[6] विनियुक्तः सन् भृतको विदधाति [c]यत् ।**
**तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥ ९**

[1] या. अप., p. 797; स्मृ. कल्प., p. 78; स्मृ. च., III, p. 473; वि. र., p. 159; परा. मा., p. 324; वि. चि., p. 75; वी. मि., p. 416; व्य. मा., p. 189; वि. से., p. 169.

[2] या. अप., p. 797; स्मृ. कल्प., p. 78; स्मृ. च., III, p. 473; वि. र., p. 159; परा. मा., p. 324; वि. चि., p. 75; वी. मि., p. 416; वि. से., p. 169.

[3] वि. चि., p. 75.

[4] वी. मि., p. 416; स्मृ. कल्प., p. 78; [b] द्विशतं, वि. र., p. 160; [a] दर्पाच्च भृतः कर्म यथोदितम्; वि. से., p. 169.

[5] वि. र., p. 160.

[6] या. अप., p. 799; स्मृ. कल्प., p. 78; स्मृ. च., III, p. 476; वि. र., p. 162; वि. चि., p. 76; स. वि., p. 301; [c] यः, वी. मि., p. 421; द. वि., p. 85; स. वि वत्पाठः, वि. से., p. 170.

### पालस्य दोषाभावसमयाः

दैवराज्ञोस्तथा[1] न्याये तथा राष्ट्रस्य विभ्रमे ।
यत्प्रणष्टं भृतं वा स्यान्न पालस्तत्र किल्बिषी ॥ १०

### स्वामिनो दण्डसमयः

कृते[2] कर्मणि यः स्वामी न दद्याद्वेतनं [a]भृतेः ।
राज्ञा दापयितव्यः [b]स्याद्विनयं चानुरूपतः ॥ ११

### पालदोषदण्डः

पालदोषाद्विनाशे[3] तु पाले दण्डो विधीयते ।
अर्धत्रयोदशपणः[c] स्वामिने द्रव्यमेव च ॥ १२

व्याधिता[4] सश्रमा[d] व्यग्रा [e]राजकर्मपरायणा ।
आमन्त्रिता च नागच्छेदवाच्या बडबा स्मृता ॥ १३

### स्वामिपालधर्माः

तथा[5] [f] धेनुभृतः क्षीरं [g]लभेतास्याष्टमेऽखिलम् ।
सायं[6] समर्पयेत्सर्वं ... ... ... ॥ १४

[1] अख., p. 43.

[2] या. अप., p. 800; स्मृ. कल्प., p. 78; स्मृ. च., III, p. 477; वि. र., p. 165; परा. मा., p. 332; वि. चि., p. 77; वी. मि., p. 421; [a] भृते; [b] वेतनं वि. से., p. 320; अख., p. 42.

[3] व्य. मा., p. 197; व्य. नि., p. 237; अख., p. 43; [c] पर्णं स्वामिनः.

[4] व्य. मा., p. 192; व्य. नि., p. 233; स. वि., p. 300; [d] सम्भ्रमा; [e] धर्म, वी. मि., p. 422; [e] कार्य, अख., p. 48; [d] सत्रपा.

[5] स्मृ. च., III, p. 483; स्मृ. कल्प., p. 79; [g] ह्यष्टमे. वि. र., p. 170; [f] पर; [g] ह्यष्टमे, परा. मा., p. 373; [g] स्यष्टमे, वि. चि., p. 80; स. वि., p. 302; वी. मि., p. 443; [g] ह्यष्टमेऽहनि.

[6] स्मृ. च., III, p. 484; स. वि., p. 303.

अव्यायच्छन्नविक्रोशन्[1] स्वामिने [a]चानिवेदयन् ।
वोढुमर्हति [b]गोपस्तां विनयं चैव राजनि ॥ १५

कृमिचोरव्याघ्रभयाद्दरीश्वभ्राच्च[2] पालयेत् ।
आयच्छेच्छक्तितः[c] क्रोशेत्स्वामिने वा निवेदयेत् ॥ १६

सस्यान्निवारयेद्गास्तु[3] चीर्णे [d]दोषद्वयं भवेत् ।
स्वामी [e]शतदमं दाप्यः पालस्ताडनमर्हति ।
शदश्च[4] सदमं चीर्णे समूले कार्षभक्षिते ॥ १७

[1] वि. चि., p. 81; स्मृ. कल्प., p. 79; [a] वा, या. वी., p. 644; [b] दोषं तम्.

[2] वि. चि., p. 81; स्मृ. कल्प., p. 79; [c] व्यायच्छेत्, वि. र., p. 172; वि. से., p. 176; स्मृ. कल्पवत्पाठः.

[3] परा. मा., p. 384; स्मृ. च., III, p. 492; वी. मि., p. 450; [d] दोषो द्वयोः; [e] सद.

[4] परा. मा., p. 384.

## ॥ संविद्व्यतिक्रमः ॥

एषा[1] हि स्वामिभृत्यानां वै क्रिया परिकीर्तिता ।
संविद्विधानमधुना समासेन निबोधत ॥ १

सद्ब्राह्मणस्थापनं कृत्यं च

वेदविद्याविदो[2] विप्रान् श्रोत्रियानग्निहोत्रिणः ।
आहृत्य[a] स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥ २

अनाच्छेद्यकरास्तेषां[3b] प्रदद्याद्गृहभूमिकाः[c] ।
मुक्ता[d] भाव्याश्च नृपतिर्लेखयित्वा [e]स्वशासनैः ॥ ३

नित्यं[4] नैमित्तिकं *काम्यं शान्तिकं पौष्टिकं तथा ।
पौराणां कर्म कुर्युस्ते सन्दिग्धे [f]निर्णयं तथा ॥ ४

[1] वि. र., p. 177.

[2] या. अप., p. 792; स्मृ. कल्प., p. 80; स्मृ. च., III, p. 520; वि. र., p. 178; [a] सत्कृत्य, परा. मा., p. 348; व्य. सा., p. 186; [a] आवृत्य, वी. मि., p. 423; मि. बा., p. 858; [a] आहूय, अख., p. 45; [a] आपाल्य.

[3] या. अप., p. 792; स्मृ. कल्प., p. 80; [b] तेभ्यः; [c] भूमयः; [d] मुक्तभा; [e] शासने, वि. र., p. 178; [c] भूमयः; [d] मुक्तभा; [e] शासने, परा. मा., p. 349; व्य. सा., p. 187; [b] तेभ्यः; [c] भूमयः; [e] स्वशासनम्, वी. मि., p. 423; [b] तेभ्यः; [c] भूमयः; [d] युक्तभा, मि. बा., p. 858; [b] तेभ्य; [c] भूमयः पूर्वार्धं परम्.

[4] या. अप., p. 792; स्मृ. कल्प., p. 80; स्मृ. च., III, p. 521; वि. र., p. 178; [f] अर्थे च निर्णयम्, परा. मा., p. 349; व्य. सां., p. 187; * कार्यं, वी. मि., p. 424.

## सम्भूय धर्मकार्यकरणम्

**ग्रामश्रेणिगणार्थं[1 a,b] तु सङ्केतसमयक्रिया ।**
**बाधाकाले[c] तु सा कार्या [d]धर्मकार्ये तथैव च ॥ ५**

**चाटचोरभयं[2 e, f] बाधा [g]सर्वसाधारणा स्मृता ।**
**तत्रोपशमनं[h] कार्यं [i]सर्वैर्नैकेन केनचित् ॥ ६**

## विश्वासोत्पादनम्

**कोशेन[3 j] लेख्यक्रियया मध्यस्थैर्वा परस्परम् ।**
**विश्वासं [k]प्रथमं *कृत्वा कुर्युः कार्याण्यनन्तरम् ॥ ७**

**विद्वेषिणो[4] व्यसनिनः [l]शालीनालसभीरवः ।**

[1] या. अप., p. 792; स्मृ. कल्प., p. 80; [b] गणानां च संकेतः; [d] काले, स्मृ. च., III, p. 521; [b] गणानां च, वि. र., p. 178; [b] गणानां च सङ्केतः, परा. मा., p. 350; व्य. नि., pp. 175 and 242; [b] गणानां च सङ्केतः; [c] बाध. वि. चि., p. 82; [b] गणानां च, व्य. सा., p. 187; व्य. नि वत्पाठः, वी. मि., p. 424; वि. र वत्पाठः, या. वी., p. 667; [a] पूगश्रेणिगणानां च, व्य. मा., p. 202; [b] गणानां च सङ्केतः; [c] साधुकार्ये.

[2] या. अप., p. 792; स्मृ. कल्प., p. 80; [f] चौरभये हिंसाः सर्वसाधारणाः स्मृताः । स्मृ. च., III, p. 522; वि. र., p. 178; [i] सर्वे लोकेन, परा. मा., p. 350; [e] वाटचोरभये; [g] रणी; [i] सर्वैर्णैकेन, वि. चि., p. 83; [e] वाटचौरभये; [h] गमनं, व्य. सा., p. 187; परा. मावत्पाठः, [i] सर्वैर्नैकेन इति परं भेदः, वी. मि., p. 424; स्मृ. कल्पवत्पाठः.

[3] या. अप., p. 792; स्मृ. कल्प., p. 80; स्मृ. च., III, p. 524; वि. र., p. 178; [j] कोषेण, परा. मा., p. 353; वि. चि., p. 83; वि. र. वत्पाठः, वी. मि., p. 426; [k] कृत्वा यः कुर्युः कार्याणि समनन्तरं, व्य. मा., p. 203; * कुर्युः.

[4] या. अप., p. 792; स्मृ. कल्प., p. 80; [l] जनसन्त्रास, स्मृ. च., III, p. 526; वि. र., p. 179; परा. मा., p. 353; व्य. सा., p. 188; वी. मि., p. 427; व्य. मा., p. 203.

## नियोज्यानियोज्याः

लुब्धातिवृद्धबालाश्च न कार्याः कार्यचिन्तकाः ॥ ८

शुचयो[1*] वेदधर्मज्ञा [a]दक्षा [b]दान्ताः कुलोद्भवाः ।
सर्वकार्यप्रवीणाश्च[c,d] कर्तव्यास्तु[†] महत्तमाः[e] ॥ ९

द्वौ[2 f] त्रयः पञ्च वा कार्याः समूहहितवादिनः ।
कर्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः ॥ १०

## समयक्रिया

सभाप्रपादेवगृहतडाकारामसंस्कृतिः[3] ।
तथाऽनाथदरिद्राणां संस्कारो [g]योजनक्रिया ॥ ११

कुलायनं[4 h] निरोधश्च कार्यमस्माभिरंशतः ।
यत्त्वेवं[i] लिखितं [j]पत्रं धर्म्या सा समयक्रिया ॥ १२

[1] या. अप., p. 792; स्मृ. कल्प., p. 80; [e] तु महत्तराः, स्मृ. च., III, p. 526; वि. र., p. 179; [b] क्षान्ताः; [d] च, परा. मा., p. 353; वि. चि., p. 83; [a] दान्ता दक्षाः, व्य. सा., p. 189; वी. मि., p. 427; [d] च. द. वि., p. 267; [c] कार्ये, व्य. मा., p. 204; * ऋजवः; † कार्यचिन्तकाः.

[2] या. अप., p. 796; स्मृ. कल्प., p. 80; [f] सप्त वा, स्मृ. च., III, p. 526; वि. र., p. 179; परा. मा., p. 354; व्य. नि., pp. 175 and 242; वि. चि., p. 83; व्य. सा., p. 189; वी. मि., p. 427; द. वि., p. 267; व्य. मा., p. 203; [f] द्वे.

[3] या. अप., p. 793; स्मृ. कल्प., p. 80; [g] यजन, स्मृ. च., III, p. 522; वि. र., p. 181; परा. मा., p. 350; व्य. नि., pp. 175 and 242; वी. मि., p. 425; सर्वत्र स्मृ. कल्पवत्पाठः.

[4] परा. मा., p. 350; स्मृ. कल्प., p. 80; [i] यत्र तं लेखितं, स्मृ. च., III, p. 522; [i] यत्रैतत्, वि. र., p. 181; [i] यत्रैतत्; [j] सम्यक्, व्य. नि., pp. 175 and 242; [h] न विरोधश्च; [i] यत्रैतत्; [j] पत्रे, वि. मि., p. 425; [h] ननि; [i] यत्रैतत्; [j] पत्रे.

पालनीयाः[1] समर्थैस्तु[a] यः समर्थो विसंवदेत् ।
सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरात् ॥ १३

तत्र[2] भेदमुपेक्षां वा यः कश्चित्कुरुते नरः ।
चतुःसुवर्णाः षण्निष्कास्तस्य दण्डो विधीयते ॥ १४

यस्तु[3] साधारणं[b] हिंस्यात्क्षिपेत्त्रैविद्यमेव वा ।
संवित्क्रियां[c] विहन्याच्च* स[d] निर्वास्यः [e]पुरात्ततः ॥ १५

अरुन्तुदः[4] सूचकश्च भेदकृत्साहसी तथा ।
श्रेणिपूगनृपद्विष्टः[f] क्षिप्रं निर्वास्यते [g]ततः ॥ १६

कुलश्रेणिगणाध्यक्षाः[5 h] पुरदुर्गनिवासिनः ।
वाग्धिग्दमं[i] परित्यागं प्रकुर्युः [j]पापकारिणाम् ॥ १७

[1] या. अप., p. 793; स्मृ. कल्प., p. 80; [a] समस्तैस्तैः, स्मृ. च., III, p. 522; एकपादमात्रं, वि. र., p. 181; [a] समस्तैस्तु, परा. मा., p. 351; वि. र वत्पाठः, व्य. नि., p. 175A; वी. मि., p. 425; स्मृ. कल्पवत्पाठः.

[2] या. अप., p. 793; स्मृ. कल्प., p. 80; वि. र., p. 182.

[3] या. अप., p. 794; स्मृ. कल्प., p. 80; [b] तत्साधनं; [e] ततः पुरात्, स्मृ. च., III, p. 527; [e] ततः पुरात्, वि. र., p. 183; स्मृ. च. वत्पाठः, परा. मा., p. 354; व्य. नि., pp. 175A and 243; [c] साक्षिक्रियां; [e] ततः पुरात्, स. वि., p. 329; [c] साक्षिक्रियां; [d] क्षिप्रं निर्वास्यते पुरात्, वी. मि., p. 428; स्मृ. च. वत्पाठः, व्य. मा., p. 206; * वा; [e] ततः पुरात्.

[4] या. अप., p. 794; स्मृ. कल्प., p. 81; स्मृ. च., III, p. 527; वि. र., p. 184; [f] द्वेष्टा; [g] पुरः, परा. मा., p. 355; व्य. नि., pp. 175A and 243; [f] द्विट् च, स. वि., p. 329; [f] द्विट् चेत्, वी. मि., p. 429; व्य. मा., p. 205; [f] द्विट् च क्षिपन्.

[5] या. अप., p. 794; स्मृ. कल्प., p. 81; [j] कर्मणां, स्मृ. च., III, p. 527; [j] कर्मणां, वि. र., p. 184; [j] कर्मिणां, परा. मा., p. 356; [h] पुर; [j] कारिणः, स. वि., p. 329; वी. मि., p. 429; [h] पूग; [i] दण्ड, व्य. मा., p. 206; [i] दण्डं; [j] कारिणम्.

तैः[1] कृतं[a] च[b] स्वधर्मेण [c]निग्रहानुग्रहं नृणाम् ।
तद्राज्ञोऽप्यनुमन्तव्यं[d] निसृष्टार्था[e] हि ते स्मृताः ॥ १८

बाधां[2] कुर्युर्यदेकस्य[f] सम्भूता द्वेषसंयुताः ।
राज्ञा [g]ते [h]विनिवार्यास्तु [i]शास्याश्चैवानुबन्धिनः ॥ १९

मुख्यैः[3] सह समूहानां *विसंवादो यदा भवेत् ।
तदा विचारयेद्राजा स्वमार्गे स्थापयेच्च तान् ॥ २०

... ... ... यः[4] समर्थो विसंवदेत् ।
सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरात् ॥ २१

संभूयैकतमं[5] [j] कृत्वा [k]राजभाव्यं हरन्ति ये ।
ते[l] तदष्टगुणं दाप्या [m]वणिजश्च पलायिनः ॥ २२

[1] या. अप., p. 794; स्मृ. कल्प., p. 81; [b] यत्; [d] राज्ञा; [e] ष्ट्व्या, स्मृ. च., III, p. 528; [b] यच्च धर्मेण; [d] राज्ञा, वि. र., p. 184; [b] यत्; [d] राज्ञा, परा. मा., p. 356; व्य. नि., pp. 175A and 244; वि. र वत्पाठः, स. वि., p. 329; [a] कृतौ यौ; [c] ग्रहौ; [d] राज्ञा, वी. मि., p. 429; [b] यत्सधर्मेण; [d] राज्ञा, व्य. मा., p. 206; वि. र वत् पाठः.

[2] या. अप., p. 794; स्मृ. कल्प., p. 81; [g] तु; [h] ते, स्मृ. च., III, p. 528; [i] बन्धतः, वि. र., p. 184; परा. मा., p. 355; व्य. नि., pp. 175A and 244; [f] य एकस्य सम्भूय स्युः, वी. मि., p. 428; [g] तु; [h] ते; [i] बन्धतः, व्य. मा., p. 207; [f] यदैकस्य; [h] स्युः; [i] बन्धतः.

[3] या. अप., p. 794; स्मृ. कल्प., p. 81; स्मृ. च., III, p. 530; वि. र., p. 184; परा. मा., p. 355; व्य. नि., pp. 175B and 244; व्य. मा., p. 207; * संविवादः.

[4] स्मृ. च., III, p. 531.

[5] या. अप., p. 794; स्मृ. कल्प., p. 81; [j] मतं; स्मृ. च., III, p. 531; [j] मतिं; वि. र., p. 185; [j] मतं; [m] विनेयाश्च; व्य. नि., p. 175B; [j] मतिं कृत्वा गणभार्यं हरन्ति च, वि. चि., p. 85; [j] मतं कृत्वा राजभागं; [m] वणिजः प्र; स. वि., p. 330; [k] गणद्रव्यं; [l] एतदष्टादशगुणं, द. वि., p. 269; वि. से., p. 324; [j] मतिं कृत्वा राजभागं; [m] वणिजः प्र.

ततो[1] लभेत[a] यत्किञ्चित्सर्वेषामेव तत्समम् ।
षाण्मासिकं[b] मासिकं वा विभक्तव्यं यथांशतः ॥ २३

देयं[2] वा [c]निःस्ववृद्धान्धस्त्रीबालातुररोगिषु ।
सान्तानिकादिषु तथा [d]धर्म एष सनातनः ॥ २४

यत्नैः[3][e] प्राप्तं रक्षितं [f]वा गणार्थे वा [g]पणं कृतम् ।
राजप्रसादलब्धं[h] वा[i] सर्वेषामेव तत्समम् ॥ २५

[1] या. अप., p. 795; स्मृ. कल्प., p. 81; वि. र., p. 186; [a] लभ्येत, परा. मा., p. 358; वि. चि., p. 85; पूर्वार्धं परम्, स. वि., p. 330; [b] षाण्मासं मासिकं वापि, वी. मि., p. 431; [a] लभ्येत.

[2] या, अप., p. 795; स्मृ. कल्प., p. 81; वि. र., p. 186; [c] बालिश; [d] एष धर्मः, परा. मा., p. 359; [c] बधिर; स. वि., p. 330; [c] निःस्ववृद्धार्त; वी. मि., p. 432.

[3] या. अप., p. 795; स्मृ. कल्प., p. 81; वि. र., p. 187; [e] यत्तैः; [f] च गणार्थं वा प्रकल्पितं; [i] च, परा. मा., p. 359; [e] यत्तैः; [g] ऋणं; [h] राज्ञः प्रसादलब्धं च सर्वेषां तत्समाहितम्। वी. मि., p. 432; पराशरमाधवीयवत् आद्यपादत्रये पाठः.

## १८

## ॥ क्रयविक्रयानुशयः ॥

समासेनोदितस्त्वेष[1] समयाचारनिश्चयः[a] ।
क्रयविक्रयसञ्जातो[b] विवादः श्रूयतामयम् ॥ १

### पण्यम्

जङ्गमं[2] स्थावरं चैव द्रव्ये द्वे समुदाहृते ।
क्रयकाले पण्यशब्द उभयोरपि च स्मृतः ॥ २

### सदोषपण्यक्रये दण्डः

ज्ञात्वा[3] सदोषं यः [c]पण्यं [d]विक्रीणात्यविचक्षणः ।
तदेव द्विगुणं [e]दाप्यस्तत्समं विनयं तथा ॥ ३

### त्याज्यानि

मत्तोन्मत्तेन[4] विक्रीतं हीनमूल्यं [f]भयेन [g]वा ।
अस्वतन्त्रेण [h]मूढेन त्याज्यं तस्य [i]पुनर्भवेत् ॥ ४

[1] वि. र., p. 189; वि. से., p. 178; [a] निर्णयः; [b] संज्ञातो.

[2] वि. र., p. 189.

[3] वि. चि., p. 88; स्मृ. कल्प., p. 81; [c] पण्यं यः; [d] णीता, स्मृ. च., III, p. 515; वि. र., p. 192; परा. मा., p. 370; [c] पण्यं यः; [d] णीते, व्य. नि., p. 248; [c] यत्; [e] दाप्यं, वी. मि., p. 441; [d] णीते, व्य. मा., p. 212; [d] णीते, वि. से., p. 180.

[4] परा. मा., p. 370; स्मृ. कल्प., p. 81; [f] तु यद्भवेत्; [i] हरेत्, स्मृ. च., III, p. 515; वि. र., p. 193; [i] हरेत्, व्य. नि., pp. 250 and 259; वि. चि., p. 89; [g] च; [i] हरेत्, वी. मि., p. 441; या. वी., p. 712; [f] भवेन्न वा; [h] मूल्येन; [i] हरेत्, वि. से., p. 180; [i] हरेत्.

योऽन्यहस्ते[1a] तु विक्रीय अन्यस्मै [b]तत्प्रयच्छति ।
सोऽपि तद्विगुणं दाप्यो विनयं तावदेव तु ॥ ५

परीक्षणकालाः

दशैकपञ्चसप्ताहमासत्र्यहार्धमासिकम्[2] ।
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥ ६

अतोऽर्वाक्[3c] पण्यदोषस्तु यदि सञ्जायते क्वचित् ।
विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयात् ॥ ७

अविज्ञातं[4] तु यत्क्रीतं दुष्टं पश्चाद्विभावितम् ।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु ॥ ८

परीक्षेत[5] स्वयं [d]पण्यमन्येषां च प्रदर्शयेत् ।
परीक्षितं बहुमतं [e]गृहीत्वा न पुनस्त्यजेत् ॥ ९

अश्वरूप्यहिरण्यानां[6] धान्यलोहाजवाससाम् ।
चर्मकाष्ठविकाराणामेकाहं स्यात्परीक्षणम् ॥ १०

मणीभाश्वाश्वतरिणामागमैर्मूल्यकल्पना[7] ।
नृपाज्ञयाऽऽपणस्थानां गोभूम्योरुभयेच्छया ॥ ११

[1] वि. से., p. 180 ; वि. चि., p. 89 ; [a] अन्य ; [b] यः प्रय.

[2] वि. से., p. 182.

[3] व्य. म., p. 133 ; स्मृ. कल्प., p. 82 ; [c] ततोऽर्वाक्, वि. चि., p. 90 ; प्रा. त., p. 515 ; व्य. म., p. 216 ; वि. से., p. 182.

[4] वि. चि., p. 90 ; वि. से., p. 182 ; स्मृ. च., III, p. 518 attributes this verse to कात्यायनः. See Kane, *l.c.*, p. 84.

[5] व्य. मा., p. 215 ; स्मृ. कल्प., p. 82 ; [e] ग्रहीता, स्मृ. च., III, pp. 516 and 517 ; वि. र., p. 198 ; परा. मा., p. 360 ; उत्तरार्धं परं, वि. चि., p. 91 ; [e] क्रेता च, प्रा. त., p. 515 ; स. वि., p. 315 ; वी. मि., p. 433 ; [d] क्रीतं, स्मृ., कल्पवत्पाठः, या. वी., p. 656 ; वि. से., p. 183.

[6] व्य. नि., p. 251.

[7] व्य. मा., p. 218 ; व्य. नि., p. 253 ; पद्यमिदं प्रजापतेरिति केचित्.

संविभागे[1] विनिमये क्षेत्रयोरुभयोरपि ।
अनुस्मृतिकृता ताभ्यां कार्यसिद्धिर्भविष्यति ॥ १२

प्रष्टव्याः[2] सन्निधिस्थाश्चेत्क्षेत्रा ज्ञात्यादयः [a]स्मृताः ।
अन्यथा चेत्कृतं कर्म [b]ज्ञातीच्छां दर्शयेत्ततः ॥ १३

ज्ञात्यादिप्रत्ययेनैव[3] स्थावरक्रय इष्यते ।
अन्यथा चेत्क्रयो [c]यः स्यादन्यग्रामे त्रिपक्षकम् ॥ १४

सोदराश्च[4] सपिण्डाश्च सोदकाश्च सगोत्रिणः ।
सामन्ता धनिका [d]ग्राह्याः सप्तैते [e]योनयो मताः ॥ १५

मूल्यं[5] [f] दत्वाऽधिकं न्यूनं मूल्यस्यानुचितं स्मृतम् ।
क्रयसिद्धेस्तु[g] नैव स्याद्वत्सराणां शतैरपि ॥ १६

## क्षेत्रक्रये विशेषः

विक्रयेषु[6] च सर्वेषु कूपवृक्षादि लेखयेत् ।
जलमार्गादि [h]यत्किञ्चिदन्यैश्चैव बृहस्पतिः ॥ १७

क्षेत्राद्युपेतं[7] [i] परिपक्वसस्यं
वृक्षं फलं वाप्युपभोगयोग्यम् ।
कूपं [j]तडाकं गृहमुन्नतं च
क्षेत्रे [k]च विक्रेतुरिदं वदन्ति ॥ १८

[1] व्य. नि., p. 253.
[2] स. वि., p. 322; व्य. नि., p. 263; [a] तथा; [b] ज्ञातेच्छां.
[3] स. वि., p. 323; व्य. नि., p. 262; [c] न स्याद्दण्डश्चापि तयोर्भवेत्.
[4] स. वि., p. 323; व्य. नि., p. 261; [d] ग्राम्याः; [e] भूक्रये.
[5] स. वि., p. 326; व्य. नि., p. 259; [f] मूल्यात्पादा; [g] सिद्धि.
[6] स. वि., p. 326; व्य. नि., p. 256; [h] अन्यच्चैव.
[7] स. वि., p. 326; व्य. नि., p. 256; [i] क्षीरादपेतं; [j] तडाकं च गृहं समुन्नतं; [k] अपि.

मत्तमूढानभिज्ञार्तमूढैर्विनिमयः[1] कृतः ।
यच्चानुचितमूल्यं स्यात्तत्सर्वं विनिवर्तयेत् ॥ १९

ज्ञातिसामन्तधनिकाः[2] क्रये ग्रामाद्बहिर्गताः ।
नार्हन्ति ते प्रतिक्रोष्टुं क्रान्तं पक्षत्रये क्रमात् ॥ २०

त्रिपक्षादथवा[3] मासात्त्रितयात्तु तदाप्नुयात् ॥ २१

[1] व्य. नि., p. 260.
[2] व्य. नि., p. 262.
[3] व्य. नि., p. 263.

१९

## ॥ सीमावादः ॥

क्रयविक्रयानुशये[1] विधिरेष [a]प्रदर्शितः ।
ग्रामक्षेत्रगृहादीनां सीमावादं [b]निबोधत ॥ १

सीमासन्धिषु वृक्षादयो स्थाप्याः

सीमावृक्षांश्च[2] कुर्वीरन् न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीशालता(डां?लां)श्च क्षीरिणश्चैव पादपान् ॥ २

गुल्मान्वेणूंश्च[3] विविधान् शमीवल्लीस्थलानि च ।
शरान् कुब्जकगुल्मांश्च तथा सीमा न नश्यति ॥ ३

तडागान्युदपानानि[4] - - त्प्रस्रवणानि च ।
सीमासन्धिषु कार्याणि देवतायतनानि च ॥ ४

राजा[5] क्षेत्रं दत्वा चातुर्वैद्यवणिग्वारिकसर्वग्रामीण तन्महत्तरस्वामिपुरुषाधिष्ठितं परिच्छिन्द्यात् ॥ ५

यदि[6] शूद्रो नेता स्यात्तं क्लैब्येनालङ्कारेण अलङ्कृत्य शवभस्मना मुखं विलिप्याऽऽग्नेयस्य पशोः शोणितेनोरसि पञ्चाङ्गुलानि कृत्वा ग्रीवायामन्त्राणि प्रतिमुच्य सव्येन पाणिना सीमालोष्टं मूर्ध्नि धारयेत् ॥ ६

[1] वि. र., p. 201 ; स्मृ. कल्प., p. 82 ; [a] उदाहृतः ; [b] निबोधयेत्, स्मृ. च., III, p. 545 ; उत्तरार्धं परम् .

[2] स्मृ. कल्प., p. 82.

[3] स्मृ. कल्प., p. 82.

[4] स्मृ. कल्प., p. 82.

[5] या. बा., p. 256.

[6] या. बा., p. 257.

## प्रकाशाप्रकाशचिह्नानि

निवेशकाले[1] कर्तव्यः [a]सीमाबन्धविनिश्चयः ।
प्रकाशोपांशुचिह्नैश्च लक्षितः संशयापहः ॥ ७

अनश्वराणि[2] द्रव्याणि प्रकृत्यैवाविरोधतः ।
वापीकूपतडागानि[3 b, c] चैत्यारामसुरालयाः ॥ ८

स्थलनिम्ननदीस्रोतः[d] शरगुल्मनगादयः[e] ।
प्रकाशचिह्नान्येतानि सीमायां कारयेत्सदा ॥ ९

## सीमावादे साक्षिणः

यदि[4] संशय एव स्याल्लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्याद्विवादे सीमनिश्चयः ॥ १०

साक्ष्यभावे[5] च चत्वारो ग्रामसीमान्तवासिनः ।
सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ ॥ ११

सामन्तानामभावे[6] तु मौलानां सीमसाक्षिणाम् ।
इमानप्यनुयुञ्जीत पुरुषान् वनगोचरान् ॥ १२

[1] स्मृ. च., III, p. 534; वि. र., p. 202; [a] विनिर्णयः, स. वि., p. 332; वि. र. वत्पाठः.

[2] व्य. नि., p. 267.

[3] परा. मा., p. 387; स्मृ. कल्प., p. 82; [b] कूपवापीतडाकानि; [e] गुल्माश्मराशयः, या. अप., p. 759; [b] कूपवापीतडाकानि 'स्थले'त्यर्धं न दृश्यते, स्मृ. च., III, p. 534; वि. र., p. 203; [b] कूपवापीतडाकानि प्रकाशेत्यर्धं न दृश्यते, व्य. नि., p. 267; वि. र. वत्पाठः; [e] गुल्माश्च राशयः, वि. चि., p. 93; [c] तडागादि; [e] गुल्माश्मराशयः प्रकाशेत्यर्धं न दृश्यते, वी. मि., p. 452; [d] निम्नं.

[4] वि. चि., p. 93.

[5] वि. चि., p. 94; स. वि., p. 334.

[6] वि चि., p. 94.

व्याधाञ्छाकुनिकान्[1] गोपान्कैवर्तान्मूलखानकान् ।
व्याळग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान् ॥ १३

ते[2] पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम् ।
तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः ॥ १४

शिरोभिस्ते[3] गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिताः स्वैः स्वैर्ब्रूयुस्ते तु समञ्जसम् ॥ १५

निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ।
प्रकाशचिह्नान्येतानि[4] सीमायां कारयेत्सदा ॥ १६

## अप्रकाशचिह्नानि

निहितानि[5] तथान्यानि यानि भूमिर्न भक्षयेत् ।
उपच्छन्नानि[6] चान्यानि सीमालिङ्गानि कारयेत् ॥ १७

सीमाज्ञाने[7] नृणां वीक्ष्य लोके नित्यविपर्ययम् ।
श्मशानोऽस्थीनि[a] गोबालास्तथा भस्मकपालिकाः ॥ १८

करीषमिष्टकाङ्गारशर्करा[8] बालुकांस्तथा[b] ।
तानि सन्धिषु सीमाया अप्रकाशानि कारयेत् ॥ १९

[1] वि. चि., p. 94.

[2] वि. चि., p. 94.

[3] वि. चि., p. 94.

[4] वि. र., p. 203; व्य. नि., p. 267.

[5] या. अप., p. 759; स्मृ. कल्प., p. 83; वि. र., p. 203; व्य. नि., p. 267; वी. मि., p. 453.

[6] स्मृ. कल्प., p. 83.

[7] स्मृ. कल्प., p. 83; वी. मि., p. 453; [a] अश्मनोऽस्थीनि गोबालां-स्तुषान् इत्युत्तरार्धं परम्.

[8] वी. मि., p. 453; स्मृ. कल्प., p. 83; [b] तथा । यानि चैवं प्रकाराणि कालाद्भूमिर्न भक्षयेत् । तानि.

करीषास्थितुषाङ्गारशर्कराश्मकपालिकाः[1] ।
सिकतेष्टकगोबालकार्पासास्थीनि भस्म च ॥ २०
प्रक्षिप्य[2] कुम्भेष्वेतानि सीमान्तेषु निधापयेत् ।

प्रयत्नदर्शितव्यचिह्नानि

ततः[a] पौगण्डबालानां प्रयत्नेन प्रदर्शयेत् ॥ २१
वार्धके[3 b] च शिशूनां [c]ते दर्शयेयुस्तथैव च ।
एवं परम्पराज्ञाने सीमाभ्रान्तिर्न जायते ॥ २२
कुरुते[4] दानहरणं भाग्याभाग्यवशान्नृणाम् ।
एकत्र[5 d] कूलपातं[e] तु भूमेरन्यत्र [f]संस्थितिः ॥ २३
नदीतीरं[g] प्रकुरुते [h]तस्यैतां न विचालयेत् ।

[1] या. अप., p. 761; स्मृ. कल्प., p. 83; स्मृ. च., III, p. 534; वि. र., p. 204; परा. मा., p. 387; व्य. म., p. 135; वि. से., p. 186.

[2] या. अप., p. 761; म. कु., p. 312 पूर्वार्धं परं; स्मृ. कल्प., p. 83; स्मृ. च., III, pp. 534 and 536; वि. र., p. 204; परा. मा., p. 387; व्य. नि., p. 268; स. वि., p. 333; उत्तरार्धं परं; वी. मि., p. 453; उत्तरार्धं परं; [a] तत्र योगं तु, व्य. म., p. 135; पूर्वार्धं परं, वि. से., p. 186.

[3] या. अप., p. 761; स्मृ. कल्प., p. 83; [c] तु, स्मृ. च., III, p. 536; वि. र., p. 204; [b] वार्धक्ये, परा. मा., p. 388; व्य. नि., p. 268; स. वि., p. 333; वी. मि., p. 453; वि. से., p. 186.

[4] या. अप., p. 761.

[5] या. अप., p. 761; स्मृ. कल्प., p. 84; [f] संस्थितिं; [h] तस्य तां, स्मृ. च., III, p. 549; [f] संस्थितिं। नदीतीरे; [h] तस्य तां, वि. र., p. 217; [d] एककूलनिपातस्तु; [f] संस्थितिं। नदीतीरेषु कुरुते तस्य तत्र, परा. मा., p. 399; स्मृ. कल्पतरुवत्पाठः, व्य. नि., p. 270; [e] कूप; [f] संस्थितं। नदीतीरे; [h] तस्य तां, वि. चि., p. 96; [f] संस्थितं; [h] तस्य तां व्य. सा., p. 198; [e] जलपात्रं; [f] संस्थितं; [h] तस्य तत्र वी. मि., p. 462; स्मृ. कल्पवत्पाठः, या. वी., p. 634; स्मृ. कल्पवत्पाठः, वि. से., p. 189; [g] तीरे नदी.

क्षेत्रं[1a] ससस्यमुल्लङ्घ्य[b] भूमिश्छिन्ना[c] यदा भवेत् ॥ २४
नदीस्रोतःप्रवाहेण[d] क्षेत्रस्वामी[e] लभेत ताम् ।
या[2] राज्ञा क्रोधलोभेन बलान्न्यायेन वा हृता ॥ २५

## गृहक्षेत्रविवादसाक्षिनिर्णयः

गृहक्षेत्रविवादेषु[3] सामन्तेभ्यो विनिर्णयः ।
नगरग्रामगणिनो[f] ये च वृद्धतमा[g]नराः ॥ २६
कीनाशशिल्पिभृतका[4] गोपव्याधोञ्छजीविनः ।
मूलखानककैवर्तकुल्या भेदकबाधकाः ॥ २७
आगमं[5] च प्रमाणं च [h]भोगं कामं च नाम च ।
भूभागलक्षणं चैव ये [i]विदुस्तेऽत्र साक्षिणः ॥ २८
प्रदत्तान्यस्य[6] तुष्टेन[j] न सा सिद्धिमवाप्नुयात् । २९
[या* राज्ञा क्रोधलोभेन छलान्न्यायेन वा हृता] ।

[1] या. अप., p. 762; स्मृ. कल्प., p. 84; [a] क्षेत्रशस्यं समुल्लङ्घ्य; [e] पूर्वस्वामी स्मृ. च., III, p. 549; [e] पूर्वस्वामी, वि. र., p. 217; स्मृ. च. वत्पाठः, परा. मा., p. 399; [a] क्षेत्रशस्यं समुल्लंघ्य; [c] पूर्वस्वामी लभेच्च तां, व्य. नि., p. 270; स्मृ. चवत्पाठः, वि. चि., p. 96; [b] समस्त; [e] पूर्वे व्य. सा., p. 199; स्मृ. चवत्पाठः, वी. मि., p. 462; स्मृ. च. वत्पाठः, या. वी., p. 634; [b] समस्त; [c] स्वस्था; [d] तदा; [e] पूर्वे.

[2] या. अप., p. 762.

[3] वि. र., p. 209; व्य. नि., p. 98; [f] ग्रामणीभ्यो वा; [g] मताः.

[4] वि. र., p. 209.

[5] परा. मा., p. 392; या. मि., p. 234; स्मृ. च., III, p. 537; व्य. नि., p. 98; [h] भोगं कालं; [i] तेऽपि, (स. वि., p. 333; व्य. सा., p. 195; [h] भोगं कालं; वी. मि., p. 453; मि. बा., p. 788; या. मि. वत्पाठः ).

[6] या. अप., p. 762; स्मृ. कल्प., p. 84; स्मृ. च., III, p. 549; वि. र., p. 217; परा. मा., p. 399; व्य. नि., p. 270; वि. चि., p. 96; व्य. सा., p. 199; * छलेनान्येन, वी. मि., p. 462; [j] दुष्टेन, वि. से., p. 189.

प्रमाणरहितां[1a] भूमिं भुञ्जतो यस्य [b]या हृता ।
गुणाधिकस्य[c] दत्ता वा तस्य तां [d]नैव चालयेत् ॥ ३०
शपथैः[2e] शापिताः [f]स्वैः स्वैर्ब्रूयुः [g]सीम्नि विनिश्चयम् ।
दर्शयेयुर्निधानानि[h] तत्प्रमाणमिति स्थितिः ॥ ३१
सत्येन[3] शापयेद्विप्रं क्षत्रियं वाहनायुधैः ॥ ३२
ज्ञातृचिह्नैर्विना[4 i, j] साधुरेकोऽप्युभयसम्मतः ।
रक्तमाल्याम्बरधरो मृदमादाय मूर्धनि ॥ ३३
सत्यव्रतः[5] सोपवासः [k]सीमान्तं दर्शयेन्नरः । ३४
[सामन्ताश्चेन्मृषा[6] ब्रूयुः सेतौ विवदतां नृणाम् ।
सर्वे च ते पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥ ३५

[1] या. अप., p. 762; स्मृ. कल्प., p. 84; [a] रहितो भूमिं भुञ्जता यस्य या कृता; [c] काय वा दत्ता; [d] न वि, स्मृ. च., III, p. 550; [c] काय वा दत्ता; [d] न वि, वि. र., p. 217; [c] काय वा देया; [d] न वि, परा. मा., p. 399; स्मृ. च वत्पाठः; वि. चि., p. 96; [a] रहिते ह्यर्थे; [b] वा; [c] काय वा दत्ता; [d] न वि, वी. मि., p. 462; स्मृ. च. वत्पाठः.

[2] या. अप., p. 762; स्मृ कल्प., p. 83; स्मृ. च., III, p. 541; [e] शापिताः शपथैः; [g] सीमाविनिर्णयम्; [h] च लिङ्गानि, वि. र., p. 210; परा. मा., p. 392; स्मृ. च. वत्पाठः, व्य. नि., p. 269; स. वि., p. 335; [f] चैव; [g] सीमाविनिर्णयं; [h] च लिङ्गानि, वी. मि., p. 457; स. वि वत्पाठः.

[3] परा. मा., p. 392; स्मृ. च., III, p. 541; स. वि., p. 335.

[4] या. अप., p. 762; स्मृ. कल्प., p. 83; [i] चिह्नविनाशेऽपि, स्मृ. च., III, p. 543; वि. र., p. 211; [i] चिह्नविनाशे तु; परा. मा., p. 393; व्य. नि., p. 269; उत्तरार्धं परं, वि. चि., p. 94; [j] विनाशे तु, पूर्वार्धं परं, स. वि., p. 335; व्य. म., p. 136; मि. बा., p. 791; वि. र. वत्पाठः; वि. से., p. 188; [i] चिह्नविनाशे च पूर्वार्धं परम्.

[5] या. अप., p. 762; स्मृ. कल्प., p. 83; [k] सीमां सं, स्मृ. च., III, p. 543; वि. र., p. 211; [k] सीमां सं, परा. मा., p. 393; [k] सीमान्तं, व्य. नि., p. 269; [k] सीमां सं, स. वि., p. 335; व्य. म., p. 136; मि. बा., p. 791; [k] सीमां सं, वि. से., p. 188; [k] सीमां सं.

[6] स्मृ. कल्प., p. 84. *Manusmṛti*, VIII, 259.

यथोक्तेन[1] नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ॥ ३६]

सर्वस्मिन्[2a] स्थावरे वादे विधिरेष प्रकीर्तितः । ३७

तदुत्पन्नाश्च[3b] सामन्ता [c]येऽन्यदेशे व्यवस्थिताः ।
मौलास्ते[d] तु [e]समुद्दिष्टाः प्रष्टव्याः कार्यनिर्णये ॥ ३८

अदुष्टास्ते[4] तु यद्ब्रूयुः सन्दिग्धौ समवृत्तयः ।
तत्प्रमाणं तु कर्तव्यमेवं धर्मो न हीयते ॥ ३९

अन्यग्रामात्समाहृत्य[5f] दत्ताऽन्यस्य यदा मही ।
अन्यथा तु भवेल्लाभो नराणां राजदैविकः ॥ ४०

महानद्याऽथवा[6g] राज्ञा कथं तत्र विचारणा ।

[1] स्मृ. कल्प., p. 84. *Manusmṛti*, VIII, 257. The Udaipur MS. of स्मृ. कल्प. attributes these two verses to बृहस्पति.

[2] या. अप., p. 764; स्मृ. च., III, p. 546; स. वि., p. 338; वी. मि., p. 457; [a] सर्वत्र.

[3] वी. मि., p. 222; स्मृ. कल्प., p. 84; [c] येऽन्ये देशान्तरस्थिताः; [e] समादिष्टाः, वि. र., p. 213; [b] तु सामन्ता; [c] येन्ये देशान्तरस्थिताः; [d] तु ते.

[4] स्मृ. कल्प., p. 84.

[5] या. अप., p. 761; स्मृ. कल्प., p. 84; [f] न समाश्रित्य, स्मृ. च., III, p. 548; वि. र., p. 216; परा. मा., p. 398; व्य. नि., p. 270; वि. चि., p. 96; व्य. सा., p. 198; पूर्वार्धं परम्, स. वि., p. 338; वी. मि., p. 461; या. वी., p. 633; वि. से., p. 189; सर्वत्रापि पूर्वार्धमात्रः पाठः.

[6] स्मृ. कल्प., p. 84; स्मृ. च., III, p. 548; वि. र., p. 216; परा. मा., p. 398; व्य. नि., p. 270; वि. चि., p. 96; व्य. सा., p. 198; स. वि., p. 338; वी. मि., p. 461; [g] राज्ञा च, या. वी., p. 633; वि. से., p. 189.

नद्योत्सृष्टा[1a] राजदत्ता यस्य तस्यैव सा मही ।
अन्यथा[b] तु[c] भवेल्लाभो नराणां [d]राजदैविकः ॥ ४१
क्षयोदयौ[2] जीवनं च दैवराजवशान्नृणाम् ।
तस्मात्सर्वेषु[e] कालेषु[f] तत्कृतं न विचालयेत् ॥ ४२
ग्रामयोरुभयोर्यत्र[3] मर्यादा कल्पिता नदी ।
कुरुते दानहरणं भाग्याऽऽभाग्यवशान्नृणाम् ।
क्षयोदयेन[g] चाल्पा[h] च चालयन् दण्डमर्हति ॥ ४३
दशग्रामशतग्रामसहस्रग्रामलक्षणाम्[4] ।
विषमां[5] नृपतिः कुर्याच्चिह्नैः सीमां विनिश्चिताम् ॥ ४४
निवेशकालादारभ्य[6] गृहवार्यापणादिकम्[i] ।
येन [j]यावद्यथा भुक्तं तस्य [k]तन्न विचालयेत् ॥ ४५

[1] परा. मा., p. 398; स्मृ. कल्प., p. 84; [c] न; [d] दैवकः, स्मृ. च., III, p. 548; वि. र., p. 217; [c] न, व्य. नि., p. 270; [b] महानद्याथवा राज्ञा कथं तत्र विचारणा, वि. चि., p. 96; व्य. सा., p. 198; [a] नद्योत्सृष्टा, स. वि., p. 338; [c] न, वी. मि., p. 461; [c] न, या. वी., p. 633; [c] न; [d] दैवकः, वि. से., p. 189; [a] यद्योत्सृष्टा राजदत्ता वा; [c] न.

[2] या. अप., p. 761; स्मृ. कल्प., p. 84; [e] क्षयोदयेन चाल्पा च चालयन् दण्डमर्हति; स्मृ. च., III, p. 549; [f] कार्येषु, वि. र., p. 217; [f] कार्येषु तत्कृतं न विचारयेत्, वि. चि., p. 96; [e] यस्मात्सर्वेषु कार्येषु, व्य. सा., p. 198; (स. वि., p. 338; वी. मि., p. 461; या. वी., p. 633; [f] कार्येषु) वि. से., p. 189; वि. चि. वत्पाठः.

[3] या. अप., p. 761; स्मृ. च., III, p. 549; [g] कुरुते दानहरणं भाग्याभाग्यवशान्नृणाम्। वि. र., p. 217; [h] तौल्या सा, परा. मा., p. 398; स्मृ. च. वत्पाठः; वि. चि., p. 96; [h] अल्पासौ, व्य. सा., p. 198; स्मृ. च. वत्पाठः; वी. मि., p. 462; स्मृ. च. वत्पाठः; या. वी., p. 634; वि. से., p. 189; [h] चान्यासां, स्मृ. कल्पत, च.

[4] वि. र., p. 218.

[5] वि. र., p. 218.

[6] या. अप., p. 764; स्मृ. कल्प., p. 85; [k] तन्नैव, स्मृ. च., III, p. 550; वि. र., p. 219; परा. मा., p. 399; व्य. नि., p. 270; [j] वाप्यथवा; [k] तां न, वि. चि., p. 97; स. वि., p. 339; वी. मि., p. 463; [i] चर्या, या. वी., p. 634; वि. से., p. 190; [i] बाह्याङ्गणादिकं.

वातायनप्रणालीस्तु[1a] तथा [b]निर्यूहवेदिकाः ।
चतुःशालस्यन्दनिकाः[c,d] प्राङ्निविष्टा[e,f] न चालयेत् ॥ ४६

मेखलाभ्रमनिष्कासगवाक्षान्नोपरोधयेत्[2] ।
प्रणालीं गृहवास्तुं च पीडयन् दण्डभाग्भवेत् ॥ ४७

निवेशसमयादूर्ध्वं[3] नैते योज्याः कथञ्चन ।

## गृहनिर्माणे अकार्याणि

दृष्टिपातं प्रणालीं च न कुर्यात्परवेश्मनि ॥ ४८

वर्चस्थानं[4] वह्निमयं[g,h] गर्तोच्छिष्टाम्बुसेचनम्[i] ।
अत्यारात्परकुड्यस्य[5] न कर्तव्यं [j]कदाचन ॥ ४९

विण्मूत्रोदकवप्रांश्च[6] वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यां निवेशयेत् ॥ ५०

[1] या. अप., p. 764; स्मृ. कल्प., p. 85; [a] नाः प्रणाळ्यश्च; [b] का; [d] कां; [f] विष्टां, स्मृ. च., III, p. 550; [a] नं प्रणाळीं च, वि. र., p. 219; [a] नाः प्रणालीश्च; [c] लं स्यन्दनिकां; [f] विष्टां, परा. मा., p. 400; वि. चि., p. 97; [a] नः प्रणाल्यश्च, वी. मि., p. 463; [a] नं प्रणाळी, च; [b] का; [d] कां; [f] विष्टां, या. वी., p. 634; [a] नाः प्रणाळ्यश्च; [b] का; [c] ले, वि. से., p. 190; [a] नाः प्रणाळ्यश्च; [c] लं; [e] प्राङ्निर्दिष्टा.

[2] वि. चि., p. 97.

[3] वि. चि., p. 97.

[4] या. अप., p. 765; स्मृ. कल्प., p. 85; स्मृ. च., III, p. 551; [h] चयं, वि. चि., p. 98; [h] चयं; [i] नु, वी. मि., p. 464; [h] चयं, या. वी., p. 635; [g] ब्रह्मचर्यं गर्तो विष्ठानुसेचनम्, व्य. म., p. 137; वि. से., p. 191; वि. चि. वत्पाठः.

[5] या. अप., p. 765; स्मृ. कल्प., p. 85; स्मृ. च., III, p. 551; परा. मा., p. 400; वि. चि., p. 98; वी. मि., p. 464; [j] कथञ्चन, या. वी., p. 635; व्य. म., p. 137; वि. से., p. 191.

[6] स. वि., p. 339.

यान्त्यायान्ति[1] जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु [a]केनचित् ॥ ५१

यस्तत्र[2] सङ्करं श्वभ्रं वृक्षारोपणमेव च ।
कामात्पुरीषं कुर्याच्च तस्य दण्डस्तु माषकः ॥ ५२

गृहीत्वा[3] वाहयेत्काले वापगोपनसङ्ग्रहान् ।
अकुर्वन् स्वामिने दाप्यो [b]मध्यं कृष्टशादं तु सः ॥ ५३

क्षेत्रं[4] गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत् ।
स्वामिने[5] स शादं दाप्यो राज्ञे दण्डं च तत्समम् ॥ ५४

चिरावसन्ने[6] दशमं कृष्यमाणे तथाष्टमम् ।
सुसंस्कृते तु षष्ठं स्यात्परिकल्प्य [c]यथाविधि ॥ ५५

[1] या. अप., p. 765; स्मृ. कल्प., p. 85; स्मृ. च., III, p. 551; वि. र., p. 220; परा. मा., p. 401; वि. चि., p. 98; [a] केन च; स. वि., p. 339; वी. मि., p. 464; व्य. म., p. 137; वि. से., p. 191.

[2] या. अप., p. 765; स्मृ. च., III, p. 552; परा. मा., p. 401; वी. मि., p. 465; व्य. म., p. 137.

[3] वि. चि., p. 102; स्मृ. च., III, p. 558; [b] मध्ये कृष्टे दमं. तृतीयपादं न दृश्यते. वि. र., p. 229; वि. से., p. 194; वि. चि. वत्पाठः.

[4] परा. मा., p. 408; स्मृ. च., III, p. 559.

[5] परा. मा., p. 408; स्मृ. च., III, p. 559.

[6] परा. मा., p. 408; स्मृ. च., III, p. 559; [c] यथास्थितम् .

२०

## ॥ वाक्पारुष्यम् ॥

अप्रियोक्तिस्ताडनं[1] च पारुष्यं द्विविधं स्मृतम् ।
एकैकं [a]तु त्रिधा भिन्नं दमश्चोक्तस्त्रिलक्षणः ॥ १

### वाक्पारुष्ये त्रैविधम्

देशधर्मकुलादीनां[2b] क्षेपः [c]पापेन योजनम् ।
द्रव्यं[d] विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥ २
भगिनीभ्रातृसम्बद्धमुपपातकशंसनम्[3e] ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥ ३
अभक्ष्यापेयकथनं[4f] महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं [g]तीव्रमर्माभिपातनम् ॥ ४

[1] या. अप., p. 806 ; स्मृ. कल्प., p. 88; वि. र., p. 243; [a] च द्विधा, वि. चि., p. 109; वि. से., p. 203.

[2] या. अप., p. 806; स्मृ. कल्प., p. 88; [b] ग्राम; [c] नियोजनं, स्मृ. च., III, p. 13; वि. र., p. 243; [b] ग्राम; [c] पनियोजनं, परा. मा., p. 429; [b] ग्राम; [d] इष्टं व्य. नि., p. 358; [b] जाति, वि. चि., p. 109; [b] काल; [c] नियोजनम्, वी. मि., p. 483; [b] ग्राम, या. वी., p. 681; वि. चि वत्पाठः; व्य. म., p. 138; वि. से., p. 203; [b] काल; [c] पनियोजनम् .

[3] या. अप., p. 806; स्मृ. कल्प., p. 88; [e] मातृसम्बन्धं, (स्मृ. च., III, p. 13; वि. र., p. 244; परा. मा., p. 430; व्य. नि., p. 358; स्मृ. कल्पवत्पाठः); वि. चि., p. 109; [e] मातृसम्बन्ध उपपातकशंसनम् । (वी. मि., p. 483; या. वी., p. 681; वि. से., p. 203; द. वि., p. 198; स्मृ. कल्पवत्पाठः.)

[4] या. अप., p. 806; स्मृ. कल्प., p. 88; [g] तीव्रं मर्माभिघट्टनम्. स्मृ. च., III, p. 13; स्मृ. कल्पवत्पाठः; वि. र., p. 244; [f] प्रथनं; [g] तीव्रं मर्माभिघट्टनम् । परा. मा., p. 430; व्य. नि., p. 358; [g] तीव्रमाहुर्मनीषिणः, (वि. चि., p. 109; वी. मि., p. 483; या. वी., p. 681; द. वि., p. 198; वि. से., p. 204; स्मृ. कल्पवत्पाठः) अख., p. 1.

## दण्डः

समजातिगुणानां[1] तु [a]वाक्पारुष्ये परस्परम् ।
विनयोऽभिहितः[b] शास्त्रे [c]पणस्त्वर्धत्रयोदशः ॥ ५
दण्डः[2] काणखञ्जादीनां तथाविधानपि कार्षापणद्वयम् । ६
सवर्णाक्रोशने[3] सार्धद्वादशपणो दण्डः ।
हीनवर्णे काकिण्यधिकषट्पणो दण्डः ॥ ७
काणखञ्जादीनां तथा ।
समानयोः[4] समो दण्डो [d]न्यूनस्य [e, f]द्विगुणस्तु सः ।
उत्तमस्याधिकः[g] प्रोक्तो वाक्पारुष्ये परस्परम् ॥ ८
क्षिपन्[5] स्वस्रादिकं[h] दद्यात्पञ्चाशत्पणिकं दमम् ।
गुणहीनस्य[6] पारुष्ये ब्राह्मणो नापराध्नुयात् ॥ ९

[1] या. अप., p. 806; स्मृ. कल्प., p. 88; [c] पणानर्धत्रयोदश, स्मृ. च., III, p. 758; [c] पणा अर्धत्रयोदशाः, वि. र., p. 247; स्मृ. कल्पवत्पाठः, परा. मा., p. 430; वि. चि., p. 110; [c] पणाः, स. वि., p. 476; [b] विहितः; [c] पणा अर्धत्रयोदशाः, वी. मि., p. 483; स्मृ. चवत्पाठः; या. वी., p. 681; [a] ष्यं; [b] अभिमतः पणा अर्धत्रयोदश, व्य. मा., p. 232; [c] पणानर्धत्रयोदशान्, वि. से., p. 210; [c] पणा अर्धत्रयोदश, अख., pp. 2 and 88; वि. र. वत्पाठः.

[2] स्मृ. कल्प., p. 88.

[3] वि. चि., p. 110.

[4] या. अप., p. 808; स्मृ. कल्प., p. 88; [g] अर्धिकः, स्मृ. च., III, p. 759; वि. र., p. 245; स्मृ. कल्पतरुवत्पाठः, व्य. नि., p. 358; [d] न्यूनस्तद्विगुणं स्मृतं; [g] अधिको दण्डः, स. वि., p. 477; [d] न्यूने स्याद्विगुणः स्मृतः; [g] अधिकं प्रोक्तं, वी. मि., p. 484; [e] द्विगुणो दमः, या. वी., p. 681; [g] अर्धिकल्पोक्तो वाक्पारुष्यं परस्परं, द. वि., p. 200; [f] स्मृतः; [g] अधिको दण्डः, व्य. मा., p. 231; [f] तु यः; [g] अर्धिकः, वि. से., p. 209; [f] च सः; [g] अर्धिकः अख., pp. 1 and 88.

[5] या. अप., p. 807; स्मृ. कल्प., p. 88; वि. र., p. 250; व्य. नि., p. 359; वी. मि., pp. 485 and 486; [h] विप्रादिकं, श्वश्र्वादिकमिति यथासंख्यं पाठः, द. वि., p. 212; वि. से., p. 214; [h] शस्त्रादिकं.

[6] स्मृ. च., III, p. 760; स. वि., p. 479.

पतितं[1] पतितेत्युक्त्वा चोरं चोरेति वा पुनः ।
वचनात्तुल्यदोषः स्यात् ... ... ॥ १०

## वर्णभेदेन दण्डभेदः

धर्मोपदेशं[2] धर्मेण[a] विप्राणामस्य कुर्वतः ।
तप्तमासिञ्चयेत्तैलं[b] वक्त्रे श्रोत्रे च पार्थिवः ॥ ११
विप्रे[3 c] शतार्धं दण्डस्तु क्षत्रियस्याभिशंसने ।
विशस्तथाऽर्धपञ्चाशच्छूद्रस्यार्धत्रयोदश[d] ॥ १२
सच्छूद्रस्यायमुद्दिष्टो[4 e] विनयोऽनपराधिनः ।
गुणहीनस्य [f]पारुष्ये ब्राह्मणो नापराध्नुयात् ॥ १३
वैश्यस्य[5 g] क्षत्रियाक्रोशे[h] दण्डनीयः [i]प्रदो (?) भवेत् ।
तदर्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति ॥ १४

[1] स. वि., p. 479.

[2] परा. मा., p. 434; व्य. नि., p. 360; [a] दर्पेण द्विजानां; [b] सेचयेत्.

[3] व्य. म., p. 139; स्मृ. कल्प., p. 89; वि. र., p. 251; [d] वैश्यस्य तु, वी. मि., p. 485; द. वि., p. 205; वि. से., p. 211; [c] विप्रः शतार्धं दण्ड्यस्तु; [d] वैश्यस्य च.

[4] परा. मा., p. 434; स्मृ. कल्प., p. 89; [e] उदितः, वि. र., p. 251; [e] उदितः, व्य. नि., p. 359; (वी. मि., p. 485; द. वि., p. 205; स्मृ. कल्पतरुवत्पाठः), व्य, मा., p. 234; [e] उदितः, अख., p. 3; [f] पारुष्यैः.

[5] परा. मा., p. 432; स्मृ. कल्प., p. 89; [g] वैश्यस्तु; [i] शतं, वि. र., p. 252; [g] वैश्यस्तु; [h] आक्षेपे; [i] शतं, व्य. नि., p. 359; स्मृ. कल्पतरुवत्पाठः वी. मि., p. 485; स्मृ. कल्पतरुवत्पाठः, द. वि., p. 205; [h] आक्षेपे; [i] शतं वि. से., p. 211; वि. रवत्पाठ; अख., p. 3; स्मृ. कल्पतरुवत्पाठः; व्य. मा., p. 235; अख. वत्पाठः.

शूद्राक्रोशे[1a] क्षत्रियस्य [b]पञ्चविंशतिको दमः ।
बृहत्वे[c] द्विगुणं तत्र [d]शास्त्रविद्भिरुदाहृतम् ॥ १५

वैश्यमाक्षारयञ्छूद्रो[2] दाप्यः स्यात्प्रथमं दमम् ।
क्षत्रियं मध्यमं चैव विप्रमुत्तमसाहसम् ॥ १६

देशादिकं[3] क्षिपन् [e]दाप्यः [f]पणानर्धत्रयोदश ।
पापेन[g] योजयन् दर्पाद्दाप्यः प्रथमसाहसम् ॥ १७

धर्मोपदेशकर्ता[4] च वेदोदाहरणान्वितः ।
आक्रोशकस्तु[h] विप्राणां [i]जिह्वाच्छेदेन दण्ड्यते ॥ १८

एष[5] दण्डः समाख्यातः पुरुषापेक्षया मया ।
समन्यूनाधिकत्वेन कल्पनीयो [j]मनीषिभिः ॥ १९

[1] परा. मा., p. 432 ; स्मृ. कल्प., p. 89 ; [c] वैश्यस्य चैतद्विगुणं, वि. र., p. 252 ; [a] आक्षेपे ; [c] वैश्यस्य चेत्स्याद्विगुणं ; [b] पण व्य. नि., p. 360 ; [c] वैश्यस्य चैव द्विगुणः ; [d] तः, वी. मि., p. 485 ; [c] वैश्यस्य चैतद्विगुण; ; [d] तः, द. वि., p. 205 ; [a] आक्षेपे ; [c] वैश्यस्य चैतद्विगुणं वि. से., p. 212 ; [b] पण. अख., p. 3 ; स्मृ. कल्पवत्पाठः, व्य. मा., p. 235 ; वी. मिवत्पाठः.

[2] या. अप., p. 809 ; स्मृ. कल्प., p. 89 ; वि. र., p. 252 ; परा. मा., p. 432 ; व्य. नि., p. 360 ; वी. मि., p. 486 ; द. वि. p. 205 ; अख ; p. 3 ; व्य. मा., p. 235.

[3] या. अप., p. 810 ; वि. र., p. 257 ; [e] दण्ड्यः ; [f] दश, वी. मि., p. 488 ; [f] दश, द. वि., p. 209 ; [e] दण्ड्यः ; स्मृ. कल्पतरौ च ; [g] पापैरयोजयन्.

[4] स्मृ. कल्प., p. 89 ; या. अप., p. 809 ; वि. र., p. 252 ; वि. चि., p. 111 ; [i] छेदात्स, वी. मि., p. 486 ; या. वी., p. 683 ; [h] विक्रोशकस्तु विप्राणां इत्युत्तरार्धमात्रपाठः द. वि., p. 321 ; वि. से., p. 212.

[5] या. अप., p. 810 ; वि. र., p. 257 ; [j] महर्षिभिः, वी. मि., p. 488 ; द. वि., p. 209.

## ॥ दण्डपारुष्यम् ॥

हस्तपाषाणलगुडैर्भस्मकर्दमपांसुभिः[1] ।
आयुधैश्च [a]प्रहरणैर्दण्डपारुष्यमुच्यते ॥ १

वाक्पारुष्ये[2] कृते यस्य यथा दण्डो विधीयते ।
तस्यैव द्विगुणं दण्डं कारयेन्मरणादृते ॥ २

द्वयोः[3] प्रहरतोर्दण्डः समयोस्तु समः स्मृतः ।
आरम्भकोऽनुबन्धी[b] च दाप्यः स्यादधिकं दमम् ॥ ३

पूर्वाक्रुष्टः[4] समाक्रोशंस्ताडितः प्रतिताडयन् ।
हत्वाऽऽततायिनं चैव नापराधी भवेन्नरः ॥ ४

वाक्पारुष्यादिना[5] नीचो [c]यः सन्तमभिलङ्घयेत् ।
स एव ताडयंस्तस्य नान्वेष्टव्यो महीभुजा ॥ ५

[1] या. अप., p. 811; स्मृ. कल्प., p. 89; [a] प्रहरणं, स्मृ. च., III, p. 14; वि. र., p. 159; व्य. नि., p. 362; द. वि., p. 219; व्य. मा., p. 238; वि. से., p. 214; [a] प्रहरणम्.

[2] गौ. मि., p. 90.

[3] या. अप., p. 812; स्मृ. च., III, p. 764; वि. र., p. 275; व्य. नि., p. 364; अख., p. 9; [b] कानुबन्धी च, व्य. मा., p. 245; [b] तोऽनुबन्धी.

[4] या. अप., p. 812.

[5] या. अप., p. 812; स्मृ. कल्प., p. 92; वि. र., p. 270; वि. चि., p. 121; द. वि., p. 216; वि. से., p. 222; [c] यं.

## प्रथमं दण्डपारुष्यम्

भस्मादीनां[1a] प्रक्षिपणं[b] ताडनं च करादिना ।
प्रथमं दण्डपारुष्यं [c]दमः कार्योऽत्र माषिकः ॥ ६

एष[2] दण्डः समेषूक्तः परस्त्रीष्वधिकेषु च ।
द्विगुणस्त्रिगुणो ज्ञेयः [d]प्राधान्यापेक्षया बुधैः ॥ ७

उद्यतेऽश्मशिलाकाष्ठे[3e] कर्तव्यः प्रथमो दमः ।
परस्परं[4] हस्तपादे [f]दशविंशतिकस्तथा ॥ ८

## मध्यमम्

मध्यमः[5] शस्त्रसन्धाने[g] संयोज्यः [h]क्षुब्धयोर्द्वयोः ।
कार्यः [i]कृतानुरूपस्तु लग्ने घाते दमो बुधैः ॥ ९

[1] या. अप., p. 813; स्मृ. कल्प., p. 90; [b] क्षेपणं, स्मृ. च., III, p. 762; वि. र., p. 261; [b] क्षेपणं, वि. चि., p. 112; [b] क्षेपणं, स. वि., p. 481; [a] दिना; [b] क्षेपणं द. वि., p. 251; [b] क्षेपणं; [c] दण्डः कर्षोऽत्र, वि. से., p. 215; [b] क्षेपणं च.

[2] या. अप., p. 813; स्मृ. कल्प., p. 90; स्मृ. च., III, p. 762; वि. र., p. 261; वि. चि., p. 112; स. वि., p. 481; द. वि., p. 251; वि. से., p. 215; [d] प्रधाना.

[3] वि. चि., p. 113; स्मृ. कल्प., p. 90; [e] काष्ठैः पूर्वार्धं परं, वि. र., p. 263; वी. मि., p. 473; पूर्वार्धं परं, द. वि., p. 250; स्मृ. कल्पतरुवत्पाठः; वि. से., p. 216.

[4] स्मृ. कल्प; [f] पञ्चविंशति.

[5] या. अप., p. 814; स्मृ. कल्प., p. 90; [g] शस्त्र; [h] क्रुद्धयोः; [i] क्षता, वि. र., p. 264; [g] शस्त्र; [i] क्षता, वि. चि., p. 114; [i] क्षता, वी. मि., p. 474; [g] शस्त्रसंपाते (द. वि., p. 255; [i] क्षतानुरूपं तु, वि. से., p. 218; [i] क्षता, उत्तरार्धं परम्).

उत्तमम्

इष्टकोपलकाष्ठैश्च[1 a,b,c,d] ताडने तु [e]द्विमाषिकः ।
द्विगुणः[f] शोणितोद्भेदे दण्डः कार्यो मनीषिभिः ॥ १०

त्वग्भेदे[2] प्रथमो दण्डो मांसभेदे तु मध्यमः ।

उत्तमम्

उत्तमस्त्वस्थिभेदे[g,h] स्याद्घातेन[i] तु प्रमापणम् ॥ ११

कर्णनासाकरच्छेदे[3] दन्तभङ्गेऽस्थिभेदने[j,k] ।
कर्तव्यो मध्यमो दण्डो द्विगुणः [l]पतितेषु तु ॥ १२

कर्णौष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य[4] च ।
छेदने चोत्तमो दण्डो भेदने मध्यमो गुरुः ॥ १३

दण्डस्त्वभिहितायैव[5] दण्डपारुष्यकल्पितः ।
हृते तद्द्विगुणं चान्यद्राजदण्डस्ततोऽधिकः ॥ १४

[1] या. अप., p. 814; स्मृ. कल्प., p. 90; स्मृ. च., III, p. 762; [f] कार्यः कृतानुरूपस्तु लग्ने घाते दमो बुधैः । वि. र., p. 264; व्य. नि., p. 363; वि. चि., p. 115; [c] काष्ठाद्यैः, स. वि., p. 481; [b] काफलकाद्यैश्च; [e] षकः; [f] कार्यः कृतानुरूपैस्तु लग्ने घाते दमो बुधैः । वी. मि., p. 474; [a] इष्टकोपलकाष्ठेन; [e] षकः, द. वि., p. 255; व्य. मा., p. 240; [d] तु.

[2] या. अप., p. 815; स्मृ. कल्प., p. 90; [g] च; [i] तु घातने च, व्य. नि., p. 363; [i] तु, वि. चि., p. 115; [g] च; [i] तु घातके तु, द. वि., p. 256; [h] भङ्गे स्याद्घातने, व्य. मा., p. 241; वि. से., p. 218; [h] भेदेन, अख., p. 7.

[3] द. वि., p. 256; स्मृ, कल्प., p. 90; व्य. नि., p. 363; [k] अङ्ग; [l] पातिते सति, वि. चि., p. 115; [j] दन्तभेदेऽङ्घ्रि, वि. से., p. 219; वि. चिवत्पाठः; स्मृ. कल्प., p. 90; भेदे अंघ्रिभेदने.

[4] या. अप., p. 815.

[5] या. बा., p. 278.

अङ्गावभेदने[1a] चैव पीडने छेदने तथा ।
समुत्थानव्ययं[b] दाप्यः [c]कलहापहृतं [d]च यत् ॥ १५

विविक्ते[2] ताडितो यस्तु [e]हतो दृश्येत वा भवेत् ।
हन्ता [f]तदनुमानेन विज्ञेयः शपथेन वा ॥ १६

अन्तर्वेश्मन्यरण्ये[3] वा निशायां यत्र ताडितः ।
शोणितं तत्र दृश्येत न पृच्छेत्तत्र साक्षिणः ॥ १७

कश्चित्कृत्वाऽऽत्मनश्चिह्नं[4] द्वेषात्परमभिद्रवेत् ।
हेत्वर्थमतिसामर्थ्यैस्तत्र[g] युक्तं परीक्षणम् ॥ १८

आक्रुष्टस्तु[5h] समाक्रोशंस्ताडितः प्रतिताडयन् ।
हत्वाऽपराधिनं[i, j] चैव [k]नापराधी भवेन्नरः ॥ १९

[1] या. अप., p. 816 ; स्मृ. च., III, p. 91 ; [a] पीडने चैव भेदने ; [c] य कृतं, स्मृ. च., III, p. 765 ; [a] पीडने, वि. र., p. 270 ; [a] पीडने चैव छेदने भेदने ; [d] तथा, परा. मा., p. 420 ; [a] पीडने, वि. चि., p. 118 ; [a] पीडने चैव भेदने, वी. मि., p. 477 ; [a] पीडने चैव भेदने ; [b] तत्तद्व्ययं वा दाप्यः स्यात् कलहापहृतं, वि. से., p. 221 ; वि. र. वत्पाठः.

[2] व्य. मा., p. 245 ; स्मृ. कल्प., p. 92 ; [f] तदा, वि. र., p. 273 ; [e] हेतिर्दृश्यो न, अख., p. 9 ; [e] मृतः.

[3] वि. र., p. 273.

[4] वी. मि., p. 481 ; स्मृ. कल्प., p. 92 ; [g] गति.

[5] परा. मा., p. 412 ; स्मृ. कल्प., p. 92 ; [h] आक्रुष्टस्तु यदा ; [j] आततायिनं, या. अप., p. 1043 ; [h] आक्रुष्टस्तु ; [i] विनाशार्थिनमायान्तं घातयन्नापराध्नुयात्, वि. र., p. 276 ; [h] आक्रुष्टस्तु ; [j] आततायिनं, व्य. नि., pp. 364 and 382 ; [j] आततायिनं, वि. चि., p. 120 ; द. वि., p. 233 ; तमवत्पाठः ; व्य. त., p. 201 ; स्मृ. कल्पवत्पाठः ; वी. मि., p. 472 ; [h] आक्रुष्टस्तु समाक्रोशं ताडितः प्रतिदापयन् । द. वि., pp. 215 and 233 ; आक्रुष्टस्तु समाक्रोशन् नापराधी भवेन्नरः इति, p. 215 ; तमपुटे, p. 233 ; तमपुटे तु, वि. र. वत्पाठः, व्य. म., p. 140 ; प्रा. म. च ; [k] नाततायी भवेन्नरः ; वि. से., pp. 99 and 222 ; व्य. त. वत्, प्रा. म. वच्च यथाक्रमं पाठः, अख., p. 9 ; द. वि., p. 233 ; तमवत्पाठः, व्य. मा., p. 246 ; द. वि वत्पाठः.

प्रातिलोम्यास्तथा[1a] चान्त्याः पुरुषाणां मलाः स्मृताः ।
ब्राह्मणातिक्रमे वध्या न दातव्या [b]धनं क्वचित् ॥ २०

श्रान्तान्[2] क्षुधार्तान्[c] तृषितानकाले [d]वाहयेत्तु यः ।
स गोघ्नो निष्कृतिं कार्यो दाप्यो [e]वाऽप्यथवा दमम् ॥ २१

समुत्थानव्ययं[3] दाप्यः कलहाय कृतं च यत् ।
येनाङ्गेन[4] द्विजातीनां शूद्रः प्रहरते रुषा ।
छेत्तव्यं तदृवेत्तस्य मनुना समुदाहृतम् ॥ २२

[1] स्मृ. कल्प., p. 92; वि. र., p. 277; [a] प्रतिलोमाः; [b] दमं.

[2] स्मृ. कल्प., p. 92; द. वि., p. 318; [c] तृषार्तान् क्षुधितान्; [d] वाहयेत; [e] वा प्रथमं, वि. र., p. 280; [e] वा प्रथमं वि. से., p. 301; [e] वा मध्यमं.

[3] स. वि., p. 484.

[4] स्मृ. च., p. 763.

# २२

## ॥ स्तेयम् ॥

प्रकाशाश्चाप्रकाशाश्च[1] तस्करा[a] द्विविधा स्मृताः ।
प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते [b]सहस्रधा ॥ १

प्रकाशाप्रकाशतस्कराः

नैगमा[2] वैद्यकितवाः [c]सभ्योत्कोचकवञ्चकाः ।
दैवोत्पातविदो भद्राः शिल्पज्ञाः [d]प्रतिरूपकाः ॥ २
अक्रियाकारिणश्चैव[3] मध्यस्थाः कूटसाक्षिणः ।
प्रकाशतस्करा ह्येते तथा कुहकजीविनः ॥ ३
सन्धिच्छिदः[4] पान्थमुषो[e] द्विचतुष्पदहारिणः[f] ।
उत्क्षेपकाः सस्यहराः ज्ञेयाः प्रच्छन्नतस्कराः ॥ ४

[1] परा. मा., p. 437; स्मृ. कल्प., p. 94; स्मृ. चं., III, p. 735; वि. र., p. 289; [a] द्विविधास्तस्करा मताः; [b] सहस्रशः, स. वि., p. 460; वी. मि., p. 491; वि. से., p. 227; [a] द्विविधास्तस्कराः; [b] सहस्रशः.

[2] परा. मा., p. 438; स्मृ. कल्प., p. 94; [c] सद्यो, स्मृ. च., III, p. 736; वि. र., p. 289; वी. मि., p. 491; द. वि., p. 116; [c] सभ्या उत्कोचवञ्चकाः; [d] रूपिकाः, वि. से., p. 227.

[3] परा. मा., p. 438; स्मृ. कल्प., p. 94; स्मृ. च., III, p. 736; वि. र., p. 289; वी. मि., p. 491; द. वि., p. 117; वि. से., p. 228.

[4] परा. मा., p. 438; स्मृ. कल्प., p. 94; वि. र., p. 292; [e] प्रान्तमुषः, व्य. नि., p. 369; [f] चतुष्पाद, द. वि., p. 121.

## तेषां दण्डः

**संसर्गचिह्नरूपैश्च[1 a] विज्ञाता राजपूरुषैः ।**
**प्रदाप्यापहृतं[b] दण्ड्या[c] दमैः शास्त्रप्रचोदितैः ॥ ५**

**उत्क्षेपकस्तु[2 d] सन्दंशैर्भेत्तव्यो राजपूरुषैः ।**
**धान्यहर्ता दशगुणं दाप्यः स्याद्द्विगुणं दमम् ॥ ६**

**एकस्मिन्[3] यत्र निधनं प्रापिते दुष्टचारिणि ।**
**बहूनां भवति क्षेमः तस्य पुण्यप्रदो वधः ॥ ७**

**तथा[4] पान्थमुषो वृक्षे [e]गले बध्वाऽवलम्बयेत् ॥ ८**

**अङ्गुलीग्रन्थिभेदस्य[f] छेदयेत्प्रथमे ग्रहे ।**
**द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥ ९**

**अज्ञातौषधिमन्त्रस्तु[5 g,h] यश्च [i]व्याधेरतत्ववित् ।**
**रोगिभ्योऽर्थं[6 j,k] समादत्ते स दण्ड्यश्चोरवद्भिषक् ॥ १०**

[1] परा. मा., p. 439; स्मृ. कल्प., p. 94; [a] चिह्नालापैश्च। [c] शास्याः, स्मृ. च., III, p. 737; [a] चिह्नलोप्त्रैश्च विज्ञातो; [b] प्योपहृतं शास्यो, वि. र., p. 293; [a] चिह्नलोप्त्रैश्च; [c] शास्याः, व्य. नि., p. 370; [a] चिह्नलोप्त्रैश्च, बिज्ञेयो; [b] प्योपहृतं राज्ञा, वि. चि., p. 123; वि. र. वत्पाठः, द. वि., p. 80; [a] लोप्त्रचिह्नैश्च; [c] शास्या, वि. से., p. 229; वि. र-वत्पाठः.

[2] परा. मा., p. 440; स्मृ. च., III, p. 738; [d] कस्य सन्दंशः छेत्तव्यः.

[3] स्मृ. च., III, p. 738.

[4] व्य. म., p. 144; स्मृ. च., III, p. 738; द्वितीयेति न दृश्यते, स. वि., p. 461; [e] गलम्; [f] प्रथमे ग्रन्थिभेदानामङ्गुल्यङ्गुष्ठयोर्वधः; द्वितीयेत्यादि न दृश्यते.

[5] परा. मा., p. 439; स्मृ. कल्प., p. 96; या. अप., p. 824; [g] अजानन्नौषधं तन्त्रं; [i] अतन्त्रवित्, वि. र., p. 306; [h] औषध, वी. मि., p. 492; व्य. मा., p. 254; [h] औषध.

[6] परा. मा., p. 439; स्मृ. कल्प., p. 96; या. अप., p. 824; [j] रागिभ्योऽर्थमुपादत्ते स दण्ड्यश्चौरवत्, वि. र., p. 306; वी. मि., p. 492; व्य. मा., p. 254; [k] द्रव्यमादत्ते.

ग्लहः[1] प्रकाशः कर्तव्यो निर्वास्याः कूटदेविनः ॥ ११

कूटाक्षदेविनः[2] क्षुद्रा [a]राजभार्याहराश्च ये ।
गणका[b] वञ्चकाश्चैव दण्ड्यास्ते कितवा स्मृताः ॥ १२

प्रच्छन्नदोषव्यामिश्रं[3 c, d, e] पुनः संस्कृतविक्रयी ।
पण्ये[f] तद्द्विगुणं दाप्यो [g]वणिग्दण्डं च तत्समम् ॥ १३

अन्यायवादिनः[4] सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते ॥ १४

ज्योतिर्ज्ञानं[5] तथोत्पातमविदित्वा तु ये नृणाम् ।
श्रावयन्त्यर्थलोभेन [h]विनेयास्ते प्रयत्नतः ॥ १५

दण्डाजिनादिभिर्युक्तमात्मानं[6 i, j] दर्शयन्ति ये ।
हिंसन्तश्छद्मना[k] नृणां[l] वध्यास्ते राजपूरुषैः ॥ १६

[1] वि. र., pp. 307 and 616; स्मृ. कल्प., p. 96.

[2] परा. मा., p. 439; स्मृ. कल्प., p. 96; [a] भाव्य; [b] गणानां, वि. र., pp. 616 and 308; [a] भाग; [b] गणना इति; [a] द्रव्य; [b] गणानां इति च यथाक्रमं पाठः, वी. मि., p. 492; [a] भाव्य, द. वि., p. 108; वि. र., p. 616; पुटवत्पाठः, वि. से., p. 290; [a] भाग; [b] सगणो वञ्चकश्चैव.

[3] या. अप., p. 825; वि. र., p. 297; [f] पण्यं तु, परा. मा., p. 439; वि. चि., p. 126; [d] दोषं; [f] पण्यं, वी. मि., p. 492; [c] प्राच्छाद्य दोषं व्यामिश्र्य पुनः संस्कृत्य विक्रयी; [f] पण्यं, द. वि., p. 100; [f] पण्यं च, व्य. म., p. 142; [g] दत्तं, वि. से., p. 231; [e] मिश्रपुनः; [f] पण्यं; स्मृ. कल्प., p. 96; [f] पण्यं.

[4] स्मृ, कल्प., p. 96.

[5] परा. मा., p. 439; स्मृ. कल्प., p. 96; [h] तु, वि. र., p. 308; [h] तेऽपि, ज्यो. त., p. 711; [h] तेऽपि, वी. मि., p. 493; द. वि., p. 112; वि. से., p. 232; [h] तेऽपि.

[6] परा. मा., p. 439; स्मृ. कल्प., p. 96; [j] दिना; [k] हिंसन्ति, स्मृ. च., III, p. 756; [j] दिना; [k] हिंसन्ति; [l] शून्ये, वि. र., p. 308; [j] दिना, वि. चि., p. 131; [i] दण्डादियुक्तमात्मानं दर्शयन्ति मृषा तु ये; [l] नृन्ये, वी. मि., p. 493; [k] हिंसन्ति, द. वि., pp. 115 and 117; [j] दिना; [k] हिंसन्ति; [l] चार्थं.

अल्पमूल्यं[1][a] तु संस्कृत्य नयन्ति बहुमूल्यताम् ।
स्त्रीबालकान् वञ्चयन्ति [b,c]दण्ड्यास्तेऽर्थानुरूपतः ॥ १७

हेममुक्ताप्रवालाद्यं[2][d] कृत्रिमं[e] कुर्वते तु ये ।
क्रेत्रे[f] मूल्यं प्रदाप्यास्ते [g]राज्ञा [h]तद्विगुणं दमम् ॥ १८

मध्यस्था[3] वञ्चयन्त्येकं स्नेहलोभादिना [i]यदा ।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणं दमम् ॥ १९

मन्त्रौषधिबलात्किञ्चित्सम्भ्रान्तिं[4][j] दर्शयन्ति ये ।
मूलकर्म च कुर्वन्ति निर्वास्यास्ते महीभुजा ॥ २०

सन्धिच्छेदो[5][k] हृतं [l]त्याज्याः [m,n]शूलमारोपयेत्ततः ।
तथा [o]पान्थमुषो वृक्षे [p]गले बद्ध्वाऽवलम्बयेत् ॥ २१

[1] या. अप., p. 826; स्मृ. कल्प., p. 96; वि. र., p. 310; [c] अर्थानुसारतः (परा. मा., p. 439; व्य. नि., p. 376; वि. र वत्पाठः) वि. चि., p. 132; [a] स्वल्प; [b] दण्ड्या अर्था, वी. मि., p. 493; द. वि., p. 101; व्य. मा., p. 256; वि. र वत्पाठः, वि. से., p. 234; [b] दण्ड्या अर्था.

[2] या. अप., p. 826; स्मृ. कल्प., p. 96; वि. र., p. 310; [e] कुर्वते कृत्रिमं, परा. मा., p. 440; व्य. नि., p. 376; [f] ते तन्मूल्यं प्रदाप्यास्तु, वि. चि., p. 133; [e] कुर्वते कृत्रिमं; [h] च द्विगुणं, वी. मि., p. 493; [d] रत्नप्रवाळाद्यान् कृत्रिमान्; [f] क्रेतुः, वि. से., p. 234; [e] कुर्वते कृत्रिमं; [g] राज्ञे च.

[3] परा. मा., p. 440; स्मृ. कल्प., p. 97; वि. र., p. 314; द. वि., p. 106; [i] तथा.

[4] स्मृ. च., p. 758; स्मृ. कल्प., p. 97; वि. र., p. 315; [i] यावन्ति वञ्चयन्ति, स. वि., p. 475; [j] संभ्रान्तिं जनयन्ति.

[5] या अप., p. 845; स्मृ. कल्प., p. 97; [n] त्तु तम्, वि. र., p. 317; [m] येत्, परा. मा., p. 440; [k] छेदकृतो ज्ञात्वा शूलमाग्राहयेत्प्रभुः; [p] गलं बध्वाऽवलम्बयेत्, वि. चि., p. 134; [k] छिदोऽसकृध्येतान्; [m] येत्, वी. मि., p. 494; [k] छेदकृतो ज्ञात्वा शूलमाग्राहयेत्प्रभुः; [o] मुखं वृक्षं; [m] येत्, द. वि., p. 124; [l] दाप्याः; [m] येत्, वि. से., p. 235; [k] छिदोऽसकृध्येतान् शूलमारोपते ततः; [m] येत्.

मनुष्यहारिणो[1] राज्ञा [a]दग्धव्यास्ते [b]कटाग्निना ।
गोहर्तुर्नासिकां[2 c] छिन्द्याद्बध्वा[d] वाम्भसि[e] मज्जयेत् ॥ २२

धान्यं[3] दशभ्यः कुम्भेभ्यो [f]हरणेऽभ्यधिकं वधः ।
शेषेष्वेकादशगुणं[g] दाप्यस्तस्य च तद्धनम् ॥ २३

धान्यहारी[4 h] दशगुणं दाप्यस्तद्द्विगुणं दमम् ॥ २४

तृणं[5] वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।
अनापृच्छ्य तु गृह्णानो हस्तच्छेदनमर्हति ॥ २५

वृत्तस्वाध्यायवान्[6 i] स्तेयी [j]बन्धने क्लिश्यते चिरम् ।
स्वामिने[7] तद्धनं दाप्यः प्रायश्चित्तं [k]न कार्यते ॥ २६

[1] परा. मा., p. 440 ; स्मृ. कल्प., p. 97 ; [a] तु, वि. र., p. 317 ; पूर्वार्धं परम् । वि. चि., p. 134 ; [a] तु ; [b] स्त्रीहर्ता लोहशयने दग्धव्यो वै कटाग्निना, द. वि., p. 125 ; पूर्वार्धं परम्, वि. से., p. 236 ; वि. चि. वत्पाठः.

[2] व्य. म., p. 144 ; स्मृ. कल्प., p. 97 ; [e] च, स्मृ. च., III, p. 739 ; [d] छित्वा बध्वा वांभसि, स. वि., p. 462 ; वी. मि., p. 494 ; स्मृ. चवत्पाठः, द. वि., p. 131 ; [c] गोहर्ता नासिकां छित्वा ; [e] च, व्य. मा., p. 260 ; [c] गोहर्तृन्नासिकां छित्वा ; [e] च.

[3] व्य. मा., p. 260 ; वि. चि., p. 137 ; [f] हरतोऽपि ; [g] अप्येकादश.

[4] द. वि., p. 134 ; वि. र., p. 322 ; [h] धान्यहारा ; स्मृ. कल्प., p. 99.

[5] द. वि., p. 142 ; स्मृ. कल्प., p. 99 ; वि. र., p. 329 ; वि. चि., p. 142.

[6] या. अप., p. 843 ; स्मृ. कल्प., p. 99 ; वि. र., p. 331 ; [j] नात् क्लि, वि. चि., p. 143 ; [j] नात् क्लि, द, वि., p. 67 ; व्य. मा., p. 262 ; वि. से., p. 245 ; [i] व्रत ; [j] नात् क्लि.

[7] या. अप., p. 843 ; स्मृ. कल्प., p. 99 ; [k] च, वि. र., p. 331 ; [k] तु कारयेत्, वि. चि., p. 143 ; [k] स कार्यते, द. वि., p. 67 ; [k] च ; व्य. मा., p. 262 ; [k] च, वि. से., p. 245.

## २३

## ॥ साहसम् ॥

स्तेनानामेतदाख्यातं[1] सर्वेषां दण्डनिग्रहम् ।
साहसस्याऽधुना सम्यक् श्रूयतां वधशासनम् ॥ १

मनुष्यमारणं[2] चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं* चैव साहसं [a]तु चतुर्विधम् ॥ २

हीनमध्योत्तमत्वेन[3] त्रिविधं तत्प्रकीर्तितम् ।
द्रव्यापेक्षा दमास्तत्र प्रथमोत्तममध्यमाः ॥ ३

आततायिद्विजाग्र्याणां[4] धर्मयुद्धेन हिंसनम् ।
इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ ४

क्षेत्रोपकरणं[5] सेतुं[b] मूलपुष्पफलानि[c] च ।
विनाशयन् हरन् दण्ड्यः [d]शतोद्यमनुरूपतः ॥ ५

पशुवस्त्रान्नपानानि[6] गृहोपकरणं तथा ।
हिंसयंश्चौरवद्दाप्यो[e] द्विशतोद्यं[f] दमं तथा ॥ ६

[1] व्य. नि., p. 380.

[2] स्मृ. च., III, pp. 11 and 722; [a] पञ्चधा स्मृतम् इति p. 11 तमे पुटे पाठः, व्य. सा., p. 267; * उत्तमं; [a] स्यात्, स. वि., p. 452; वी. मि., p. 498; [a] स्यात्, व्य. म., p. 145.

[3] स्मृ. कल्प., p. 102.

[4] व्य. म., p. 148.

[5] या. अप., p. 820; स्मृ. कल्प., p. 102; [c] पुष्पमूल; [d] शताद्य, स्मृ. च., III, p. 734; वि. र., p. 350; स्मृ. कल्पवत्पाठः, द. वि., p. 141; व्य. म., p. 148; [b] चैव पुष्पमूल.

[6] या. अप., p. 820; स्मृ. कल्प., p. 102; [e] चोरयन् दाप्यो द्विशताद्यं स्मृ. च., III, p. 734; [e] चोरयन् दाप्यो द्विशताद्यं दमस्तथा, वि. र., p. 350; [f] द्विशताद्यं, द. वि., p. 141; [f] द्विशतान्तं, व्य. म., p. 148; [e] चोरयन् शास्यः.

स्त्रीपुंसौ[1][a] हेमरत्नानि देवविप्रधनं तथा ।
कौशेयं[b] चोत्तमद्रव्यमेषां मूल्यसमो दमः ॥ ७

द्विगुणो[2][c] वा कल्पनीयः पुरुषापेक्षया नृपैः ।
हन्ता[d] वा घातनीयः स्यात्प्रसङ्गविनिवृत्तये ॥ ८

साहसं[3] पञ्चधा प्रोक्तं वधस्तत्राधिकः स्मृतः ।
तत्कारिणो नार्थदमैः शास्या वध्याः प्रयत्नतः ॥ ९

प्रकाशघातका[4][e] ये तु तथा [f]चोपांशुघातकाः ।
ज्ञात्वा[g] सम्यग्धनं [h]हृत्वा हन्तव्या विविधैर्वधैः ॥ १०

साहसिकाः दण्ड्याः

मित्रप्राप्त्यर्थलाभे[5][i] वा राज्ञा लोकहितैषिणा ।
न मोक्तव्याः [j]साहसिकाः [k]सर्वलोकभयावहाः ॥ ११

लोभाद्भयाद्वा[6] यो राजा न [l]हन्त्यन्यायकारिणः ।
तस्य प्रक्षुभ्यते राष्ट्रं राज्याच्च परिहीयते ॥ १२

[1] या. अप., p. 820; स्मृ. कल्प., p. 102; वि. र., p. 150; द. वि., p. 141; व्य. म., p. 148; [b] यौषेयं; [a] स्त्रीपुंसोः.

[2] या. अप., p. 820; स्मृ. कल्प., p. 102; स्मृ. च., III, p. 734; वि. र., p. 350; [c] गुणः कल्पनीयश्च; [d] हर्ता, द. वि., pp. 141, 295; [d] हर्ता इति उत्तरार्धमात्रपात्रश्च p. 295 तमपुटे, व्य. म., p. 148.

[3] द. वि., p. 61; स्मृ. कल्प., p. 104; वि. र., p. 371.

[4] या. अप., p. 851; स्मृ. कल्प., p. 104; [h] हित्वा, स्मृ. च., III, p. 723; [e] वधकाराश्च, वि. र., p. 371; [e] वधका ये च; [g] राज्ञा; [h] हित्वा, परा. मा., p. 854; [e] वधका, स. वि., p. 458; [e] वधकार्येषु; [f] कान्, वी. मि., p. 501; व्य. म., p. 146.

[5] या. अप., p. 851; स्मृ. कल्प., p. 104; [i] लोभैर्वा; [j] प्रयत्नेन सर्वभूत, वि. र., p. 371; [i] लोभैर्वा; [k] भूत, द. वि., p. 62; व्य. मा., p. 276; वि. र. वत्पाठः.

[6] या. अप., p. 851; स्मृ. कल्प., p. 104; [l] हन्यात्पाप, वि. र., p. 372; स्मृ. कल्पवत्पाठः.

बन्धाग्निविषशस्त्रेण[1] परान्यस्तु प्रमापयेत् ।
क्रोधादिना निमित्तेन नरः साहसिकस्तु सः ॥ १३

## सम्भूयप्रहरणनिर्णयः

एकस्य[2a] बहवो यत्र प्रहरन्ति रुषान्विताः ।
मर्मप्रहारदो[b] यस्तु[c] घातकः स उदाहृतः ॥ १४
मर्मघाती[3d] तु यस्तेषां यथोक्तं[e, f] दापयेद्दमम् ।
आरम्भकृत्सहायश्च [g]तथा मार्गानुदेशकः ।
आश्रयः[4] शस्त्रदाता च भक्तदाता विकर्मिणाम् ॥ १५
युद्धोपदेशकश्चैव[5] तद्विनाशप्रदर्शकः ।
उपेक्षी कार्ययुक्तश्च दोषवक्ताऽनुमोदकः ॥ १६

## आततायिवधः

नाततायिवधे[6] हन्ता[h] किल्बिषं प्राप्नुयात्कचित् ।
विनाशार्थिनमायान्तं[i] घातयन्नापराध्नुयात् ॥ १७

[1] वि. र. p. 372 ; स्मृ. कल्प., p. 104.

[2] या. अप., p. 851 ; स्मृ. कल्प., p. 105 ; [c] च, वि. र., p. 373 ; [b] दोषस्तु घातकस्य, वि. चि., p. 165 ; [c] च, वी. मि., p. 501 ; द. वि., p. 74 ; व्य. मा., p. 277 ; [a] एकं च ; [b] को, वि. से., p. 258 ; वि. र वत्पाठः.

[3] स्मृ. च., III, p. 723 ; स्मृ. कल्प., p. 105 ; [g] दोष-भाजस्तदर्धतः ; वि. र., p. 373 ; [f] धनं ; [g] दोषभाजस्तदर्धतः, वि. चि., p. 166 ; स्मृ. कल्पवत्पाठः, वी. मि., p. 502 ; [e] प्रापयेद् ; [g] दोषभागी तदर्धतः, द. वि., p. 74 ; [d] घातिनमेतेषां ; [g] दोषभाजस्तदर्धतः ; व्य. मा., p. 277 ; स्मृ. कल्पवत्पाठः.

[4] स्मृ. च., III, p. 723.

[5] स्मृ. च., III, p. 724.

[6] स्मृ. च., III, p. 729 ; प्रा. वि., p. 59 ; व्य. नि., p. 382 ; [i] विनाशनार्थं, वी. मि., p. 24 ; [h] दोषात्, प्रा. म., p. 5 ; वि. से., p. 99.

आततायिनमुत्कृष्टं[1] वृत्तस्वाध्यायसंयुतम् ।
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत् ॥ १८

स्वाध्यायिनं[2] कुले जातं यो हन्यादाततायिनम् ।
अहत्वा[a] भ्रूणहा स स्यान्न हत्वा भ्रूणहा भवेत् ॥ १९

साम्प्रतं[3] साहसं[b] स्तेयं श्रूयतां क्रोधलोभजम् ।

## घातकादर्शने निर्णयः

क्षतस्याल्पमहत्वं[4] च मर्मस्थानं च यत्नतः ।
सामर्थ्यं चानुबन्धं च ज्ञात्वा चिह्नैः [c]प्रसादयेत् ॥ २०

हतस्तु[5 d, e] दृश्यते यत्र [f]घातकश्च न दृश्यते ।
पूर्ववैरानुसारेण[g, h] ज्ञातव्यः स महीभुजा ॥ २१

समघाती[6] तु यस्तेषां यथोक्तं दापयेद्दमम् ।
आरम्भकृत्सहायश्च दोषभाजस्तदर्धतः ॥ २२

[1] व्य. म., p. 147; स्मृ. च., III, p. 730; प्रा. वि., p. 61; व्य. नि., p. 383; वी. मि., p. 25; नी. म., p. 100; व्य. मा., p. 280.

[2] नी. म., p. 99; स्मृ. च., III, p. 730; [a] न तेन भ्रूणहा भवति मन्युस्तं मन्युमृच्छति.

[3] स्मृ. च., III, p. 733; स. वि., p. 458; [b] साहसस्तेयं, वी. मि., p. 503.

[4] या. अप., p. 851; स्मृ. कल्प., p. 105; [c] प्रसाधयेत्, वि. र., p. 374; स्मृ. कल्पवत्पाठः, वि. चि., p. 166; [c] प्रकाशयेत्, वी. मि., p. 502; स्मृ. कल्पवत्पाठः, वि. से., p. 258; [c] प्रवासयेत्.

[5] या. अप., p. 852; स्मृ. कल्प., p. 105; [e] सं; [f] तु; [h] मानेन, स्मृ. च., III, p. 722; वि. र., p. 377; स्मृ. कल्पवत्पाठः, परा. मा., p. 453; [e] सं, स. वि., p. 458; [d] घातः सं; [f] तु; [g] पूर्वमेवानुमानेन, (द. वि., p. 70; व्य. मा., p. 278; स्मृ. कल्पवत्पाठः), वि. से., p. 260; परा. मा वत्पाठः.

[6] या. अप., p. 851.

प्रतिवेश्यानुवेश्यौ[1 a] च तस्य मित्रारिबान्धवाः ।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ॥ २३

विज्ञेयोऽसाधुसंसर्गाच्चिह्नोढेन[2 b, c] वा[d] नरैः ।
एषोदिता[3 e] घातकानां तस्कराणां च भावना ॥ २४

गृहीतः[4] शङ्कया यस्तु न तत्कार्यं प्रपद्यते ।
शपथेन *विशोद्धव्यः सर्ववादेष्वयं विधिः ॥ २५

दिव्यैर्विशुद्धो[5] मेध्यः[f] स्यादशुद्धो वधमर्हति ।
निग्रहानुग्रहै[g] राज्ञः कीर्तिर्धर्मश्च वर्धते ॥ २६

[1] या. अप., p. 852; स्मृ. कल्प., p. 105; वि. र., p. 377; [a] आति, परा. मा., p. 853; द. वि., p. 70; व्य. मा., p. 278; वि. से., p. 260.

[2] या. अप., p. 852; स्मृ. कल्प., p. 105; [c] भेदेन, स्मृ. च., III, p. 722; चिह्नाढ्यैश्च लक्षणैः, वि. र., p. 377; [d] मानवैः, परा. मा., p. 853; स्मृ. च. वत्पाठः, स. वि., p. 458; [b] विज्ञेयः साधुसंसर्गैः चिह्नैरोष्ठेन वा पुनः, वि. से., p. 260; वि. र वत्पाठः.

[3] परा. मा., p. 853; स्मृ. च., III, p. 722; वि. र., p. 377; स. वि., p. 458; [e] एषोऽपि घातकानां तु तस्कराणां भवेदिति, व्य. मा., p. 278; वि. से., p. 260.

[4] वि. र., p. 377; स्मृ. कल्प., p. 105; व्य. मा., p. 278; * विशोध्यस्तु, वि. से., p. 260.

[5] या. अप., p. 852; स्मृ. कल्प., p. 105; [f] मोच्यः; [g] ग्रहाद्राज्ञः, स्मृ. च., III, p. 722; [f] मान्यः पूर्वार्धमात्रश्च, (वि. र., p. 378; वि. चि., p. 169; वि. से., p. 261; स्मृ. कल्पतरुवत्पाठः).

## २४

## ॥ स्त्रीसंग्रहणम् ॥

पारुष्यं[1] द्विविधं प्रोक्तं साहसं च [a]द्विलक्षणम् ।
पापमूलं सङ्ग्रहणं [b]त्रिप्रकारं निबोधत ॥ १

बलोपाधिकृते[2 c,d] द्वे तु तृतीयमनुरागजम् ।
तत्पुनस्त्रिविधं प्रोक्तं प्रथमं [e]मध्यमोत्तमम् ॥ २

अनिच्छन्त्या[3 f] यत्क्रियते [g]सुप्तोन्मत्तप्रमत्तया ।
प्रलपन्त्या[h, i] वा[j] रहसि[k] बलात्कारकृतं तु तत् ॥ ३

छद्मना[4] गृहमानीय [l]दत्वा [m]वा [n]मद्यकार्मणम् ।
संयोगः क्रियते [o]यस्यास्तदुपाधिकृतं विदुः ॥ ४

[1] या. अप., p. 854; स्मृ. कल्प., p. 105; स्मृ. च., III, p. 16; उत्तरार्धं परं, वि. र., p. 378; [a] त्रिल; [b] त्रिराकारं, परा. मा., p. 462; उत्तरार्धं परम्, व्य. नि., p. 281; उत्तरार्धं परं, वी. मि., p. 504; उत्तरार्धं परं, द. वि., p. 154; व्य. मा., p. 281; उत्तरार्धं परम्.

[2] या. अप., p. 854; स्मृ. कल्प., p. 105; [e] मुत्तमं, स्मृ. च., III, p. 16; उत्तरार्धं परं, वि. र., p. 379; स्मृ. कल्पवत्पाठः, (परा. मा., p. 462; व्य. नि., p. 281; उत्तरार्धं परं,) वी. मि., p. 504; [c] पधि, द. वि., p. 154; [d] हृते; व्य. मा., p. 281; उत्तरार्धं परं.

[3] या. अप., p. 854; स्मृ. कल्प., p. 105; स्मृ. च., III, pp. 16 and 740; [k] रहश्च इति च पाठः, वि. र., p. 379; परा. मा., p. 462; [f] अनिच्छया लपकृतं मत्तोन्मत्तकृतं तथा; [h] प्रलये यत्तु; व्य. नि., p. 281; [i] अपि रहसि, वी. मि., p. 504; [g] मत्तोन्मत्त, द. वि., p. 155; [j] रहसि वा, व्य. मा., p. 281; [g] मत्तोन्मत्त; [j] तु.

[4] या. अप., p. 854; स्मृ. कल्प., p. 105; स्मृ. च., III, p. 16; वि. र., p. 379; [l] गत्वा वा तत्स्वसद्मनि, परा. मा., p. 462; [n] कारणं; [o] यत्तु, व्य. नि., p. 281; [m] च मदकारणं, वी. मि., p. 504; [m] स्वं मद्यकारणं; [o] यत्र तत्तूपधिकृतं विदुः, द. वि., p. 155; [n] कार्मिणम्, व्य. मा., p. 281; [m] वा मदकारणम्; [o] यत्स्यात्तत्तूपधिकृतं.

अन्योन्यचक्षूरागेण[1a] दूतीसम्प्रेषणेन [b]च ।
कृतं [c]रूपार्थलोभेन ज्ञेयं तदनुरागजम् ॥ ५

तत्पुनस्त्रिविधं[2] प्रोक्तं प्रथमं मध्यमोत्तमम् ।
अपाङ्गप्रेक्षणं[3d] हास्यं दूतीसम्प्रेषणं तथा ।
स्पर्शो भूषणवस्त्राणां [e]सङ्ग्रहः प्रथमः स्मृतः ॥ ६

प्रेषणं[4] गन्धमाल्यानां धूपमध्वन्नवाससाम् ।
सम्भाषणं च रहसि मध्यमं सङ्ग्रहं विदुः ॥ ७

एकशय्यासनं[5f] क्रीडा [g]चुम्बनालिङ्गनं तथा ।
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ॥ ८

प्रेषणं[6] गन्धमाल्यानां धूपभूषणवाससाम् ।
प्रलोभनं[7] चान्नपानैर्मध्यमः सङ्ग्रहः स्मृतः ॥ ९

[1] या. अप., p. 854; स्मृ. कल्प., p. 105; स्मृ. च., III, p. 16; वि. र., p. 379; [c] वलोकेन, परा. मा., p. 462; व्य. नि., p. 281; वी. मि., p. 504; [a] न्यं च; [b] वा, द. वि., p. 155; [b] वा, व्य. मा., p. 282; [b] वा.

[2] परा. मा., p. 462; स्मृ. च., III, p. 17; व्य. नि., p. 281; वी. मि., p. 505.

[3] द. वि., p. 155; स्मृ. कल्प., p. 105; स्मृ. च., III, p. 17; [e] प्रथमः संग्रहः (वि. र., p. 379; परा. मा., p. 462; व्य. नि., p. 281; वि. चि., p. 170; वी. मि., p. 505; [d] कटाक्षावेक्षणं, व्य. मा., p. 282; वि. से., p. 261; सर्वत्रापि स्मृ. चवत्पाठः.

[4] परा. मा., p. 462; स्मृ. कल्प., p. 105; स्मृ. च., III, p. 17; व्य. मा., p. 282.

[5] द. वि., p. 156; स्मृ. कल्प; [f] शय्याशनक्रीडा, स्मृ. च., III, p. 17; वि. र., p. 380; [g] ने तथा, परा. मा., p. 463; व्य. नि., p. 281; वि. चि., p. 171; वी. मि., p. 505; व्य. मा., p. 282; वि. से., p. 263; [f] त्र शयनं.

[6] वि. चि., p. 171.

[7] वि. चि., p. 171.

प्रेषणं[1] गन्धमाल्यानां [a]फलमद्यान्नवाससाम् ।
सम्भाषणं च रहसि मध्यमं सङ्ग्रहं विदुः ॥ १०

त्रयाणामपि[2] चैतेषां प्रथमो *मध्य उत्तमः ।
विनयः कल्पनीयः स्यादधिको [b]द्रविणाधिके ॥ ११

परपत्न्या[3] तु पुरुषः सम्भाषां योजयन् रहः ।
पूर्वमाक्षारितो दोषैः प्राप्नुयात्पूर्वसाहसम् ॥ १२

सहमायः[4 c] कामयते धनं तस्याखिलं हरेत् ।
उत्कृत्य [d]लिङ्गवृषणौ भ्रामयेद्गर्दभेन तु ॥ १३

छद्मना[5 e] कामयेद्यस्तु [f] तस्य [g]सर्वहरो दमः ।
अङ्कयित्वा[6] भगाङ्केन पुरान्निर्वासयेत्ततः ॥ १४

[1] वि. चि., p. 171; वि. र., p. 380; व्य. नि., p. 281; वी. मि., p. 505; [a] धूपान्न, वि. से., p. 262; वी. मि. वत्पाठः.

[2] या. अप., p. 855; स्मृ. कल्प., p. 106; वि. र., p. 384; वि. चि., p. 172; वी. मि., p. 506; द. वि., p. 156; व्य. म., p. 150; [b] अपि बलाद्रहः, व्य. मा., p. 282; * मध्यमोत्तमौ.

[3] वि. से., p. 264.

[4] या. अप., p. 857; वि. र., p. 388; [c] सहसा कामयेद्यस्तु, (परा. मा., p. 466; स. वि., p. 467; वि. रवत्पाठः) वी. मि., p. 503; वि. रवत्पाठः, द. वि., p. 165; [c] सहसा कामयेद्यस्तु; [d] लिङ्गं वृषणौ, व्य. म., p. 148; वि. रवत्पाठः, वि. से., p. 266; [c] सहसा कारयेद्यस्तु.

[5] या. अप., p. 857; स्मृ. कल्प., p. 107; स्मृ. च., III, p. 743; वि. र., p. 389; वि. चि., p. 182; [e] सहसा, वी. मि., p. 506; [e] दण्डाना, द. वि., p. 165; [g] स्युर्बहवो दमाः, व्य. म., p. 149; व्य. मा., p. 284; वि. से., p. 266; [f] कारयेद्यस्तु.

[6] या. अप., p. 857; स्मृ कल्प., p. 107; स्मृ. च., III, p. 743; वि. र., p. 389; वि. चि., p. 182; वी. मि., p. 506; द. वि., p. 165; व्य. म., p. 149; व्य. मा., p. 284; वि. से., p. 266.

दमो[1a] नेयः सभायां [b]यो [c,d]हीनायामधिकस्ततः ।
पुंसः कार्योऽधिकायां तु [e]गमने [f]सम्प्रमापणम् ॥ १५

गृहमागत्य[2] या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्धदमः स्मृतः ॥ १६

छिन्ननासौष्ठकर्णानां[3 g, h] परिभ्राम्याप्सु मज्जयेत् ।
खादयेद्वा सारमेयैः संस्थाने बहुसंस्थिते ॥ १७

अनिच्छन्ती[4 i] तु या [j]भुक्ता गुप्तां तां वासयेद्गृहे ।
मलिनाङ्गीमधः शय्यां पिण्डमात्रोपजीविनीम् ॥ १८

कारयेन्निष्कृतिं[5] कृच्छ्रं पराकं वा [k]समे गताम् ।
हीनवर्णोपभुक्ता या त्याज्या [l]वध्याऽथवा भवेत् ॥ १९

[1] व्य. म. p. 149; स्मृ. कल्प., p. 107; [a] दमोऽन्तिमः; [b] तु; [d] स्य तु, स्मृ. च., III, p. 743; [c] अधिकः; [f] स प्र, वि. र., p. 389; [a] दमोऽन्तिमः; [b] तु; [c] अधिकः, वि. चि., p. 183; [a] दमोऽन्तिमः; [b] तु; [c] अधिकः स्मृतः; [e] नं, वी. मि., p. 504; [f] सप्र, द. वि., p. 165; वि. रवत्पाठः, वि. से., p. 267; वि. रवत्पाठः.

[2] स्मृ. च., III, p. 250; स्मृ. कल्प., p. 108; व्य. नि., p. 285; वि. चि., p. 186; वी. मि., p. 513; द. वि., p. 164; वि. से., p. 273.

[3] द. वि., p. 164; स्मृ. कल्प., p. 108; व्य. नि., p. 285; [h] कर्णौ तु, वि. चि., p. 186; [g] भिन्न; [h] कर्णां तां परिभ्रम्य, या. वी., p. 737; [h] कर्णां तां परिभ्रम्याशु मज्जयेत्, वि. से., p. 273; [h] कर्णां तां.

[4] स्मृ. च., III, pp. 743 and 744; स्मृ. कल्प., p. 108; [i] च्छती, वि. र., p. 400; व्य. नि., p. 285; स्मृ. कल्पवत्पाठः, व्य. मा., p. 287; [j] गुप्ता भुक्ता, वि. से., p. 273; प. वि., p. 307.

[5] स्मृ. च., III, pp. 743 and 744; स्मृ. कल्प., p. 108; वि. र., p. 400; [l] च. सा, व्य. नि., p. 285; [k] समागतां, वि. से., p. 273; प. वि., p. 307; पूर्वार्धं परम्.

२५

## ॥ स्त्रीपुंसवर्तनोपायः ॥

एतत्सङ्ग्रहणस्योक्तं[1] विधानं [a]सङ्ग्रहस्तथा ।
स्त्रीपुंसवर्तनोपायः श्रूयतां गदतो मम ॥ १

सूक्ष्मेभ्योऽपि[2] प्रसङ्गेभ्यो निवार्या स्त्री स्वबन्धुभिः ।
श्वश्र्वादिभिर्गुरुस्त्रीभिः[b] पालनीया दिवानिशम् ॥ २

स्वकामे[3] वर्तमाना तु या स्नेहान्न निवारिता ।
अवश्या सा भवेत्पश्चाद्यथा व्याधिरुपेक्षिता ॥ ३

पितृपतिपुत्राणां धर्माः

अप्रयच्छन्[4] पिता काले पतिश्चानुपयन्नृतौ ।
पुत्रश्चाभक्तदो मातुः [c]गर्ह्यो दण्ड्यश्च धर्मतः ॥ ४

यत्र[5] स्त्रियोऽभिपूज्यन्ते रमन्ते तत्र देवताः ।
सम्पदश्च प्रजाः शुद्धाः क्रिया च सफला भवेत् ॥ ५

[1] वि. र., p. 409; स्मृ. कल्प., p. 109; [a] विनयं तथा.

[2] परा. मा., p. 474; स्मृ. कल्प., p. 110; स्मृ. च., III, p. 563; वि. र., p. 411; व्य. सा., p. 204; वी. मि., p. 515; [b] पालनीया गुरुस्त्रीभिः, व्य. मा., p. 291; पूर्वार्धं परम् । मि. बा. आ., p. 216; [b] कुलस्त्रीभिः.

[3] व्य. मा., p. 291.

[4] वि. चि., p. 189; स्मृ. कल्प., p. 110; [c] गर्ह्या दण्ड्याश्च, वि. र., p. 412; स्मृ. कल्पवत्पाठः, व्य. नि., p. 278A; मि. बा. आ., p. 216; अरक्षको मातुर्गर्ह्या दण्ड्याश्च, वि. से., p. 282; [c] कुर्याद्दण्डं च.

[5] व्य. नि., p. 278A.

आयव्ययेऽन्नसंस्कारे[1a] गृहोपस्कारक्षणे[b] ।
शौचेऽग्निकार्ये[c] संयोज्याः स्त्रीणां शुद्धिरियं स्मृता ॥ ६

भर्त्रा[2] पत्नी समभ्यर्च्या वस्त्रालङ्कारभोजनैः ।
उत्सवे तु पितृभ्रातृश्वशुराद्यैश्च बन्धुभिः ॥ ७

पतिं[3] या नातिचरति मनोवाक्कायसंयुता ।
सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ॥ ८

## स्त्रीदूषणानि

भर्त्रा[4d] पित्रा सुतैर्न स्त्री वियुक्ताऽन्यगृहे वसेत् ।
असत्सङ्ग* विशेषेण गर्ह्यतामेति सा ध्रुवम् ॥ ९

पूर्वोत्थानं[5] गुरुष्वर्वाक्* भोजनव्यञ्जनक्रिया[e] ।
जघन्यासनशायित्वं कर्म स्त्रीणामुदाहृतम् ॥ १०

पानाटनदिवास्वप्नमक्रिया[6] दूषणं स्त्रियाः ॥ ११

आर्तार्ते[7] मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥ १२

[1] स्मृ. च., III, p. 566; स्मृ. कल्प., p. 111; [b] स्कर; [c] शौचाग्निकार्ये संयोज्या रक्षा स्त्रीणां वि. र., p. 416; स्मृ. कल्पवत्पाठः, वी. मि., p. 519; अथ संस्कारे; [c] शौचाग्निकार्यसंयोज्याः, मि. बा. आ., p. 216; [a] अर्थसंस्कारे; [c, b] स्मृ. कल्पवत्पाठः, वि. से., p. 282; स्मृ. कल्पवत्पाठः.

[2] स्मृ. च., III, p. 571; व्य. नि., p. 278A.

[3] व्य. नि., p. 278A.

[4] स्मृ. च., III, p. 585; स्मृ. कल्प., p. 113; वि. र., p. 427; [d] पित्रा भर्त्रा, मि. बा. आ., p. 216; [d] पित्रा भर्त्रा; * सङ्गविशेषेण.

[5] स्मृ. च., III, p. 588; स्मृ. कल्प., p. 113; [e] भोजनाभ्यञ्जनक्रिया, वि. र., p. 428; मि. बा. आ., p. 216; * अर्चा.

[6] स्मृ. कल्प., p. 113; (वि. र., p. 431; वि. से., p. 287; पूर्वार्धं परम्), मि. बा. आ., p. 216; यान, पूर्वार्धं परम्.

[7] या. अप., p. 109; स्मृ. कल्प., p. 115; वि. र., p. 436; मि. बा. आ., p. 218.

प्रसाधनं[1] नृत्तगीतसमाजोत्सवदर्शनम्[a] ।
मांसमद्याभियोगं[b] च न कुर्यात्प्रोषिते [c]प्रभौ ॥ १३

शरीरार्धं[2] स्मृता [d]जाया पुण्यापुण्यफले समा ।
अन्वारूढा [e]जीवती(न्ती) [f]च साध्वी भर्तुर्हिताय सा ॥ १४

व्रतोपवासनिरता[3] ब्रह्मचर्ये[g] व्यवस्थिता ।
धर्मदानपरा[h] नित्यमपुत्राऽपि दिवं व्रजेत् ॥ १५

## नियोग-निषेधः

उक्त्वा[4][i] नियोगो मनुना निषिद्धः स्वयमेव तु ।
युगह्रासादशक्योऽयं कर्तुं [j]सर्वैर्विधानतः ॥ १६

तपोज्ञानसमायुक्ताः[5] कृते[k] त्रेतायुगे नराः ।
द्वापरे च कलौ नृणां [l]शक्तिहानिर्विनिर्मिता ॥ १७

[1] स्मृ. च., III, p. 593; स्मृ. कल्प., p. 115; वि. र., p. 439; [a] नृत्य; [b] मांसं मद्य; [c] पतौ, व्य. नि., p. 279A; मि. बा. आ., p. 231; [c] पतौ.

[2] या. अप., p. 111; स्मृ. कल्प., p. 116; [d] नारी; [f] वा, वि. र., p. 442; [e] जीववती साध्वी भर्तृहिताय सा; मि. बा. आ., p. 234.

[3] स्मृ. च., III, pp. 595 and 677; वि. र., p. 443; [h] दमदानरता, वि. से., p. 288; [g] चर्यव्यवस्थिता; [h] दमदानवती, मि. बा. आ., p. 234.

[4] या. अप., p. 97; म. कु., p. 351; [i] उक्तः; [j] अन्यैः, म. रा., p. 1150; म. कु. वत्पाठः, म. न., p. 1150; [i] नियोगमुक्त्वा, वि. र., p. 449; [j] मर्त्यैः, परा. मा., p. 520; म. कुवत्पाठः, वै. दी. व., p. 175; [i] उक्तः, प. वि., p. 38.

[5] या. अप., p. 97; म. कु., p. 351; [k] कृतत्रेता; [l] हि, (म. रा., p. 1150; म. न., p. 1150; परा. मा., p. 520; म. कुवत्पाठः) वै. दी. व., p. 175; [l] हि, प. वि., p. 38.

२६

## ॥ दायभागः ॥

ददाति[1] दीयते पित्रा पुत्रेभ्यः स्वस्य यद्धनम् ।
तद्दायं ... ... ... ... ... ॥ १

एकां[2] स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे ।
बह्व्यः समांशतो देया दासानामप्ययं विधिः ॥ २

उद्धृत्य[3] कूपवाप्यम्भस्त्वनुसारेण गृह्यते ।
तथा[a] भागानुसारेण सेतुः [b]क्षेत्रं विभज्यते ॥ ३

युक्त्या[4] विभजनीयं तदन्यथानर्थकं भवेत् ॥ ४

[1] स. वि., p. 344.

[2] या. अप., p. 726; स्मृ. कल्प., p. 124; स्मृ. च., III, p. 644; वि. र., p. 506; परा. मा., pp. 563 and 565; दा. भा., p. 9; पूर्वार्धं परम्; दा. त., p. 164; पूर्वार्धं परं, व्य. सा., p. 234; व्य. म., p. 81.

[3] या. अप., p. 726; स्मृ. कल्प., p. 124; [a] यथा; [b] क्षेत्रे, स्मृ. च., III, p. 644; पूर्वार्धं परं, वि. र., p. 506; [a] यथा, परा. मा., p. 564; पूर्वार्धं परम्, दा. भा., p. 9; पूर्वार्धं परम्, व्य. म., p. 81.

[4] स्मृ. च., III, p. 644; दा. भा. p. 9.

विभक्तलक्षणम्

एकपाकेन[1] वसतां पितृदेवद्विजार्चनम् ।
एकं[2] भवेद्विभक्तानां तदेव *स्याद्गृहे गृहे ॥ ५

साक्षित्वं[3] प्रतिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युः नाविभक्ताः परस्परम् ॥ ६

येषामेताः[4] क्रिया लोके प्रवर्तन्ते स्वरिक्थिषु ।
विभक्तानवगच्छेयुः लेख्यमप्यन्तरेण तान् ॥ ७

कुलानुबन्धव्याघातहोढं[5] साहससाधकम् ।
स्वस्वभोगस्थावरस्य विभागस्य पृथग्धनम् ॥ ८

विभागकालः

पित्रोरभावे[6] भ्रातॄण [a] विभागः सम्प्रदर्शितः ।
मातुर्निवृत्ते रजसि [b]प्रत्तासु भगिनीषु च ॥ ९

[1] या. अप., p. 719; म. कु., p. 358; म. रा., p. 1170; गौ. मि., p. 221; स्मृ. कल्प., p. 118; स्मृ. च., III, pp. 607 and 718; वि. र., p. 459; परा. मा., p. 488; व्य. नि., p. 291; प्रा. त., p. 532; व्य. सा., p. 217; स. वि., pp. 352 and 442; श्रा. क्रि. कौ., p. 452; शु. कौ., p. 89; नि. सि., III, p. 64; वी. मि., p. 714; वी. मि. श्रा., p. 342; मि. बा. प्रा., p. 30.

[2] या. अप., p. 719; म. कु., p. 358; म. रा., p. 1170; गौ. मि., p. 221; स्मृ. कल्प., p. 118; स्मृ. च., III, pp. 607 and 718; वि. र., p. 459; परा. मा., p. 488; व्य. नि., p. 291; प्रा. त., p. 532; व्य. सा., p. 217; * तु; स. वि., pp. 352 and 442; श्रा. क्रि. कौ., p. 452; शु. कौ., p. 89; नि. सि., III, p. 64; वी. मि., p. 714; वी. मि. श्रा., p. 342; मि. बा. प्रा., p. 30.

[3] स्मृ. च., III, p. 718.

[4] स्मृ. च., III, p. 718.

[5] परा. मा., p. 570; स्मृ. च., III, p. 719.

[6] व्य. म., p. 59; [b] जीवतोरपि शस्यते, स्मृ. कल्प., p. 119; (वि. र., p. 462; व्य. नि., p. 289; दा. भा., pp. 26 and 60; दा. त., p. 167; स्मृ. कल्पवत् पाठः); [a] पुत्राणां इति, दा. भा, 60 तमपुटे; [b] वी. मि., p. 552; जीवतरोऽपि ह्रास्यते (Chowkhamba ed., p. 433; शस्यते).

## विभागक्रमः

क्रमागते[1] गृहक्षेत्रे पिता पुत्राः समांशिनः ।
पैतृके न[2] विभागार्हाः सुताः पितुरनिच्छया ॥ १०

समवर्णासु[3] ये जाताः सर्वे पुत्रा द्विजन्मनाम् ।
उद्धारं ज्यायसे दत्त्वा भजेरन्नितरे समम् ॥ ११

वयोविद्यातपोभिश्च[4] द्व्यंशं हि लभते धनम् ।
यथा यथा विभागाप्तं धनं यागार्थतामियात् ।
तथा तथा विधातव्यं विद्वद्भिर्भागगौरवम् ॥ १२

तत्पुत्रा[5] विषमसमाः पितृभागहराः स्मृताः ॥ १३

द्रव्ये[6*] पितामहोपात्ते[a] स्थावरे[b] जङ्गमेऽपि[c] वा ।
सममंशित्वमाख्यातं[d] पितुः पुत्रस्य [e]चैव हि ॥ १४

समन्यूनाधिका[7] भागाः पित्रा येषां प्रकल्पिताः ।
तथैव ते पालनीया [f]विनेयास्ते स्युरन्यथा ॥ १५

[1] व्य. म., p. 59.

[2] व्य. म., p. 59; या. मि., p. 77, Gharpure's edition.

[3] दा. भा., p. 42.

[4] व्य. सा., p. 218.

[5] परा. मा., p. 495; स्मृ. च., III, p. 646; व्य. सा., p. 221.

[6] या. अप., p. 728; स्मृ. कल्प., p. 119; स्मृ. च., III, p. 649; वि. र., p. 461; [c] तथा, व्य. नि., p. 292; [b] जङ्गमे स्थावरे तथा; [e] चोभयोः, दा. भा., p. 45; [c] तथा, व्य. सा., p. 222; * तथा, स. वि., p. 374; [b] जङ्गमे स्थावरे, वी. मि., pp. 568 and 569; [a] पैतामहोपात्ते इति 569 तमपुटे, या. वी., p. 584; [c] तथा; [d] सममंशं स, मि. वा., p. 487; स. विवत्पाठः.

[7] या. अप., pp. 717 and 720; स्मृ. कल्प., p. 119; स्मृ. च., III, p. 610; परा. मा., p. 492; व्य. नि., p. 295; वि. चि., p. 201; [f] पतिताः, दा. भा., p. 53; [f] विनेयाः, व्य. मा., p. 299.

जीवद्विभागे[1] तु पिता गृह्णीतांशद्वयं [a]स्वकम् ॥ १६

द्विप्रकारो[2] विभागस्तु दायादानां [b]प्रकीर्तितः ।
वयोज्येष्ठक्रमेणैकः[3] समा[c] परांशकल्पना ॥ १७

समवेतैस्तु[4 d] यत्प्राप्तं सर्वे तत्र समांशिनः ।
तत्पुत्रा विषमसमाः [e]पितृभागहराः स्मृताः ॥ १८

पितृरिक्थहराः[5] पुत्राः सर्व एव [f]समांशिनः ।
विद्याकर्मरतस्तेषामधिकं[g] लब्धुमर्हति ॥ १९

विद्याविज्ञानशौर्यार्थे[6 h] ज्ञानदानक्रियासु च ।
यस्येह प्रथिता कीर्तिः पितरस्तेन पुत्रिणः ॥ २०

जन्मविद्यागुणैर्ज्येष्ठो[7] द्व्यंशं [i]दायादवाप्नुयात् ।
समांशभागिनस्त्वन्ये[j] तेषां [k]पितृसमस्तु सः ॥ २१

[1] स्मृ. च., III, p. 611; वि. र., p. 465; व्य. नि., p. 296; वी. मि., p. 566; [a] स्वयं, वि. से., p. 73; [a] स्वयं.

[2] दा. भा., p. 55; दा. त., p. 194; [b] प्रदर्शितः, वि. से., p. 77.

[3] दा. भा., p. 55; दा. त., p. 194; [c] परा समांश, वि. से., p. 77; दा. त. वत्पाठः.

[4] या. अप., p. 727; स्मृ. कल्प., p. 121; [d] सममेतैस्तु, वि. र., p. 481; [e] समभाग, व्य. नि., p. 304.

[5] स्मृ. च., III, pp. 616 and 618; स्मृ. कल्प., p. 121; [f] यथांशतः; [g] युतस्त्वेषां, वि. र., p. 484; [f] यथांशतः; [g] युतः, वि. च., p. 73; [g] युतस्त्वेषां, वि. चि., p. 201; वि. रवत्पाठः, दा. त., p. 164; [f] समांशतः; [g] युतस्त्वेषाम्.

[6] वि. र., p. 484; स्मृ. कल्प., p. 121; [h] शौर्यार्थज्ञान, दा. त., p. 164; [h] शौर्यार्थज्ञानदानक्रयेषु च.

[7] वि. चि., p. 201; स्मृ. कल्प., p. 120; [i] दायम, स्मृ. च., III, p. 620; [i] दायम, पूर्वार्धं परं, वि. च., p. 74; [i] दायम; [j] भाजस्त्वन्ये च; [k] समो हि सः, परा. मा., p. 490; पूर्वार्धं परम्, दा. भा., p. 42; वि. च. वत्पाठः, वी. मि., p. 569.

तदभावे[1] तु जननी [a]तनयांशसमांशिनी ।
समांशा[2b] मातरस्तेषां[c] तुरीयांशा[d] च कन्यका ॥ २२

कन्यकानां[3] त्वदत्तानां चतुर्थो भाग इष्यते ।
पुत्राणां च त्रयो भागाः साम्यं त्वल्पधने स्मृतम् ॥ २३

यद्येकजाता[4*] बहवः समाना जातिसंख्यया ।
स्वधनैस्तैर्विभक्तव्यं[e] मातृभागेन धर्मतः ॥ २४

सवर्णा[5] भिन्नसंख्या ये पुंभागस्तेषु शस्यते ।
पितामह्यस्तु[6] सर्वास्ता मातृतुल्याः प्रकीर्तिताः ॥ २५

असंस्कृतास्तु[7] यास्तत्र पैतृकादेव ता धनात् ।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥ २६

असंस्कृता[8 f] भ्रातरस्तु ये स्युस्तत्र यवीयसः ।
संस्कार्याः[9] पूर्वजैस्ते वै पैतृकान्मध्यगाद्धनात् ॥ २७

[1] वि. चि., p. 204; स्मृ. कल्प., p. 121; वि. र., p. 484; व्य. नि., p. 297; वी. मि., p. 580; [a] तनया वा, या. वी., p. 577; वि. से., p. 79.

[2] वि. चि., p. 204; स्मृ. कल्प., p. 121; वि. र., p. 484; व्य. नि., p. 298; दा. भा., p. 69; [c] लेषां; [d] शाश्च कन्यकाः, वी. मि., p. 582; [b] तनया, या. वी., p. 577; वि. से., p. 79; [d] शास्तु कन्यकाः.

[3] वी. मि., p. 582.

[4] परा. मा., p. 503; स्मृ. कल्प., p. 120; [e] सापत्न्यात्, वि. र., p. 475; [e] सापत्न्यास्तैः, दा. भा., p. 60; व्य. सा., p. 225; * यथा, वी. मि., p. 576; व्य. म., p. 63; स्मृ. कल्पवत्पाठः, मि. वा., p. 462; [e] सापत्नास्तैः.

[5] व्य. म., p. 63; स्मृ. कल्प., p. 120; व्य. सा., p. 225.

[6] वि. से., p. 79.

[7] व्य. म., p. 65.

[8] स्मृ. च., III, p. 627; वि. र., p. 492; व्य. म., p. 65; [f] संस्कार्यास्ते.

[9] स्मृ. च., III, p. 627; वि. र., p. 492.

दद्याद्धनं[1] च पर्याप्तं क्षेत्रांशं वा यदिच्छति ॥ २८

ऊढया[2] कन्यया वाऽपि भर्तुः पितृगृहेऽपि वा ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥ २९

सौदायिकं[3] धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् ॥ ३०

विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ।
स्त्रीधनं[4] स्यादपत्यानां[a] दुहिता च तदंशिनी ।
अप्रत्ता[b] चेत्समूढा तु [c]लभते [d]मानमात्रकम् ॥ ३१

मातुः[5][e] स्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ।
श्वश्रूः[6] पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः ॥ ३२

[1] परा. मा., p. 549.

[2] परा. मा., p. 549.

[3] परा. मा., p. 549.

[4] या. अप., p. 721 ; म. कु., p. 374 ; म. रा., p. 1214 ; म. न., p. 1214 ; गौ. मि., p. 227 ; [d] स न मातृकं, स्मृ. कल्प., p. 125 ; [b] अपुत्रा आ. ध. व्या., p. 234 ; [a] तत्, स्मृ. च., III, p. 661 ; [d] सा न मातृकं, वि. र., p. 516 ; वि. च., p. 85 ; परा. मा., p. 552 ; [a] तत् ; [d] सा न मातृकं, व्य. नि., p. 337 ; वि. चि., p. 221 ; दा. भा., p. 79 ; [a] तत् ; [c] न लभेन्मातृकं धनम्, वी. मि., p. 695 ; या. वी., p. 615 ; मि. बा., p. 747 ; [b] अपुत्रा, वि. से., p. 56.

[5] या. अप., p. 754 ; स्मृ. कल्प., p. 126 ; [e] मातृष्वसा, (स्मृ. च., III, p. 666 ; वि. र., p. 522 ; वि. च., p. 89 ; स्मृ. कल्प. वत्पाठः), परा. मा., p. 555 ; व्य. नि., p. 346 ; स्मृ. कल्पवत्पाठः, दा. भा., p. 96 ; दा. त., p. 187 ; शु. त., p. 391 ; स. वि., p. 386 ; वी. मि., p. 704 ; व्य. म., p. 101 ; स्मृ. कल्पवत्पाठः, मि. बा., p. 767 ; वि. से., pp. 59 and 61 ; अख. p. 84 ; स्मृ. कल्पवत्पाठः.

[6] या. अप., p. 754 ; स्मृ. कल्प., p. 126 ; स्मृ. च., III, p. 666 ; वि. र., p. 522 ; वि. च., p. 89 ; परा. मा., p. 555 ; व्य. नि., p. 346 ; दा. भा., p. 96 ; दा. त., p. 187 ; शु. त., p. 391 ; स. वि., p. 386 ; वी. मि., p. 704 ; व्य. म., p. 101 ; मि. बा., p. 767 ; वि. से., pp. 59 and 61 ; अख., p. 84.

यदासामौरसो[1a] न [b]स्यात्पुत्रो दौहित्र एव वा ।
तत्सुतो[c] वा[d] धनं तासां [e]स्वस्रीयाद्याः [f]समाप्नुयुः ॥ ३३

## पुत्रलक्षणम्

सवर्णजोऽप्यगुणवान्[2g,h] नार्हः स्यात्पैतृके धने ।
तत्पिण्डदाः[i] श्रोत्रिया ये [j]तेषां [k]तत्तु विधीयते ॥ ३४

उत्तमर्णाधमर्णेभ्यः[3l] पितरं त्रायते सुतः ।
अतस्तु[m] विपरीतेन [n]तेन नास्ति प्रयोजनम् ॥ ३५

तया[4] गवा किं क्रियते या न [o]दोग्ध्री न गर्भिणी ।
कोऽर्थः [p]पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥ ३६

[1] या. अप., p. 754; स्मृ. कल्प., p. 126; [b] सुतो, स्मृ. च., III, p. 666; [c] तत्सुता, वि. र., p. 522; वि. च., p. 89; [b] सुतो, परा. मा., p. 555; व्य. नि., p. 346; [b] सुतो, दा. भा., p. 96; दा. त., p. 187; शु. त., p. 391; स. वि., p. 386; वी. मि., p. 704; व्य. म., p. 101; मि. बा., p. 767; [d] बान्धवास्तासां, वि. से., pp. 59 and 61; [a] एतासां; [f] अवाप्नुयुः, अख., p. 84; [e] स्वस्रीया वा.

[2] व्य. म., p. 103; स्मृ. कल्प., p. 121; [k] अन्वभिधीयते, स्मृ. च., III, p. 630; पूर्वार्धं परं. वि. र., p. 487; [h] र्णाजो; [k] तदभि, व्य. नि., p. 300; [k] तदभि, वि. चि., p. 206; [i] तत्सपिण्डाः; [j] धनं तेषां, दा. भा., p. 100; [k] तदभि, शु. त., p. 325; वी. मि., p. 713; वि. रवत्पाठः, व्य. मा., p. 305; [g] असवर्णासुतो यस्तु; [i] तत्सपिण्डाः; [k] तदभि.

[3] व्य. म., p. 103; स्मृ. कल्प., p. 121; [n] नास्ति तेन, स्मृ. च., III, p. 631; [l] र्णाभ्यां, वि. र., p. 487; [m] तत्; नास्ति तेन, दा. भा., p. 100; [m] तत्, वी. मि., p. 713; वि. र. वत्पाठः, मि. बा., p. 656; [n] नास्ति तेन, व्य. मा., p. 305; [n] नास्ति तेन.

[4] स्मृ. च., III, p. 631; स्मृ. कल्प., p. 121; वि. र., p. 487; [o] धेनुः; [p] तेन तु पुत्रेण, व्य. नि., p. 300; दा. भा., p. 101; [o] धेनुः, वी. मि., p. 713; व्य. मा., p. 305; दा. भावत्पाठः.

शास्त्रशौर्यार्थरहितस्तपोविज्ञानवर्जितः[1 a,b] ।
आचारहीनः[2] पुत्रस्तु [c]मूत्रोच्चारसमः [d]स्मृतः ॥ ३७

## पुत्रविभागः

स्थावरद्विपदं[3] चैव यद्यपि स्वयमार्जितम् ।
असम्भूय सुतान् सर्वान् न दानं न च विक्रयः ॥ ३८

जाता[4] जनिष्यद्गर्भस्थाः पितृस्था ये च मानवाः ।
सर्वे कांक्षन्ति तां [e]वृत्तिमनाच्छेद्यास्ततस्तु सा ॥ ३९

गृहोपस्करवाह्यादि[5] भोज्याभरणकर्मिणः[f] ।
दृश्यमाना[g] विभज्यन्ते गूढे [h]केशो विधीयते ॥ ४०

क्षत्रजास्त्रिद्व्येकभागा[6] विड्जौ तु द्व्येकभागिनौ ॥ ४१

ब्रह्मक्षत्रियविट्छूद्रा[7] विप्रोत्पन्नास्त्वनुक्रमात् ।
चतुस्त्रिद्व्येकभागेन भवेयुस्ते यथाक्रमम् ॥ ४२

शूद्र्यां [8]द्विजातिभिर्जातो न भूमेर्भागमर्हति ।
द्विजातिराप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥ ४३

[1] स्मृ. च., III, p. 631; स्मृ. कल्प., p. 121; [a] द्विर; [b] ज्ञानवि, वि. र., p. 487; [b] ज्ञानवि, व्य. नि., p. 300; [b] ज्ञानवि, दा. भा., p. 101; वी. मि., p. 713; [b] ज्ञानवि, व्य. मा., p. 305.

[2] स्मृ. च., III, p. 631; स्मृ. कल्प., p. 121; वि. र., p. 487; [c] समस्तु सः, व्य. नि., p. 300; दा. भा., p. 101; [d] तु सः, वी. मि., p. 713; व्य. मा., p. 305.

[3] व्य. नि., p. 293.

[4] व्य. नि., p. 294; स्मृ. कल्प., p. 128; [e] छेद्या ततः.

[5] व्य. नि., pp. 306A and 322; [f] दोभ्याह; [g] मानां; [h] कोशो?

[6] व्य. नि., p. 308.

[7] व्य. नि., p. 308; आ. ध. व्या., p. 235.

[8] व्य. नि., p. 310.

तेषां[1] सवर्णा ये पुत्रास्ते तृतीयांशभागिनः ।
हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः ॥ ४४
सर्वे[2] ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः ।
औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न तिष्ठति ॥ ४५
पितामहपितृभ्यां[3] च दत्तं मात्रा च यद्भवेत् ।
तस्य तन्नापहर्तव्यं शौर्यभार्याधनं तथा ॥ ४६
वस्त्रादयोऽविभाज्या[4] यैरुक्तं तैर्न विचारितम् ।
धनं भवेत्समृद्धानां [a]वस्त्रालङ्कारसंश्रितम् ॥ ४७
ऋणमुद्ग्राह्य[5] लेखितम् ... ... ॥ ४८
उक्तप्रकारो[6] विज्ञेयः पत्रारूढऋणे खलु ।
युक्त्या विभजनीयं तदन्यथाऽनर्थकं भवेत् ॥ ४९
मध्यस्थितमनाजीव्यं[7] दातुं नैकस्य शक्यते ।
युक्त्या विभजनीयं तदन्यथाऽनर्थकं भवेत् ॥ ५०
विक्रीय[8] वस्त्राभरणं [b]धनमुद्ग्राह्य लेखितम् ।
कृतान्नं चाकृतान्नेन परिवर्त्य [c]विभज्यते ॥ ५१

[1] व्य. नि., p. 317.

[2] व्य. नि., p. 317.

[3] परा. मा., p. 561 ; स्मृ. च., III, p. 641 ; व्य. नि., p. 320 ; व्य. मा., p. 289.

[4] या. अप., p. 726 ; स्मृ. कल्प., p. 124 ; [a] पत्रा, स्मृ. च., III, p. 644 ; वि. र., p. 505 ; स्मृ. कल्पवत्पाठः, परा. मा., p. 564 ; व्य. म., p. 81.

[5] म. पा., p. 685.

[6] म. पा., p. 686.

[7] या. अप., p. 726 ; वि. र., p. 505 ; परा. मा., p. 564 ; व्य. म., p. 81.

[8] या. अप., p. 726 ; स्मृ. कल्प., p. 124 ; [b] ऋण, म. कु., p. 379 ; म. रा., p. 1228 ; स्मृ. च., III, p. 644 ; वि. र., p. 505 ; म. पा., p. 686 ; [b] ऋणमुद्ग्राह्य ; [c] विभाज्यते, परा. मा., p. 564 ; व्य. म., p. 81 ; सि. बा., p. 477 ; [b] ऋण ; [c] विवर्तयेत्.

योगक्षेमवतो[1] लाभः समत्वेन विभज्यते ।
प्रचारश्च यथांशेन कर्तव्यो [a]रिक्थिभिः सदा ॥ ५२

ब्रह्मदायं[2] गतां भूमिं हरेयो ब्राह्मणीसुतः ।
गृहं[3] द्विजातयः सर्वे तथा क्षेत्रं क्रमागतम् ॥ ५३

पित्रा सह विभक्तानां व्यवस्था

पित्रा[4] सह विभक्ता ये [b]सापत्ना वा सहोदराः ।
जघन्याश्चैव[c] ये तेषां [d]पितृभागहरास्तु ते ॥ ५४

अनीशः[5][e] पूर्वजः [f]पित्र्ये भ्रातृभागे विभक्तजः ॥ ५५

पुत्रैः[6] सह विभक्तेन पित्रा यत्स्वयमार्जितम्
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥ ५६

[1] या. अप., p. 726; स्मृ. कल्प., p. 124; [a] ऋणिभिः, स्मृ. च., III, p. 644; वि. र., p. 506; परा. मा., p. 565; मि. बा., p. 479; पूर्वार्धं परं.

[2] मि. बा., p. 480.

[3] मि. बा., p. 480.

[4] या. अप., p. 729; स्मृ. कल्प., p. 128; [b] सापत्न्या; [c] जघन्यजास्तु, स्मृ. च., III, p. 710; वि. र., p. 538; [c] जघन्यजाश्च, व्य. नि., p. 538; [c] जघन्यजास्तु; [d] दाय, वि. चि., p. 228; वि. रवत्पाठः, दा. भा., p. 130; दा. त., p. 168; वि. रवत्पाठः, या. वी., p. 586; व्य. नि. वत्पाठः, वि. से., p. 75; [b] सापत्न्याः.

[5] स्मृ. च., III, p. 710; स्मृ. कल्प., p. 128; वि. र., p. 538; व्य. नि., p. 303; दा. भा., p. 130; दा. त., p. 168; वी. मि., p. 687; [e] अनीशाः पूर्वजाः पित्रोर्भ्रातुर्भागे विभक्ततः । वि. से., p. 75; [f] पैत्रे पूर्वार्धं परम्.

[6] व्य. म., p. 64; स्मृ. कल्प., p. 128; स्मृ. च., III, p. 710; वि. र., p. 539; वि. चि., p. 229; दा. भा., p. 131; वी. मि., p. 687; या. वी., p. 586; वि. से., pp. 75 and 81.

यथा[1] धने तथर्णे[a] च [b]दानादानक्रयेषु च ।
परस्परमनीशास्ते [c,d]मुक्त्वाऽऽशौचोदकक्रियाम् ॥ ५७

पैतामहं[2] हृतं[e] पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिनाऽवाप्तं[f] तत्र स्वाम्यं पितुः स्मृतम् ॥ ५८

प्रदानं[3] स्वेच्छया [g]कुर्याद्भोगं चैव ततो धनात् ।
तदभावेऽपि[h] तनयाः[i] समांशाः [j]परिकीर्तिताः ॥ ५९

वस्त्रालङ्कारशय्यादि[4]* पितुर्यद्वाहनादिकम्† ।
गन्धमाल्यैः‡ समभ्यर्च्य श्राद्धभोक्त्रे [k]तदर्पयेत् ॥ ६०

पत्यौ[5] जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादाः भजमानाः पतन्ति ते ॥ ६१

[1] व्य. म., p. 64 ; स्मृ. कल्प., p. 128 ; [a] र्णेऽपि ; [b] धान ; स्मृ. च., III, p. 711 ; वि. र., p. 539 ; [a] र्णे वा ; [b] धान ; [d] क्रियाः, वि. चि., p. 229 ; [a] र्णेऽपि ; [b] धान ; [d] क्रियाः, दा. भा., p. 131 ; दा. त., p. 168 ; वि. चि वत्पाठः ; व्य. सा., p. 223 ; [b] धान, या. वी., p. 586 ; [b] धान ; [c] मुक्त्वाऽसौ, मि. बा., p. 493 ; [a] णेऽपि ; [b] धान ; [c] त्यक्त्वा, वि. से., pp. 75 and 81 ; [a] णेऽपि इति पूर्वार्धमात्रः पाठः.

[2] या. अप., p. 728 ; स्मृ. कल्प., p. 119 ; स्मृ. च., III, p. 650 ; वि. र., p. 461 ; [f] नाप्तं च, परा. मा., p. 498 ; व्य. नि., p. 293 ; [e] विना, दा. भा., p. 128 ; व्य. म., p. 59 ; मि. बा., pp. 488 and 489 ; [f] प्राप्तं, वी. मि., p. 687.

[3] स्मृ. च., III, p. 650 ; स्मृ. कल्प., p. 119 ; [h] तु, वि. र., p. 461 ; [h] तु ; [j] सम्प्रकीर्तिताः ; [g] भागं, व्य. नि., p. 293 ; [h] तु ; [i] ये पुत्राः ; [j] सम्प्र ; [g] भागं, दा. भा., p. 129 ; [h] तु, व्य. म., p. 59 ; पूर्वार्धं परम्.

[4] परा. मा., p. 562 ; या. मि., p. 205 ; [k] समर्पयेत्, श्रा. कल्प., p. 56/a ; व्य. सा., p. 232 ; * शय्याद्यं, स. वि., p. 371 ; वी. मि., p. 709 ; वी. सम., p. 201 ; व्य. सा. वत्पाठः, श्रा. चि., p. 147 ; * शय्याद्यं ; † युग्यं ; ‡ पुष्पैः, व्य. म., p. 80 ; मि. बा., p. 466 ; या. मि वत्पाठः, रा. कौ., p. 449 ; [k] निवेदयेत्.

[5] वी. मि., p. 709 ; स. वि., p. 372.

पितृप्रसादाद्भुज्यन्ते[1] वस्त्राण्याभरणानि च ॥ ६२
कृतेऽकृते[2] वा[a] विभागे रिक्थी यत्र [b]प्रवर्तते ।
सामान्यं [c,d]चेद्भावयति तत्र भागहरस्तु सः ॥ ६३
ऋणं[3] लेख्यं[e] गृहं [f]क्षेत्रं यस्य पैतामहं भवेत् ।
चिरकालप्रोषितोऽपि[4 g] भागभागागतस्तु[h] सः ॥ ६४
गोत्रसाधारणं[5] त्यक्त्वा [i]योऽन्यं देशं समाश्रितः ।
अर्धतस्त्वागतस्यांशः[j] प्रदातव्यो न संशयः ॥ ६५
तृतीयः[6] पञ्चमश्चैव[k] सप्तमो [l]योऽपि वा भवेत् ।
जन्मनामपरिज्ञाने लभेतांशं [m]क्रमागते ॥ ६६
यं[7] परम्परया [n]मौलाः [o]समस्ताः स्वामिनं विदुः ।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥ ६७

[1] वी. मि., p. 709.

[2] स्मृ. च., III, p. 713; स्मृ. कल्प., p. 128; [a] विभागे वा रिक्थं, वि. र., p. 540; दा. भा., p. 132; [b] प्रदृश्यते; [d] भवेद्यस्तु, वि. से., p. 81; [c] च भवेद्यत्तु.

[3] स्मृ. च., III, p. 712; स्मृ. कल्प., p. 128; [f] देवं, वि. र., p. 540; व्य. नि., p. 304; दा. भा., p. 132; [e] क्षेत्रं गृहं लेख्यं, स. वि., p. 376; वि. से., p. 81.

[4] स्मृ. च., III, p. 712; स्मृ. कल्प., p. 128; वि. र., p. 540; व्य. नि., p. 304; [h] तत्र भागहरस्तु सः, दा. भा., p. 132; स. वि., p. 376; [g] कालं, वि. से., p. 81.

[5] स्मृ. च., III, p. 712; स्मृ. कल्प., p. 128; [j] तद्वंशस्य, (वि. र., p. 540; दा. भा., p. 133; स्मृ. कल्पवत्पाठः) दा. त., p. 180; [i] योऽन्यदेशं; [j] तद्वंशस्य, स. वि., p. 376; वि. से., p. 81; अख., p. 86; दा. तवत्पाठः.

[6] स्मृ. च., III, p. 713; स्मृ. कल्प., p. 128; [l] वापि यो; [m] क्रमागतं, वि. र., p. 540; व्य. नि., p. 306; [k] मो वापि; [l] वापि यो पूर्वार्धं परं, दा. भा., p. 133; दा. त., p. 180; स्मृ. कल्पवत्पाठः, स. वि., p. 377; वि. से., p. 81; [k] मो वापि; [l] वापि यो.

[7] स्मृ. च., III, p. 713; स्मृ. कल्प., p. 128; वि. र., p. 541; व्य. नि., p. 306; उत्तरार्धं परं, दा. भा., p. 133; दा. त., p. 180; वि. से., p. 82; [o] सामन्ताः, अख., p. 86; [n] मूलाः सामन्ताः.

अविभक्तविभक्तानां[1] कुल्यानां वसतां सह ।
भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः ॥ ६८

## पुत्रभेदाः

अनेकधा[2] कृताः पुत्रा ऋषिभिश्च [a]पुरातनैः ।
न[3] शक्यन्तेऽधुना[b] कर्तुं [c, d]शक्तिहीनैरिदन्तनैः ॥ ६९
एक[4] एवौरसः [e]पित्र्ये धने स्वामी प्रकीर्तितः ।
तत्तुल्यः[f] पुत्रिकापुत्रो भर्तव्यास्त्वपरे [g]स्मृताः ॥ ७०
क्षेत्रजाद्याः[5] सुतास्त्वन्ये[h] पञ्चषट्सप्तभागिनः ॥ ७१
दत्तोऽपविद्धः[6] क्रीतश्च कृतः शौद्रस्तथैव च ।
जातिशुद्धा[i] मध्यमास्ते सर्वे रिक्थसुताः स्मृताः ॥ ७२

[1] वि. से., p. 82.

[2] परा. मा., p. 520; म. कु., p. 351; म. रा., p. 1150; म. न., p. 1150; द. मी., p. 7; [a] ये पुरातनैः, प. वि., p. 39; [a] ये पुरातनैः । न शक्यास्तेऽधुना कर्तुं तपोहीनैरतन्द्रितैः ॥ शु. वि., p. 23.

[3] परा. मा., p. 520; म. कु., p. 351; [d] इदन्तनैः, म. रा., p. 1150; म. न., p. 1150; म. कु. वत्पाठः, द. मी., p. 7; [b] शक्यास्ते; [c] हीनतया नरैः.

[4] गौ. मि., p. 231; स्मृ. कल्प., p. 128; [f] तत्तुल्या पुत्रिका प्रोक्ता, आ. ध. व्या., p. 236; (वि. र., p. 541; व्य. नि., p. 316; स्मृ. कल्पवत्पाठः), वि. चि., p. 233; [e] पुत्रो; [f] तत्तुल्या पुत्रिका प्रोक्ता; [g] सुताः, वी. मि., p. 614; [f] तत्तुल्या पुत्रिका प्रोक्ता; [g] सुताः.

[5] गौ. मि., p. 231; आ. ध. व्या., p. 238; वि. र., p. 545; [h] चान्ये, वी. मि., p. 618; वि. र. वत्पाठः.

[6] वी. मि., p. 621; स्मृ. कल्प., p. 130; [i] शुद्धाः कर्मशुद्धा मध्यमास्ते सुताः प. वि., p. 39; शु. वि., p. 23; स्मृ. कल्पवत्पाठः, वि. र., p. 552; [i] शुद्धाः कर्मशुद्धा मध्यमास्ते सुता मताः.

क्षेत्रजो[1] गर्हितः सद्भिस्तथा पौनर्भवः सुतः ।
कानीनश्च सहोढश्च [a]गूढजः पुत्रिकासुतः ॥ ७३

शूद्रापुत्रः[2] स्वयंदत्तो ये चैते क्रीतकाः स्मृताः ।
सर्वे ते मैत्रिणः प्रोक्ता काण्डपृष्ठा न संशयः ॥ ७४

स्वकुलं[3] पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः ॥ ७५

अग्निं[4] प्रजापतिं चेष्ट्वा क्रियते [b]गौतमोऽवदत् ।
अन्ये त्वाहुरपुत्रस्य चिन्तिता पुत्रिका भवेत् ॥ ७६

पुत्रास्त्रयोदश[5] प्रोक्ता मनुना [c]येन पूर्वशः ।
सन्तानकारणं तेषामौरसः पुत्रिका तथा ॥ ७७

आज्यं[6] विना यथा तैलं सद्भिः [d]प्रतिनिधिः [e]स्मृतम् ।
तथैकादश [f]पुत्रास्तु पुत्रिकौरसयोर्विना ॥ ७८

[1] वै. दी. व., p. 176; स्मृ. कल्प., p. 130; [a] गूढोत्पन्नस्तथैव च, प. वि., p. 39; स्मृ. कल्पवत्पाठः, शु. वि., p. 23; स्मृ. कल्पवत्पाठः वि. र., p. 552; वी. मि., p. 621; स्मृ. कल्पवत्पाठः.

[2] स्मृ. कल्प., p. 130.

[3] स्मृ. कल्प., p. 130.

[4] वि. र., p. 562; व्य. नि., p. 312; [b] गौतमोक्तवत्.

[5] या. अप., p. 735; स्मृ. कल्प., p. 133; [c] येऽनु, श्रा. चि., p. 200; स्मृ. कल्पवत्पाठः, (वि. र., p. 575; व्य. नि., p. 317; द. मी., p. 13; वी. मि., p. 613; स्मृ. कल्पवत्पाठः).

[6] या. अप., p. 735; म. कु., p. 371; [e] स्मृतः, म. रा., p. 1208; [d] निधीकृतं; [f] स्युः, स्मृ. कल्प., p. 133; म. कु. वत्पाठः, वि. र., p. 575; [d] निधीकृतम्, श्रा. चि., p. 200; वि. रवत्पाठः, वी. श्रा., p. 352; व्य. नि., p. 317; म. कुवत्पाठः, श्रा. क्रि. कौ., p. 455; वि. रवत्पाठः, शु. कौ., p. 91; वी. मि., p. 613; म. कुवत्पाठः, मि. बा., pp. 683 and 690; [e] स्मृतः; [f] स्युः इति 683 तमे पुटे, मि. बा. प्रा., p. 31 :— तदेकादश पुत्राः स्युः.

यद्येकजाता[1*] बहवो [†]भ्रातरस्तु सहोदराः ।
एकस्यापि सुते जाते सर्वे ते [a]पुत्रिणः स्मृताः ॥ ७९

बह्वीनामेकपत्नीनामेष[2b] एव विधिः स्मृतः ।
एका चेत्पुत्रिणी [c]तासां सर्वासां पिण्डदस्तु सः ॥ ८०

पुन्नाम्नो[3] नरकात्पुत्रः[d] पितरं त्रायते यतः ।
मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः ॥ ८१

पौत्रोऽथ[4e] पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।
रिक्थे[f] च[g] पिण्डदाने च [h]समौ तौ परिकीर्तितौ ॥ ८२

कामतश्च[5] शूद्रावरोधजस्य भ्रातुरंशं
सम्मानमात्रं प्रेते पितरि दद्युः शुश्रूषुश्चेत् ॥ ८३

[1] वी. मि. सं., p. 214; स्मृ. कल्प., p. 134; वि. र., p. 583; व्य. नि., p. 318; द. मी., p. 14; (श्रा. त., p. 300; शु. त., p. 389; [a] पुत्रिणो मताः), सं. कौ., p. 42; मि. वा., p. 668; नि. व्या., p. 879; * येऽपि; † च; [a] पुत्रिणो मताः.

[2] वी. मि. सं., p. 214; स्मृ. कल्प., p. 134; वि. र., p. 583; व्य. नि., p. 318; [c] तासां, द. मी., p. 14; नि. सि., III, p. 6; सं. कौ., p. 42; मि. वा., p. 669; व्य. मा., p. 319; वै. दी. श्रा., p. 23; [b] एक एव, नि. व्या., p. 879.

[3] वि. र., p. 584; स्मृ. कल्प., p. 134; [d] यस्मात् श्रा. चि., p. 202; शु. त., p. 251; मि. वा., p. 658.

[4] परा. मा. आ., p. 462; स्मृ. कल्प., p. 135; [f] रिक्थपिण्डप्रदानेन समौ सम्परिकीर्तितौ। स्मृ. च., III, p. 7; वि. र., p. 584; स्मृ. कल्पवत्पाठः, मि. वा., p. 658; [g] पिण्डाम्बुदाने च सुतौ सुपरिकल्पितौ, मि. वा. प्रा., p. 42; [e] च, वै. दी. श्रा., p. 18; [e] च; [h] समानौ.

[5] या. बा., p. 250.

अन्नार्थं[1] तण्डुलप्रस्थमपराह्ने तु सेन्धनम् ।
वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः ॥ ८४

विधवाभागः

एतावदेव[2] साध्वीनां चोदितं विधवाधनम् ॥ ८५

वसनस्याशनस्यैव तथैव रजकस्य च ।
धनं[3] व्यपोह्य तच्छिष्टं दायादानां प्रकल्पयेत् ॥ ८६

अपुत्रस्याथ[4] कुलजा पत्नी दुहितरोऽपि वा ।
तदभावे पिता माता भ्राता पुत्राश्च कीर्तिताः ॥ ८७

अपुत्रेण[5] सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्धर्मसङ्कीर्तनस्य[a] च ॥ ८८

काङ्क्षन्ति[6] पितरः पुत्रान् नरकापातभीरवः ।
गयां यास्यति यः कश्चित्सोऽस्मान् सन्तारयिष्यति ॥ ८९

यथा[7] जलं कुप्लवेन तरन् मज्जति मानवः ।
तद्वत्पिता[8b] कुपुत्रेण* तमस्यन्धे निमज्जति ॥ ९०

[1] मि. बा., p. 610; आ. ध. व्या., p. 239.

[2] मि. बा., p. 610; आ. ध. व्या., p. 240.

[3] मि. बा., p. 610.

[4] मि. बा., p. 636.

[5] मि. बा., p. 655; स्मृ. कल्प., p. 135; [a] नाम, गृह. कल्प., p. 88/b.

[6] मि. बा., p. 656; स्मृ. कल्प., p. 135; पूर्वार्धं परम्, गृह. कल्प., p 88/b; पूर्वार्धं परम्.

[7] व्य. मा., p. 320; गृह. कल्प., p. 88/b.

[8] व्य. मा., p. 320; स्मृ. कल्प; [b] तथा पिता कुपुत्रैस्तु, गृह. कल्प., p. 88/b; * कुपुत्रैस्तु.

करिष्यति[1] वृषोत्सर्गमिष्टापूर्तं तथैव च ।
पालयिष्यति वार्धक्ये श्राद्धं दास्यति चान्वहम् ॥ ९१

भार्याभागः

आम्नाये[2] स्मृतितन्त्रे च लोकाचारे च सूरिभिः ।
शरीरार्धं स्मृता [a]भार्या पुण्यापुण्यफले समा ॥ ९२

यस्य[3] नोपरता भार्या देहार्धं तस्य जीवति ।
जीवत्यर्धशरीरेऽर्थं[b,c] कथमन्यः समाप्नुयात् ॥ ९३

सकुल्यैर्विद्यमानस्तु[4d,e] पितृभ्रातृसनाभिभिः[f] ।
असुतस्य[g] प्रमीतस्य [h]पत्नी [i]तद्भागहारिणी ॥ ९४

पूर्वप्रमीताग्निहोत्रं[5 j,k] मृते भर्तरि तद्धनम् ।
विन्देत्पतिव्रता[6] नारी धर्म एष सनातनः ॥ ९५

[1] मि. बा., p. 656.

[2] या. अप., p. 740; म. कु., p. 373; [a] जाया, स्मृ. कल्प., p. 135; म. कुवत्पाठः, वि. र., p. 589; दा. भा., p. 149; प्रा. त., p. 533; म. कुवत्पाठः, स. वि., p. 406; वी. मि., p. 631; म. कुवत्पाठः.

[3] या. अप., p. 740; म. कु., p. 373; स्मृ. कल्प., p. 135; वि. र., p. 589; दा. भा., p. 149; स. वि., p. 406; [c] अपि, वी. मि., p. 631; मि. बा., p. 629; [b] अर्धशरीरे तु.

[4] या. अप., p. 740; म. कु., p. 373; [e] मानैस्तु; [f] मातृ, या. मि., p. 217; [d] कुल्येषु विद्यमानेषु, स्मृ. कल्प., p. 135; [e] मानैस्तु, वि. र., p. 590; म. कुवत्पाठः, परा. मा., p. 523; [d] कुल्येषु विद्यमानेषु; [i] धन; दा. भा., pp. 150 and 170; वि. चि., p. 236; [e] मानैस्तु, व्य. सा., p. 250; [d] कुल्येषु विद्यमानेषु पितृमातृ सनाभिषु । स. वि., p. 406; [d] कुल्येषु विद्यमानेषु; [h] तत्पत्नी भाग, वी. मि., p. 631; [e] मानैस्तु; [f] मातृ; [g] अपुत्रस्य, मि. बा., p. 577; या. मिवत्पाठः.

[5] म. कु., p. 373; स्मृ. कल्प., p. 135; [j] पूर्वं प्रमीताग्नि, या. अप., p. 741; [j] पूर्वं मृताग्न, वि. र., p. 590; स्मृ. कल्पवत्पाठः, दा. भा., p. 150; [j] पूर्वं प्रणीता, वि. चि., p. 236; [k] होत्रमृते.

[6] म. कु., p. 373; स्मृ. कल्प., p. 135; या. अप., p. 741; वि. र., p. 590; दा. भा., p. 150.

पूर्वं[1] मृता हरेदग्निमन्वारूढा हरेदघम् ।
पुत्राभावे[2] तु पत्नी स्यात्पत्न्यभावे तु सोदरः ।
तदभावे तु दायादः पश्चाद्दौहित्रकं धनम् ॥ ९६

जङ्गमं[3] स्थावरं हेम [a]रूप्यधान्यरसाम्बरम् ।
आदाय दापयेच्छ्राद्धं [b]मासषाण्मासिकादिकम् ॥ ९७

पितृव्यगुरुदौहित्रान्[4] स्वसृभर्त्रीयमातुलान्[c] ।
पूजयेत्कव्यपूर्ताभ्यां [d, e]वृद्धानाथातिथीन् स्त्रियः ॥ ९८

यद्विभक्ते[5] धने[f] किञ्चिदाध्यादिविधिसंस्मृतम्[g, h] ।
तज्जाया स्थावरं मुक्त्वा लभेत [i]गतभर्तृका ॥ ९९

वृत्तस्याऽपि[6] कृतेऽप्यंशे न स्त्री स्थावरमर्हति ।

[1] व्य. नि., p. 325.

[2] स्मृ. च., III, pp. 674 and 692; 674 तमे. पूर्वार्धं परम्.

[3] या. अप., p. 741; म. कु., p. 373; [a] कुप्यं धान्यमथ, स्मृ. कल्प., p. 135; [a] कुप्य, स्मृ. च., III, p. 676; आदायेत्यन्तं पाठः, वि. र., p. 590; [a] रूप्यं धान्यं रथाम्बरं, परा. मा., p. 536; [b] संवत्सरादिकं, दा. भा., p. 150; [a] कुप्यं धान्यं, वि. चि., p. 236; दा. भावत्पाठः, स. वि., p. 409; [a] कुप्य, मि. बा., p. 603; दा. भावत्पाठः.

[4] या. अप., p. 741; म. कु., p. 373; [e] नप्यतिथीन्, स्मृ. कल्प., p. 135; [e] न्धानतिथीन्, वि. र., p. 590; [c] भर्तुः स्वस्रीय, परा. मा., p. 536; दा. भा., pp. 150 and 173; [c] भर्तृस्वस्रीय, वि. चि., p. 236; दा. भा. वत्पाठः, (म. त., p. 793; ज. त., p. 518; म. त., p. 632; वि. रवत्पाठः), मि. बा., p. 603; [c] भर्तुः स्वस्रीय; [d] वृद्धांश्चाप्यतिथीन्.

[5] परा. मा., p. 536; स्मृ. च., III, p. 676; [f] धनं; [g] विविधं स्मृतं; [i] मृत, स. वि., p. 408; स्मृ. च. वत्पाठः, व्य. म., p. 86; मि. बा., pp. 603 and 694; [f] धनं; [h] संभवम्, 694 तमपुटे, स्मृ. च. वत्पाठः.

[6] व्य. म., p. 86; स्मृ. च., III, p. 676; स. वि., p. 409; मि. बा., p. 694.

विधवा[1] यौवनस्था चेन्नारी भवति कर्कशा ।
आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा ॥ १००

मृते[2] भर्तरि भर्त्रंशं लभेत कुलपालिका ।
यावज्जीवं [a]हीनस्वाम्यं दानाधमनविक्रये ॥ १०१

क्रयक्रीता[3] तु या नारी सम्भोगार्थं सुतार्थिना ।
गृहीता वाऽन्यदीया वा सैव स्त्री परिकीर्त्यते ॥ १०२

प्रदद्यात्त्वेव[4b] पिण्डं [c]वा क्षेत्रांशं वा यदृच्छया ॥ १०३

स्थावराज्जीवनं[5d] स्त्रीभ्यो यद्दत्तं श्वशुरेण तु ।
न तच्छक्यमपाहर्तुं [e]इतरैः श्वशुरे मृते ॥ १०४

सपिण्डा[6f] बान्धवा ये तु तस्याः स्युः परिपन्थिनः ।
हिंस्युर्धनानि[7] तान् राजा चौरदण्डेण [g]घातयेत् ॥ १०५

[1] व्य. नि., p. 332.

[2] स्मृ. च., III, p. 677; स. वि., p. 409; [a] हि तत्स्वाम्यम्. Gharpure, II, p. 292, न हि स्वाम्यम्.

[3] स. वि., p. 410.

[4] स्मृ. च., III, p. 679; स. वि., p. 410; [b] प्रदद्याद्वत्सरे पिण्डं, वी. मि., p. 654; [c] च क्षेत्रांशं वा यदिच्छति.

[5] स्मृ. च., III, p. 679; वी. मि., p. 655; [d] दिधनं; [e] दायादैरिह कर्हिचित्, मि. बा., pp. 437 and 737; दिधनं पुत्रैरपि हि कर्हिचित्.

[6] मि. बा., p. 603; म. कु., p. 373; [f] तत्सपिण्डा बान्धवाश्च ये तस्याः परिपन्थिनः। स्मृ. कल्प., p. 135; [f] तत्सपिण्डा बान्धवाश्च येऽन्ये, या. अप., p. 741; म. कुवत्पाठः, व्य. नि., p. 325; तत्सपिण्डा बान्धवा वा, दा. भा., p. 150; वि. चि., p. 237; तत्सपिण्डा बान्धवा ये तस्याः स्युः परिपन्थिनः, व्य. मा., p. 321.

[7] मि. बा., p. 603; म. कु., p. 373; [g] शासयेत्, स्मृ. कल्प., p. 135; [g] नाशयेत्, व्य. नि., p. 325; दा. भा., p. 150; वि. चि., p. 237; व्य. मा., p. 321; [g] दण्डयेत्.

## संसृष्टिविभागः

संसृष्टौ[1] यौ पुनः प्रीत्या तौ परस्परभागिनौ ।
विभक्ता[2] भ्रातरो ये [a]तु सम्प्रीत्यैकत्र संस्थिताः ।
पुनर्विभागकरणे[b] तेषां[c] ज्यैष्ठ्यं न विद्यते ॥ १०६

कदाचिद्वा[3][d] प्रमीयेत प्रव्रजेद्वा कथञ्चन ।
न लुप्यते तस्य भागः [e]सोदरस्य विधीयते ॥ १०७

या[4] तस्य भगिनी [f]सा तु [g]ततोऽंशं लब्धुमर्हति ।
अनपत्यस्य [h]धर्मोऽयमभार्यापितृकस्य च ॥ १०८

सा[5] च दत्ता त्वदत्ता वा सोदरे तु मृते सति ।
तस्यांशं तु हरेत्सैव द्वयोर्व्यक्तं हि कारणम् ॥ १०९

[1] व्य. म., p. 94; स्मृ. कल्प., p. 137; स्मृ. च., III, p. 711; वि. र., p. 602.

[2] स्मृ. च., III, p. 701; स्मृ, कल्प., p. 137; [a] च; [c] ज्यैष्ठ्यं तेषां, वि. र., p. 602; [c] ज्यैष्ठ्यं तेषां, दा. भा., pp. 155 and 219; वि. चि., p. 245; [a] च; [b] तत्पुन-र्भागकरणे ज्यैष्ठ्यं तेषां, दा. त., p. 193; [a] च, वी. मि., p. 644; [a] च, मि. बा., pp. 618 and 712; [a] च इति उभयत्र; [c] ज्यैष्ठ्यं तत्र 712 तमपुटे परम् । वि. से., p. 80; [a] च.

[3] वि. चि., p. 246; (स्मृ. कल्प., p. 137; [d] यदा कश्चित्, या. अप., p. 748); वि. र., p. 602; (व्य. नि., p. 350; दा. भा., p. 155; [d] यदा कश्चित्), दा. त., p. 193; [d] यदि कश्चित्, वी. मि., p. 645; [d] यदा कश्चित्; [e] सोदर्यस्य, मि. बा., pp. 619 and 712; [d] यदा कश्चित्.

[4] या. अप., p. 748; स्मृ. कल्प., p. 137; [g] अल्पं, स्मृ. च., III, p. 708; वि. र., p. 602; वि. च., p. 97; उत्तरार्धं परं, परा. मा., p. 541; व्य. नि., p. 351; [h] भार्या, दा. भा., p. 155; वि. चि., p. 246; दा. त., p. 193; व्य. नि. वत्पाठः, वी. मि., pp. 645 and 685; मि. बा., pp. 619 and 712; [f] मातुः; [h] भार्या, भार्येति परं, 712 तमपुटे पाठः.

[5] स्मृ. च., III, p. 708.

अनन्तरः[1] सपिण्डाद्यस्तस्य तस्य धनं भवेत् ॥ ११०

मृतोऽनपत्योऽभार्यश्चेदभ्रातृपितृमातृकः[2a] ।
सर्वे सपिण्डास्तद्दायं विभजेरन् यथांशतः ॥ १११

संसृष्टानां[3b] तु यः कश्चिद्विद्या[c,d]शौर्यादिना धनम् ।
प्राप्नोति[e] तस्य [f]दातव्यो द्व्यंशः शेषाः समांशिनः ॥ ११२

विभक्तो[4] यः पुनः पित्रा भ्रात्रा [g]चैकत्र संस्थितः ।
पितृव्येणाथवा[h] प्रीत्या [i]तत्संसृष्टः स उच्यते ॥ ११३

सोदर्या[5] विभजेरंस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥ ११४

[1] स्मृ. च., III, p. 708.

[2] या. अप., p. 741 ; स्मृ. कल्प., p. 136 ; स्मृ. च., III, p. 709 ; वि. र., p. 595 ; [a] नपत्य, परा. मा., p. 542 ; वी. मि., p. 685.

[3] या. अप., p. 749 ; स्मृ. कल्प., p. 137 ; [d] अधिकं, स्मृ. च., III, p. 701 ; वि. र., p. 602 ; [d] अधिकं ; [e] धनं प्राप्नोति तत्रास्य, म. पा., p. 680 ; परा. मा., p. 537 ; व्य. नि., p. 351 ; [b] संसृष्टिनां ; [f] दातव्यौ द्व्यंशौ, दा. भा., p. 155 ; वि. चि., p. 246 ; वि. र वत्पाठः, दा. त., p. 193 ; व्य. सा., p. 257 ; [b] संसृष्टिनां, वी. मि., pp. 645 and 677 ; [b] संसृष्टिनां ; [d] अधिकं इति 677 तमपुटे, व्य. म., p. 92 ; [b] संसृष्टिनां ; [c] शौर्यधनादिभिः, मि. बा., pp. 619 and 719 ; [d] अधिकं ; [e] आप्नोति, 719 तमपुटे अधिकमिति परं, वि. से., p. 80.

[4] या. अप., p. 748 ; स्मृ. कल्प., p. 137 ; [i] स तत्संसृष्टः, या. मि., p. 225 ; [g] वैकत्र ; [i] स तत्संसृष्टः, स्मृ. च., III, p. 700 ; वि. र., p. 605 ; [g] वैकत्र ; [i] स तु संसृष्टमुच्यते, म. बा., p. 677 ; [i] स च संसृष्टः, वि. च., p. 94 ; म. पा वत्पाठः, परा. मा., p. 537 ; व्य. नि., p. 349 ; वि. र. वत्पाठः, दा. भा., pp. 160 and 220 ; [i] स तु संसृष्टः (वि. चि., p. 244 ; दा. त., pp. 163 and 192 ; दा. भा वत्पाठः) स. वि., p. 431 ; [g] वैकत्र ; [h] अपि ; [i] स तत्संसृष्टः वी. मि., p. 647 ; स्मृ. कल्पवत्पाठः, या. वी., p. 615 ; या. मि. वत्पाठः, व्य. म., p. 91 ; मि. बा., pp. 662 and 710 ; या. मि. वत्पाठः, वि. से., p. 79 ; दा. भा. वत्पाठः, अख., p. 85 ; या. मि. वत्पाठः, रा. कौ., p. 457 ; या. मि. वत्पाठः.

[5] या. अप., p. 749.

येषां[1] ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो[2] वाऽपि तस्य भागो न लुप्यते ॥ ११५

... ... ... ... [3]सोदरस्य तु सोदरः ।
दद्याचापहरेच्चांशं जातस्य च मृतस्य च ॥ ११६

अन्योदर्यस्तु[4] संसृष्टी [a]नान्योदर्याद्धनं हरेत् ।
असंसृष्ट्यपि [b]चादद्यात्सोदर्यो नान्यमातृजः ॥ ११७

प्रमीतपितृकाणां[5] तु पितृतो भागकल्पना ॥ ११८

येऽपुत्राः[6] क्षत्रविट्छूद्राः पत्नीभ्रातृविवर्जिताः ।
तेषां [c]धनहरो राजा सर्वस्याधिपतिर्हि सः ॥ ११९

पुत्राणां वर्णानुरूपेण विशेषः

विप्रेण[7] क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः ।
भवेत्समांशः[8] क्षत्रेण[d] वैश्याजातस्तथैव च ॥ १२०

[1] या. अप., p. 749; वि. च., p. 95.

[2] या. अप., p. 749; वि. च., p. 95.

[3] वी. मि., p. 677.

[4] आ. अप., p. 748; वी. मि., p. 678; [a] दर्यो धनं; [b] संसृष्टो.

[5] स्मृ. च., III, p. 701.

[6] या. अप., p. 746, ये पुत्राः; स्मृ. कल्प., p. 136; [c] वि. र., p. 598, धनं हरेत्; दा. भा., p. 168; वि. चि., p. 243; वी. मि., p. 649; व्य. म., p. 91.

[7] दा. भा., p. 138; स्मृ. कल्प., p. 127; वि. र., p. 533; वि. मि., p. 594.

[8] दा. भा., p. 138; स्मृ. कल्प., p. 127; वि. र., p. 533; [d] विप्रेण, वी. मि., p. 594.

न[1] प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै ।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत् ॥ १२१
शूद्र्यां[2] द्विजातिभिर्जातो न भूमेर्भागमर्हति ।
सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥ १२२
निषाद[3] एकपुत्रस्तु विप्रस्य स तृतीयभाक् ।
द्वौ सकुल्याः सपिण्डा वा स्वधादाताऽथ संहरेत् ॥ १२३
कुल्याभावे[4] स्वधादाता आचार्यः शिष्य एव वा ।
सर्वास्वापत्सु तान् वर्णांस्तथैव प्रतिपादयेत् ॥ १२४
अनपत्यस्य[5] शुश्रूषुर्गुणवाञ्छूद्रयोनिजः ।
लभेताऽऽजीवनं[6 a] शेषं सपिण्डाः [b]समवाप्नुयुः ॥ १२५

## दुहितुः दायार्हत्वम्

भर्तुर्धनहरी[7 c] पत्नी तां विना दुहिता स्मृता ॥ १२६
अङ्गादङ्गात्सम्भवति[d, e] पुत्रवद्दुहिता नृणाम् ।

[1] या. अप., p. 732 ; स्मृ. कल्प., p. 127 ; आ. ध. व्या., p. 235 ; वि. र., p. 534 ; परा. मा., p. 505 ; व्य. नि., p. 310 ; दा. भा., p. 139 ; वि. चि., p. 225 ; व्य. सा., p. 226 ; वी. मि., p. 595 ; व्य. म., p. 63.

[2] दा. भा., p. 140 ; वि. र., p. 534 ; आ. ध. व्या., p. 235.

[3] वि. र., p. 534.

[4] वि. र., p. 534.

[5] या. अप., p. 735 ; स्मृ. च., III, p. 128 ; वि. र., p. 536 ; व्य. नि., p. 309 ; दा. भा., p. 141 ; वि. चि., p. 226 ; व्य. म., p. 64.

[6] या. अप., p. 735 ; स्मृ. कल्प., p. 128 ; वि. र., p. 536 ; व्य. नि., p. 309 ; [a] लभेत जीवनं ; [b] तु समा ; दा. भा., p. 141 ; वि. चि., p. 226 ; [a] लभेदा.

[7] परा. मा., p. 524 ; या. मि., p. 221 ; स्मृ. च., III, p. 682 ; वि. र., p. 591 ; उत्तरार्धं परं ; व्य. नि., pp. 325 and 327 ; [d] तदभावे भ्रातृसुता सकुल्या बान्धवास्तथा, इति 325 तमपुटे ; 325 तमे यथास्थितपाठः ; वि. चि., p. 238 ; श्रा. चि., p. 207 ; उत्तरार्धं परं, व्य. सा., p. 250 ; स. वि., p. 412 ; [e] सम्भवन्ती ; वी. मि., p. 656 ; स्मृ. च वत्पाठः, या. वी., p. 602 ; उत्तरार्धं परं, नि. सि., III, p. 6 ; [c] हरा ; मि. बा., pp. 586 and 663 ; अख., p. 79 ; उत्तरार्धं परम्.

तस्मात्पितृधनं[1 a, b] त्वन्यः कथं गृह्णीत मानवः ॥ १२७

तदभावे[2] तु दुहिता यद्यनूढा भवेत्तदा ।
अपुत्रपौत्रसन्ताने[3] दौहित्रा धनमाप्नुयुः ॥ १२८

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि[4] तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥ १२९

पौत्रदौहित्रयोर्लोके[5] विशेषो नास्ति धर्मतः ।
अनेनैव विधानेन सुतं चक्रेऽथ पुत्रिकाम् ॥ १३०

पुमान्[6] पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ॥ १३१

सदृशी[7] सदृशेनोढा [c]साध्वी शुश्रूषणे रता ।
कृताऽकृता[d] वा पुत्रस्य पितुर्धनहरी [e]तु सा ॥ १३२

यथा[8] पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु ।
तथैव [f]तत्सुतोऽपीष्टे मातृमातामहे धने ॥ १३३

[1] या. मि., p. 221 ; स्मृ. च., III, p. 682 ; या. अप., p. 743 ; [a] तस्यां ; वि. र., p. 591 ; [a] तस्याः ; व्य. नि., p. 326 ; [a] तस्याः, वि. चि., p. 238 ; श्रा. चि., p. 207 ; [a] तस्याः, स. वि., p. 412 ; [b] पितुर्धनं, वी. मि., p. 656 ; या. वी., p. 602 ; तस्यामात्मनि जीवन्त्यां कथमन्यो धनं हरेत्, मि. बा., pp. 586 and 663 ; अख., p. 79 ; [a] तस्यां.

[2] मि. बा., p. 586.

[3] अख., p. 79 ; स. वि., p. 413 ; उत्तरार्धं परम्.

[4] स. वि., p. 413.

[5] अख., p. 79.

[6] स्मृ. च., III, p. 682.

[7] या. अप., p. 743 ; स्मृ. च., III, p. 687 ; वि. र., p. 591 ; परा. मा., p. 524 ; [d] तस्मात्पितृधनं त्वन्यः कथं गृहीत मानवः । दा. भा., p. 176 ; [c] पति, वि. चि., p. 238 ; [e] भवेत्, व्य. सा., p. 250 ; पूर्वार्धं परं, या. वी., p. 603 ; [e] मता.

[8] दा. भा., p. 180 ; स्मृ. कल्प., p. 132 ; वि. चि., p. 239 ; वी. मि., p. 661 ; मि. बा., p. 632 ; [f] तत्सुतानां च तदभावे तु धर्मतः.

तदभावे[1] भ्रातरस्तु भ्रातृपुत्राः सनाभयः ।
सकुल्या बान्धवाः शिष्याः [a]श्रोत्रियाश्च धनार्हकाः ॥ १३४

## अपुत्रस्य धनविभागः

अनपत्यस्य[2] पुत्रस्य माता दायमवाप्नुयात् ।
भार्यासुतविहीनस्य[3] तनयस्य[b] मृतस्य [c]तु ।
माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया ॥ १३५

पुत्राभावे[4] तु पत्नी स्यात् पत्न्यभावे तु सोदरः ।
तदभावे तु दायादः पश्चाद्दौहित्रकं धनम् ॥ १३६

समुत्पन्नाद्धनादर्धं[5] तदर्थं स्थापयेत्पृथक् ।
मासषाण्मासिके श्राद्धे वार्षिके वा प्रयत्नतः ॥ १३७

बहवो[6] ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
यस्त्वासन्नतरस्तेषां[d] सोऽनपत्यधनं[e] हरेत् ॥ १३८

[1] या. अप., p. 745; स्मृ. कल्प., p. 135; वि. र., p. 595; दा. भा., p. 182; [a] श्रोत्रिया धनहारकाः.

[2] स्मृ. च., III, p. 687.

[3] या. अप., p. 744; स्मृ. कल्प., p. 135; स्मृ. च., III, p. 691; [b] विभक्तस्य; या. सु., p. 73; वि. र., p. 591; [c] च; व्य. नि., pp. 324 and 333; [b] पुरुषस्य, दा. भा., p. 186; वि. चि., p. 239; [c] च; मि. बा., pp. 636 and 643; [b] तनयास्य इति 643 तमे पुटे पाठः, व्य. मा., p. 323.

[4] स्मृ. च., III, p. 692; स. वि., p. 408; पूर्वार्धं परम्.

[5] वि. र., p. 595; स्मृ. कल्प., p. 136.

[6] परा. मा., p. 529; स्मृ. कल्प., p. 136; [e] पत्यो, स्मृ. च., III, p. 697; वि. र., p. 596; [d] यो ह्यासन्नतरः, दा. त., p. 195; वि. र. वत्पाठः, व्य. सा., p. 254; [d] प्रत्यासन्न, वी. मि., p. 669; [d] यस्य, मि. बा., pp. 635 and 663; वि. से., p. 48; वि. र. वत्पाठः.

भ्राता[1] वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सह पिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥ १३९

स्वेच्छाकृतविभागो[2] यः पुनरेव विसंवदेत् ।
स [a]राज्ञांऽशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ॥ १४०

साधारणऋणन्यासनिह्नवे[3] छद्मना क्रियाम् ।
पार्श्वहानिकरीं कृत्वा बलान्नैव प्रदापयेत् ॥ १४१

मायाविनो[4] धूतधनाः क्रूरा लुब्धाश्च ये नराः ।
सम्प्रीत्या साधनीयास्ते स्वार्थहान्या छलेन वा ॥ १४२

साहसं[5] स्थावरस्वाम्यं[b] प्राग्विभागश्च रिक्थिनाम् ।
अनुमानेन विज्ञेयं न [c]स्युर्यत्र च साक्षिणः ॥ १४३

## विभक्तक्रिया

तेषामेताः[6]* क्रिया लोके प्रवर्तन्ते स्वरिक्थिषु ।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण† तान् ॥ १४४

अविभक्तैश्च[7] कर्तव्या वैश्वदेवादिकाः क्रियाः ॥ १४५

[1] वि. र., p. 600.

[2] या. अप., p. 757; स्मृ. च., III, p. 716; वि. र., p. 609; परा. मा., p. 572; [a] राज्ञां शक्यते, व्य. नि., p. 351; दा. त., p. 182; व्य. म., p. 85; मि. बा., p. 776; व्य. मा., p. 329.

[3] वि. र., p. 526.

[4] वि. र., p. 526.

[5] परा. मा., p. 570; स्मृ. च., III, p. 719; दा. भा., p. 231; [b] स्थावरं न्यासः; [c] स्यातां पत्रसाक्षिणौ, स. वि., p. 441; [c] स्युर्यस्य, वी. मि., p. 717; दा. भा. वत्पाठः.

[6] स. वि., p. 441; व्य. मा., p. 328; * येषां; † अन्वगच्छेयुर्लेख्यं वाप्यन्तरेण.

[7] स. वि., p. 442.

बलानुबन्धव्याघातहोढं[1] साहसभावकम् ।
स्वस्य भोगः स्थावरस्य विभागस्य पृथग्धनम् ॥ १४६

पृथगायव्ययधनाः[2a] कुसीदं[b] च परस्परम् ।
वणिक्पथं च ये कुर्युर्विभक्तास्ते न संशयः ॥ १४७

कार्यमुच्छ्रावणालेख्यं[3] विभक्तैर्भ्रातृभिर्मिथः ।
साक्षिणो वा विरोधार्थं विभजद्भिरनिन्दिताः ॥ १४८

येनांऽशो[4] यादृशो [c]भुक्तस्तस्य तं न [d]विचालयेत् ॥ १४९

[1] दा. भा., p. 231.

[2] या. अप., p. 757; स्मृ. च., III, p. 719; वि. र., p. 608; [b] ते विभक्ताः, परा. मा., p. 570; वि. चि., p. 255; पूर्वार्धं परम् । दा. भा., p. 231; स. वि., p. 439; [b] कुसीदश्च, वी. मि., p. 717; व्य. म., p. 84; [a] धनं, व्य. मा., p. 328.

[3] या. बा., p. 256.

[4] या. अप., p. 757; स्मृ. च., III, p. 716; वि. र., p. 609; व्य. नि., p. 351; [c] भक्त, दा. त., p. 182; वी. मि., p. 715; [c] लब्धः प्राप्य, व्य. म., p. 329; [d] विचारयेत्.

२७

## ॥ द्यूतम् ॥

द्यूतं[1] निषिद्धं मनुना [a]सत्यशौचधनापहम् ।
तत्प्रवर्तितमन्यैस्तु[b,c] राजभागसमन्वितम् ॥ १

सभिकाधिष्ठितं[2] कार्यं [d]तस्करज्ञानहेतुना ।
एष[3 e] एव विधिर्ज्ञेयः प्राणिद्यूतसमाह्वये ॥ २

सभिकवृत्तिः

सभिको[4] ग्राहकस्तत्र दद्याज्जेत्रे नृपाय [f]च ।
राजवृद्धिः[5] सकितवात् सभिकाद्दशकं शतम् ॥ ३

यथासमयं वा स्यात् ... ... ... ॥ ४

[1] या. अप., p. 805; स्मृ. च., III, p. 769; [a] सत्य; [b] अभ्यनुज्ञात, वि. र., p. 612; [a] सत्य; [c] च; (परा. मा., p. 578; व्य. नि., p. 354; वि. चि., p. 259; वी. मि., p. 721; स्मृ. च. वत्पाठः), वि. से., p. 289; वि. र. वत्पाठः, स्मृ. कल्प.

[2] परा. मा., pp. 573 and 578; स्मृ. च., III, p. 769; व्य. नि., p. 354; [d] तस्करज्ञापकं हि तत्, वि. चि., p. 259; व्य. नि. वत्पाठः, वी. मि., p. 721; वि. से., p. 289; [d] तस्करज्ञापकं हि तत्, स्मृ. कल्प.

[3] वि. चि., p. 259; वि. से., p. 289; [e] एवमेव.

[4] परा. मा., p. 574; स्मृ. च., III, p. 769; वि. र., p. 612; वी. मि., p. 719; [f] वा.

[5] या. बा., p. 272.

## स्वामिनोर्जयपराजयः

द्वन्द्वयुद्धेन[1][a] यः [b]कश्चिदवसादमवाप्नुयात् ।
तत्स्वामिना[2][c] पणो देयो यस्तत्र परिकल्पितः ॥ ५

रहोजितोऽनभिज्ञश्च[3] कूटाक्षैः कपटेन वा ।
मोच्योऽभिज्ञोऽपि सर्वस्वं जितं सर्वं न [d]दाप्यते ॥ ६

## कूटद्यूतदण्डः

कूटाक्षदेविनः[4] पापा राजभागहराश्च ये ।
गणनावञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः ॥ ७

ग्रहः[5] प्रकाशः[e] कर्तव्यो निर्वास्याः कूटदेविनः ।
व्यापादने[6] तु तत्कारी वधं चित्रमवाप्नुयात् ॥ ८

[1] या. अप., p. 803 ; स्मृ. च., III, p. 770 ; वि. र., p. 614 ; [a] तु, परा. मा., p. 577 ; व्य. नि., p. 355 ; [b] अवसायं, वि. चि., p. 259 ; स. वि., p. 486 ; वी. मि., p. 720 ; या. वी., p. 677 ; वि. से., p. 289 ; स्मृ. कल्प.

[2] या. अप., p. 803 ; स्मृ. च., III, p. 770 ; वि. र., p. 614 ; परा. मा., p. 577 ; व्य. नि., p. 355 ; वि. चि., p. 259 ; स. वि., p. 486 ; [c] तत्स्वामिने, वी. मि., p. 720 ; या. वी., p. 677 ; वि. से., p. 289 ; स्मृ. कल्प.

[3] या. अप., p. 804 ; वि. र., p. 616 ; [d] दापयेत्, (द. वि., p. 61 ; सर्वस्वं जितं सर्वं न दापयेत् इति परम्), स्मृ. कल्प.

[4] वि. र., p. 616 ; स्मृ. कल्प.

[5] वि. चि., p. 259 ; वि. र., p. 616 ; [e] ग्लहः प्रकाशः, या. वी., p. 677 ; वि. रत्नपाठ, द. वि., p. 108 ; [e] गूढः प्रकाशः, स्मृ. कल्प.

[6] द. वि., p. 61.

## सन्दिग्धजयपराजयनिर्णयः

स[1] एव साक्षी सन्दिग्धौ सभ्यैश्चान्यैस्त्रिभिर्वृतः ।
उभयोरपि[2] सन्दिग्धं[a] कितवास्तु[b] परीक्षकाः ॥ ९
यदा विद्वेषिणस्ते तु तदा राजा विचारयेत् ॥ १०
एवं[3] वादिकृतान् वादान् प्रपश्येत्प्रत्यहं नृपः ।
नृपाश्रयास्तथा चान्ये विद्वद्भिर्ब्राह्मणैः सह ॥ ११

[1] वि. र., p. 617 ; या. अप., p. 804 ; स्मृ. कल्प.

[2] या. अप., p. 804 ; वि. र., p. 618 ; [a] सन्दिग्धौ, परा. मा p. 576 ; [a] सन्दिग्धौ ; [b] स्युः, वी. मि., p. 720 ; परा. मा. वत्पाठ स्मृ. कल्प.

[3] वि. र., p. 618 ; स्मृ. कल्प.

# २८

## ॥ समाह्वयः ॥

अन्योन्यपरिगृहीताः[1a] पक्षिमेषवृषादयः[b] ।
प्रहरन्ते कृतपणास्तं वदन्ति समाह्वयम् ॥ १

द्वन्द्वयुद्धेन यः कश्चिदवसादमवाप्नुयात् ।
तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः ॥ २

[1] या. अप., p. 802; स्मृ. च., III, p. 19; वि. र., p. 610; [a] अन्योन्यं; [b] मृगा, परा. मा., p. 573; वि. चि., p. 258; वि. रत्नपाठः, या. वी., p. 677; वि. चित्रपाठः, व्य. मा., p. 329; [a] अन्योन्यं परिगृह्णन्तः; [b] मृगा, वि. से., p. 288; [a] अन्योन्यं; स्मृतिकल्पतरौ च.

## २९

## ॥ प्रकीर्णकम् ॥

एष[1] वादिकृतः प्रोक्तो व्यवहारः समासतः ।
नृपाश्रयं प्रवक्ष्यामि व्यवहारं प्रकीर्णकम् ॥ १

वाग्धिग्दण्डं[2a] वधं चैव चतुर्धा कल्पितं दमम् ।
पुरुषं दोषविभवं ज्ञात्वा सम्परिकल्पयेत् ॥ २

सुवर्णशतमेकं[3] तु वधार्हो दण्डमर्हति ।
अङ्गच्छेदे तदर्धं तु विवासे पञ्चविंशतिम् ॥ ३

हस्ताङ्घ्रिलिङ्गनयनं[4] जिह्वाकर्णौ च नासिका ।
जिह्वा[b] पादार्धसन्दंशललाटौष्ठगुदं कटिः ॥ ४

स्थानान्येतानि[5] दण्डस्य निर्दिष्टानि चतुर्दश ।
ललाटाङ्को ब्राह्मणस्य नान्यो दण्डो विधीयते ॥ ५

अधार्मिकांस्त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः[6] ।
निरोधनेन बन्धेन विविधेन भयेन च ॥ ६

[1] स्मृ. च., III, p. 771 ; वि. र., p. 621 ; वी. मि., p. 72
द. वि., p. 259.

[2] वि. र., p. 629 ; व्य. नि., p. 390 ; [a] धनं वधश्चैव चतुर्धाकल्पि
दमः । पुरुषे दोषविभवौ.

[3] वि. से., p. 313.

[4] द. वि., p. 21 ; वि. र., p. 631 ; [b] ग्रीवा, मि. बा., p. 11
[b] ग्रीवा पदार्धसन्दंशं ललाटौष्ठं गुदं कटिः.

[5] वि. र., p. 631 ; मि. बा., p. 116.

[6] व्य. नि., p. 391.

वधेनापि[1] यदा त्वेतान् निगृहीतुं न शक्नुयात् ।
तदैषु सर्वमप्येतत् प्रयुञ्जीत चतुष्टयम् ॥ ७

वाग्दण्डं[2] प्रथमं कुर्यात् धिग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डं तु वधदण्डमतः परम् ॥ ८

बन्धनानि[3] च सर्वाणि राजमार्गे निवेशयेत् ।
दुःखिता यत्र दृश्यन्ते विकृताः पापकारिणः ॥ ९

दशमांशं[4] हरेदर्थं पञ्चमं सर्वमेव वा ।
मृतस्य वित्तादादद्यादज्ञातिः शवदाहकः ॥ १०

बहुरक्षस्य[5] दशममल्परक्षस्य पञ्चमम् ।
अपुत्रपितृभार्यस्य सर्वमेवेति शौनकः ॥ ११

षड्भागस्तरशुल्कं[6] च गर्ते देयस्तथैव च ।
सङ्ग्रामचौरभेदी च सस्यघातनकृत्तथा ॥ १२

निष्कृतीनामकरणं[7] आज्ञासेधव्यतिक्रमः ।
वर्णाश्रमाणां लोपश्च वर्णसङ्करलोपनम् ॥ १३

निधिर्निष्कुलवित्तं[8] च दरिद्रस्य धनागमः ।
अनाम्नातानि कार्याणि क्रियावादाश्च वादिनाम् ॥ १४

[1] व्य. नि., p. 391.
[2] व्य. नि., p. 391.
[3] व्य. नि., p. 391.
[4] व्य. नि., p. 397.
[5] व्य. नि., p. 397.
[6] द. वि., p. 263.
[7] द. वि., p. 263.
[8] द. वि., p. 263.

प्रकृतीनां[1] प्रकोपश्च सङ्केतश्च परस्परम् ।
अशास्त्रविहितं यच्च प्रजायां सम्प्रकीर्त्यते ॥ १५

साक्षिसभ्यार्थसन्नानां[2] दूषणे दर्शनं पुनः ।
स्ववाचैव जितानां तु नोक्तः पौनर्भवो विधिः ॥ १६

---

वेदार्थोपनिबद्धत्वात्[3] प्राधान्यं तु मनोः स्मृतम् ।
मन्वर्थविपरीता या स्मृतिः सा न प्रशस्यते ॥

॥ बृहस्पतिस्मृतौ व्यवहारकाण्डम् ॥

---

[1] द. वि., p. 263.

[2] स. वि., p. 501.

[3] Colebrooke, *Digest* (Jagannātha, V, 5, 333), Vol. III, p. 323; Jolly, *Bṛhaspati*, XXVII, v. 3; *History of Hindu Law* (Tagore Lectures), p. 60; Ganganath Jha, *Hindu Law in its Sources*, I, p. 44.

cf. *Angiras* (Jha, *l.c.*, p. 44):

यत्पूर्वं मनुना प्रोक्तं धर्मशास्त्रमनुत्तमम् ।
न हि तत्समतिक्रम्य वचनं हितमात्मनः ॥

या. अप., p. 628; कल्पतरौ ब्रह्मचारिकाण्ड, p. 12; मनु, कुल्लूक, p. 2 has मनुस्मृतौ; स्मृ. रत्नाकर., p. 3; संस्कारतत्त्व, p. 903; उद्वाहतत्त्व, p. 145; वी. मि. परिभाषाप्रकाश, p. 27.



चतुष्पाद्व्यवहारोपक्रमः
प्रतिज्ञा
उत्तरम्
प्रमाणम् or क्रिया
निर्णयः
मिथ्या
सम्प्रतिपत्तिः
प्रत्यवस्कन्दनम्
प्राङ्न्यायः
धर्मेण
व्यवहारेण
चारित्रेण
नृपाज्ञया
मानुषी (३)
दैविकी (९)
साक्षी
लेख्यं
भुक्तिः
तुला
अग्निः
उदकं
विषं
कोशः
तण्डुलः
तप्तमाषः
फालं
धर्मजं
१२
(३) बृह
लौकिकं
राजकीयं
भागः
दानम्
क्रयः
आधिः
संविद्
दासः
ऋणम्
शासनं
जयः
आज्ञा


I.
ऋणादानम्
अधमर्णे (५)
ईदृशं देयं
अदेयं
अनेन देयं
अस्मिन् समये
अनेन प्रकारेण
उत्तमर्णे (२)
दानविधिः
आदानविधिः


II.
आधिः
जङ्गमः
स्थावरः
गोप्यः
भोग्यः


III.
प्रतिभूः
दर्शने
प्रत्यये
दाने
ऋणिद्रव्यार्पणे

## ॥ संस्कारकाण्डम् ॥

ज्ञानं[1] यज्ञः सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो ज्ञेयः फलवान् प्रेत्य चेह च ॥ १

भोगेष्वसक्तिः[2] सततं तथैवात्मावलोकनम् ।
श्रेयः परं मनुष्याणां प्राह पञ्चशिखो मुनिः ॥ २

सत्यं[3] ज्ञानं[a] तपो दानमेतद्धर्मस्य [b]साधनम् ।
धर्मात्सुखं च ज्ञानं च [c]ज्ञानान्मोक्षोऽधिगम्यते ॥ ३

तपो[4d] धर्मः कृतयुगे [e]ज्ञानं त्रेतायुगे [f]स्मृतम् ।
द्वापरे चाध्वरः प्रोक्तस्तिष्ये दानं दया [g]दमः ॥ ४

[1] वै. व., p. 4.

[2] वै. व., p. 4.

[3] या. अप., p. 1031 ; गृ. कल्प., p. 63/a ; [a] यज्ञ ; [b] लक्षणम् ; [c] विशिष्यते, गृ. रत्ना., p. 497 ; [a] यज्ञ ; [c] विधीयते.

[4] स्मृ. च. सं., p. 27 ; गृ. कल्प., p. 63/a ; [e] यज्ञं, हे. दा., p. 6 ; हे. प. का., p. 557 ; कृ. रत्ना., p. 11 ; [d] तयोः, गृ. रत्ना., p. 497 ; परा. आ., p. 121 ; स्मृ. रत्ना., p. 11 ; [f] स्थितम्, वी. मि. प., p. 48 ; [f] स्थितम्, वी. मि. स., p. 256 ; [f] स्थितम् ; [g] क्षमः, स्मृ. कौ., p. 468 ; [d] तपो धर्मः कृतयुगे तिष्ये दानं दया दमः इत्येव पाठः, पु. चि., p. 467.

कृते[1] यदब्दाद्यो[a,b] धर्मः स त्रेतायामृतुत्रयात् ।
द्वापरे तु त्रिपक्षेण [c]कलावह्ना [d]तु तद्भवेत् ॥ ५

न[2] च वृत्तं न शुद्धोऽर्थो न शुद्धिर्मनसः कलौ ।
यतोऽतः सत्यमेवैकं नराणामुपकारकम् ॥ ६

कृतेऽभूत्सकलो[3] धर्मस्त्रेतायां त्रिपदः [e]स्थितः ।
पादः प्रविष्टोऽधर्मस्य मत्सरद्वेषसम्भवः ॥ ७

धर्माधर्मौ[4] समौ[f] भूत्वा द्विपादौ द्वापरे स्थितौ ।
तिष्ये[5] धर्मस्त्रिभिः[g] पादैर्धर्मः पादेन संस्थितः ॥ ८

शौर्यवीर्यार्थरहितस्तपोज्ञानविवर्जितः[6] ।
आचारहीनः पुत्रस्तु [h]मूत्रोच्चारसमः स्मृतः ॥ ९

इतिहासपुराणेभ्यो[7][i] वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदः मामयं [j]प्रतरिष्यति ॥ १०

[1] स्मृ. च. सं., p. 28; गृ. कल्प., p. 63/a; [b] धर्मः स्यात् त्रेतायां तु; [d] च, हे. प. का., p. 658; गृ. रत्ना., p. 497; [a] षट्; [d] च तत्फलं, स्मृ. रत्ना., p. 11; [b] धर्माः स्युस्त्रेतायां तत्, वै. व., p. 23; गृ. कल्पवत्पाठः, वी. मि. स., p. 257; [b] धर्मः स्यात्तत्; [c] अहनि, पु. चि., p. 467; [b] धर्मः स्यात्स त्रेतायामृतुत्रये.

[2] वै. व., p. 23.

[3] परा. आ., p. 82; कृ. रत्ना., p. 11; [e] स्मृतः, वी. मि. प., p. 52.

[4] परा. आ., p. 82; कृ. रत्ना., p. 11; वी. मि. प., p. 52; [f] समौ भूत्वा द्वौ.

[5] परा. आ., p. 125; कृ. रत्ना., p. 11; वि. म., p. 27; वी. मि. प., p. 52; [g] त्रिपादस्तु.

[6] स्मृ. रत्ना., p. 28; वै. व., p. 8; [h] मात्रुच्चारसमः.

[7] स्मृ. च. सं., p. 6; स्मृ. रत्ना., p. 4; [i] पुराणाभ्यां, स्मृ. मुक्ता. का., p. 11; [i] पुराणाभ्यां; [j] प्रचलिष्यति.

श्रुतिस्मृती[1] चक्षुषी द्वे द्विजानां न्यायवर्त्मनि ।
मार्गे मुह्यन्ति तद्धीनाः प्रपतन्ति पथश्च्युताः ॥ ११

तावच्छास्त्राणि[2] शोभन्ते तर्कव्याकरणानि च ।
धर्मार्थमोक्षोपदेष्टा[a] मनुर्यावन्न दृश्यते ॥ १२

वेदार्थप्रतिबद्धत्वात्[3b] प्रामाण्यं तु [c]मनोः स्मृतम् ।
मन्वर्थविपरीता [d]तु या स्मृतिः सा न शस्यते ॥ १३

कृते[4] तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखितौ कलौ पाराशरस्मृतिः ॥ १४

रागजं[5] रोगजं चैव द्रव्यजं कालजं तथा ।
यद्रागरोगद्रव्योत्थं तदुक्तं प्राह भार्गवः ॥ १५

अर्वाक्[6] प्रसूतेरुत्पन्न[e] मेध्यो वृष्याङ्गनासु यत् ।
तद्रागजमिति प्रोक्तं [f]प्रजोद्भवसमुद्भवम् ॥ १६

पित्तादिदोषवैषम्यात्सकृत्तत्संप्रवर्तते[7g] ।
रोगजं तत्समुद्दिष्टं अथ द्रव्यजमुच्यते ॥ १७

[1] ब्र. कल्प., p. 5/2.

[2] म. कु., p. 2 ; म. रा., p. 4 ; [a] धर्ममोक्षोपदेष्टा तु.

[3] हे. प. का., p. 476 ; ब्र. कल्प., p. 12 ; [b] थैंपनिबन्धत्वात्, या. अप., p. 628 ; [c] मनुस्मृतौ, म. कु., p. 2 ; स्मृ. रत्ना., p. 3 ; [b] ध्युपनिबन्धत्वात्, म. रा., p. 4 ; [b] थैंपनिबन्धत्वात् प्राधान्यम्, ( सं. तत्व., p. 903 ; उ. तत्व., p. 145 ; [b] थैंपनिबन्धृत्वात् प्राधान्यं हि ; [d] या सा स्मृतिर्न प्रशस्यते ), वी. मि. प., p. 27 ; म. रा. वत्पाठः.

[4] आ. रत्न., p. 12.

[5] वि. म., p. 217 ; प्र. पारि., p. 102.

[6] वि. म., p. 217 ; प्र. पारि., p. 102 ; [e] उत्पन्नं मेदो वृध्यङ्गनासु ; [f] पक्षोद्भेद.

[7] वि. म., p. 217 ; प्र. पारि., p. 102 ; [g] असकृत्सम्प्रवर्तते.

भक्ष्यद्रव्यस्य[1] वैषम्याद् धातुवैषम्यसम्भवम् ।
द्रव्यजं रज इत्युक्तं तत्कादाचित्कसम्भवम् ॥ १८
आरभ्य[2] चार्तवदिनादेकविंशतिवासरान् ।
मासार्धेऽथ रजो यत्स्यात्तत्कालजमुदाहृतम् ॥ १९
कालजं[3] तु रजस्संज्ञं [a]तस्मात्तेनैव साऽशुचिः ।
रजस्वला[4] यदा स्नाता पुनरेव रजस्वला ।
अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥ २०
एकोनविंशतेरर्वागेकाहं[5] स्यात्ततो द्व्यहम् ।
आर्तवाभिप्लुते[6] नार्यौ सम्भाषेते मिथो यदि ।
उपवासं तयोराहुरशुद्धौ शुद्धिकारणम् ॥ २१
पतिव्रता[7] च रोगी च वृद्धश्चैव विशेषतः ।
अकामकृतपापे च प्रायश्चित्तार्धमर्हति ॥ २२
रजसा[8] भुञ्जते नार्यः मोहात्स्पृष्टाः शवादिभिः ।
त्र्यहे [b]तु पर्यपेते तु कृच्छ्रं चान्द्रायणोत्तरम् ॥ २३
प्रथमेऽह्नि[9] त्रिरात्रं [c]स्याद्द्वितीये द्व्यहमेव [d]तु ।
अहोरात्रं[e] तृतीयेऽह्नि चतुर्थे [f]नक्तमेव च ॥ २४

[1] वि. म., p. 217.

[2] वि. म., p. 217.

[3] वि. म., p. 217, प्र. पारि., p. 102; [a] तत्रैव.

[4] वि. म., p. 217.

[5] वि. म., p. 217.

[6] स्मृ. रत्ना., p. 62; स्मृ. मुक्ता. आ., p. 214.

[7] स्मृ. रत्ना., p. 140.

[8] वै. आ., p. 115; स्मृ. रत्ना., p. 63; [b] च.

[9] प्रा म., p. 104; स्मृ. रत्ना., p. 63; [f] आचरेत्, प्रा. वि., pp. 487, 523; [c] तु; [d] च; [e] एक; [f] आचरेत्, p. 523; तमपुटे; [e] एक इति परं भेदः, प्रा. तत्व., p. 558; [c] तु; [f] आचरेत्; [f] आचरेत्, वै. आ., p. 115; [f] आचरेत्.

पतितान्त्यश्वपाकेन[1][a] संस्पृष्टा [b]चेद्रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥ २५

शुना[2] चोच्छिष्टया [c]शूद्र्या संस्पृष्टा द्व्यहमाचरेत् ।
अहोरात्रं तृतीयेह्नि परतो नक्तमाचरेत् ॥ २६

तीर्थे[3] विवाहे[d] यात्रायां सङ्ग्रामे देशविप्लवे ।
नगरग्रामदाहे[e] च [f,g]स्पृष्टास्पृष्टि र्न दुष्यति ॥ २७

स्मरणं[4] कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ॥ २८

एतन्मैथुनमष्टाङ्गं[5] प्रवदन्ति मनीषिणः ।
रवेरभ्युदये[6] मानं चन्द्रस्य पितृकर्मणि ।
यज्ञे [h]सावनमित्याह ऋक्षं सर्वव्रतादिषु ॥ २९

ऋतुकालाभिगमनं[7] कुर्यात्पर्वणि वर्जयेत् ।

[1] प्रा. म., p. 104; स्मृ. रत्ना., p. 63; प्रा. वि., p. 487; [b] स्त्री, प्रा. तत्व., p. 558; स्मृ. मुक्ता. आ., p. 216; [a] श्वपाकैश्च.

[2] प्रा. म., p. 105; प्रा. वि., p. 489; [c] शूद्रा, प्रा. तत्व., p. 558.

[3] म. पारि., p. 261; शु. कल्प., p. 43/a; [g] स्पृष्टिर्न, हे. प. श्रा., pp. 832 and 849; [e] नगरे; [g] स्पृष्टं, स्मृ. रत्ना., p. 65; [e] ग्राम-दाहे प्रवासे, प्रा. वि., p. 490; शु. वि., p. 32; [f] स्पृष्टस्पृष्टिर्न, शु. चि., p. 115; शु. कल्पवत्पाठः, आ. तत्व., p. 357; प्रा. तत्व., p. 508; आ. रत्न., p. 57; शु. कल्पवत्पाठः; वै. आ., p. 118; वि. पारि., Part II, pp. 142 and 748; प्रा. म., p. 107; [d] विवाह, पु. चि., p. 454; शु. कल्पवत्पाठः, स्मृ. मुक्ता. आ., p. 221; [e] ग्रामदाहे प्रवासे च स्पृष्टास्पृष्टिर्न विद्यते, कृत्य. समु., p. 86.

[4] स्मृ. रत्ना., p. 18.

[5] स्मृ. रत्ना., p. 18.

[6] स्मृ. कौ., p. 452; पु. चि., p. 5; [h] इत्याहुरार्क्षम्.

[7] मल. तत्व., p. 809; आ. दर्श., p. 65; स्मृ. उद्धार., p. 305.

निशाषोडशकं[1] नारी संज्ञितर्तुमती तु सा ।
तावद्योग्या प्रजास्थाने विनाद्याहश्चतुष्टयम् ॥ ३०

श्राद्धं[2] यात्रां चिकित्सां च मैथुनाभ्यञ्जने तथा ।
चौलोपनयनादीनि वर्जयेत्त्रिषु जन्मसु ॥ ३१

ऋतौ[3] च मैथुनं धर्म्यं पुत्रोत्पत्तिनिमित्ततः ।
स्वर्गं प्राप्नोति नैवं तु प्रत्यवायेन युज्यते ॥ ३२

ऋतुकालाभिगमनं[4] पुंसा[a] कार्यं प्रयत्नतः ।
सदैव पर्ववर्जं तु [b]स्त्रीणामभिमतं हि तत् ॥ ३३

यथाकामी[5] भवेद्विद्वान् स्त्रीणां वरमनुस्मरन् ।
स्त्रियाः[6] [c]शुक्रेऽधिके[d] स्त्री स्यात्पुमान् [e]पुंसोऽधिके भवेत् ॥ ३४

तस्माच्छुक्रप्रवृध्यर्थं[7] [f,g] वृष्यं[h] स्निग्धं च भक्षयेत् ।
लघ्वाहारां[i] स्त्रियं कुर्यादेवं सञ्जनयेत्सुतम् ॥ ३५

[1] प्र. पारि., p. 105.

[2] प्र. पारि., p. 105.

[3] म. स. ना., p. 620.

[4] परा. आ., p. 104; आ. दर्श., p. 65; [b] अपि, स्मृ. रत्ना., p. 216; [a] पुंसां, उ. तत्व., p. 147; वै. व., p. 126.

[5] स्मृ. रत्ना., p. 216.

[6] या. अप., p. 106; स्मृ. च. सं., p. 40; [c] स्त्रियो रजो; [e] शुक्राधिके, च. म. सं., p. 5; आ. दर्श., p. 65; परा. आ., p. 101; स्मृ. रत्ना., p. 217; वै. व., p. 128; वी. मि. सं., p. 160; सं. कौ., p. 15; [d] शुक्राधिके, बा. आ., p. 222.

[7] या. अप., p. 106; स्मृ. च. सं., p. 40; [f] शुक्रविवृध्यर्थं, च. म. सं., p. 5; आ. दर्श., p. 65; [i] लेह्या, परा. आ., p. 101; स्मृ. रत्ना., p. 217; [h] स्निग्धमुष्णं, वै. व., p. 128; वी. मि. सं., p. 160; सं. कौ., p. 15; [g] विवृध्यर्थं स्निग्धं भक्षं, (बा. आ., p. 222; [h] स्निग्धं भक्षं प्रकल्पयेत् । लघ्वाहारामिति न दृश्यते).

गर्भाधानमृतौ[1] कुर्यात् [2]सवनं स्पन्दिते शिशौ ॥ ३६

वर्धिष्णूनां[3] चतुर्थानामपि कर्तव्यतां गतम् ।
अमन्त्रकं तु कर्तव्यं पुंकर्म [a]तु शुभार्थिनाम् ॥ ३७

गुरुशुक्रबुधेन्दूनां[4] द्रेष्काणा[b] दिवसांशकाः ।
तेषामुदयहोरा[c] च [d]पुंसवेऽतिशुभावहाः ॥ ३८

मासप्रयुक्तकार्येषु[5][e] मूढत्वं गुरुशुक्रयोः ।
न दोषकृत्तदा मासलक्षणो बलवानिति ॥ ३९

चतुर्थे[6] मासि षष्ठे वाऽप्यष्टमे गर्भिणी यदा ।
यात्रा नित्यं विवर्ज्या [f]स्यादाषाढे तु विशेषतः ॥ ४०

मुख्यालाभे[7] विधिज्ञेन विधिश्चिन्त्यः [g]प्रमादजः ।
नक्षत्रतिथिलग्नानां [h]विचार्यैवं पुनःपुनः ॥ ४१

वृद्धिर्दास्यं[8] पुंसवादिप्रेतकर्मानुमासिकम् ।
नित्यं मास्यधिकेऽन्यत्तु सर्वदैवादि चोत्तरे ॥ ४२

अनुक्ते[9] चापि राशौ तु शुभं स्याच्छुभवीक्षिते ।
कन्यायां न प्रशंसन्ति शुभदृष्टे युतेऽपि [i]च ॥ ४३

[1] स्मृ. च. सं., p. 44; वै. व., p. 132; वी. मि., सं., p. 141.

[2] हे. प. का., p. 733; पु. चि., p. 432; पुंसवनं सन्दति शिशौ.

[3] वी. मि. सं., p. 168; प्र. पारि., p. 112; [a] च.

[4] वी. मि. सं., p. 169; प्र. पारि., p. 113; [b] द्रेक्काणा; [c] होराश्च, सं. कौ., p. 52; [b] द्रेक्काणा; [d] तु.

[5] वी. मि. सं., p. 169; प्र. पारि., p. 112; [e] मासि, वि. पारि., p. 95; सं. कौ., p. 52; न दोषकृत् इति पर्यन्तं, सं. कौ., पाठः.

[6] वि. पारि., p. 242; प्र. पारि., p. 126; [f] पाषाणे.

[7] वि. पारि., Part I, p. 269; वा. आ., p. 16; [g] प्रमाणतः; [h] एव.

[8] वी. मि. सं., p. 169.

[9] वी. मि. सं., p. 170; प्र. पारि., p. 113; [i] वा, सं. कौ., p. 52.

तृतीये[1] मासि कर्तव्यं गृष्टेरन्यत्र शोभनम् ।
गृष्टेश्चतुर्थे मासे तु षष्ठे वाऽप्यथवाऽष्टमे ॥ ४४

गर्भस्य[2] स्थापने कालः तृतीये मासि चोदितः ।
गृष्टेरन्यत्र गृष्टेस्तु षष्ठे मास्यथवाष्टमे ॥ ४५

कुळीरं[3] मिथुनं कन्यां हित्वा शेषाः शुभावहाः ।
सौरेणैव[4a] चतुर्थे [b]स्यान्मासे षष्ठाष्टमेऽपि वा ।
मासि[c] प्रोक्ताः क्रिया याः स्युस्ताः सर्वाः सौरमासतः ॥ ४६

पूर्वपक्षः[5d] शुभः प्रोक्तः [e]कृष्णे चान्त्यत्रिकं विना ।
पक्षच्छिद्रां[6f] च रिक्तां च विना पञ्चदशीं शुभाः ।
चतुर्दशी[g] चतुर्थी च [h]कदाचित्स्युः शुभप्रदाः ॥ ४७

सीमा[7] षष्ठेऽष्टमे मासि ... ... ... ॥ ४७अ

रोहिण्यैन्दवमादित्यपुष्यहस्तोत्तरात्रयम्[8] ।
पौष्णं वैष्णवभं चैव सीमन्ते दश [i]संस्मृताः ॥ ४८

[1] सं. कौ., p. 51; प्र. चि., p. 81.

[2] प्र. पारि., p. 112.

[3] वी. मि. सं., p. 170; प्र. पारि., p. 113.

[4] वी. मि. सं., p. 174; प्र. पारि., p. 118; [a] सौरेण तु; [b] मासि षष्ठे; [c] मासप्रोक्ता.

[5] वी. मि. सं., p. 174; प्र. पारि., pp. 119 and 214; [d] शुक्ल; [e] कृष्णः इति, 214 तमपुटे पाठः, सं. कौ., p. 52.

[6] वी. मि. सं., p. 175; प्र. पारि., p. 119; [f] छिद्रा च रिक्ता च विना पञ्चदशी शुभा; [h] तु शुभप्रदे, सं. कौ., p. 52; [g] चतुर्थी च कदाचित् स्युस्तिथयश्च.

[7] हे. प. का., p. 734.

[8] वी. मि. सं., p. 176; प्र. पारि., p. 119; [i] सम्मताः, सं. कौ., p. 52; पु. चि., p. 432:

रोहिण्यामैन्दवादित्यपुष्यहस्तोत्तरादिषु ।
पौष्णवैष्णवयोश्चैव शुभं सीमन्तकर्म च ॥

सीमन्ते[1] तिष्यहस्तादितिहरि-
शशभृत्पौष्णविध्युत्तराख्याः
पक्षच्छिद्रां च रिक्तां पितृतिथि-
मपहायापराः स्युः प्रशस्ताः ।
सिंहाळी वर्जयित्वा शुभफल-
बहुला राशयोऽप्यंशकाश्च
श्रेष्ठाः स्युः श्वेतरोचि भृगुबुध-
धिषणानां विशुद्धेऽष्टमेऽह्नि ॥ ४९

सद्यो[2] गृहीतगर्भायाः श्रमस्त्वाद्योऽभिजायते ।
पिपासा[3] च ततो ग्लानिर्योन्यास्तु स्फुरणं भवेत् ॥ ५०

स्वजन्मकाले[4] चन्द्रः स्यान्नक्षत्राल्लग्नभादपि ।
गुरुर्वधे विपन्नाशेऽप्यपवादविनाशिकम् ॥ ५१

तयोरष्टमभे[5] जीवः प्रत्यरे वा प्रयाति चेत् ।
दोषापवादान् संयम्य दोषानेव समर्थयेत् ॥ ५२

यस्य[6] लग्नर्क्षजन्मर्क्षौ गुरोः सप्तमपञ्चमौ ।
तृतीये वास्य दोषाणामपवादविनाशनः ॥ ५३

यस्य[7] लग्नस्य जन्मर्क्षे रविर्विपदि वा स्थितः ।
प्रत्यरे वा वधे वापि दोषाणामपवादवान् ॥ ५४

[1] प्र. पा., p. 119. Cited in कालविधान (śl. 10, Madras edn., 1922).

[2] वै. व., p. 277.

[3] वै. व., p. 277.

[4] प्र. पारि., p. 138.

[5] प्र. पारि., p. 138.

[6] प्र. पारि., p. 138.

[7] प्र. पारि., p. 138.

गुरुर्गुरुज्ञौ[1] शुक्रज्ञौ व्यर्का व्याराश्च वीन्द्विनाः ।
व्यर्केन्द्वर्कजाः सर्वे सुहृदो रिपवः परे ॥ ५५

जन्मनः[2a] पञ्चताराङ्गयाते चन्द्रे शिशुं पिता ।
भूषयेद्भूषणैः सर्वैः पञ्चायुधसमन्वितैः ॥ ५६

विशेषात्कन्यकायाश्च[3] कर्तव्यं [b]मङ्गलेन च ।
पुंसः[c] सायुधमाकल्पमायुःश्रीकान्तिदं शिशोः ॥ ५७

कन्याविवाहे[4] संक्रान्तौ सूतकं न कदाचन ॥ ५७अ

अनर्भको[5] भवेन्नाशो न स्वर्गोऽपुत्रकस्य च ।
न मोक्षोऽपुत्रकस्य स्यान्नापुत्रस्य परा गतिः ॥ ५८

तस्मात्सुपुत्रसद्भावे[6] यतेत पुरुषः सुधीः ॥ ५८अ

अहन्येकादशे[7] नाम [नामकर्म विधीयते] ॥ ५८आ

दशाहे[8d] द्वादशाहे वा जन्मतोऽपि त्रयोदशे ।
षोडशैकोनविंशे वा [e]द्वात्रिंशे वर्णतः क्रमात् ॥ ५९

बालानामष्टमे[9] मासि षष्ठे मासि ततः पुनः ।
दन्ता यस्य च जायन्ते माता वा म्रियते पिता ॥ ६०

[1] प्र. पारि., p. 152.

[2] वी. मि. सं., p. 203; प्र. पारि., p. 157; [a] जन्मतः पञ्चतारायां वै. आशौ., p. 47; [a] जन्मतः पञ्चमं तारं.

[3] वी. मि. सं., p. 203; प्र. पारि., p. 157; वै. आशौ., p. 47; [b] मङ्गलं तथा; [c] तत्र.

[4] प्र. पारि., p. 158.

[5] प्र. पारि., p. 160.

[6] प्र. पारि., p. 160.

[7] हे. प. का., p. 738.

[8] वी. मि. सं., p. 233; म. रत्न. प्र. पारि., p. 162;

[d] द्वादशे दशमे वापि जन्मतो दिवसे शुभे ।
षोडशे विंशतौ चैव द्वाविंशे वर्णतः क्रमात् ॥

सं., कौ. p. 95; प्र. पारि. वत्पाठः, पु. चि., p. 433; [e] द्वाविंशे.

[9] सं. कौ., p. 93.

यस्यां[1] क्रियायां [a]यश्चोक्तः कालो मासदिनैरपि ।
तस्यां न दोषो [b]मूढत्वं वक्रं वा जीवशुक्रयोः ॥ ६१

पूर्वाह्णः[2] श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः ।
अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि ॥ ६२

त्र्युत्तरासु[3] धनिष्ठायां[c] रेवतीहस्तयोरपि ।
मूलवारुणपुष्येषु [d]श्रवणादित्ययोरपि ॥ ६३

मैत्रवाजिभयोः[4] स्वातिरोहिण्यैन्दवभेषु च ।
कुर्यान्नामक्रियां विद्वानायुःश्रीकान्तिवृद्धये ॥ ६४

शुभांशे[5] शुभवीक्षायां शुभक्षेत्रे शुभोदये ।
शुभवारे च षड्वर्गे शुभानां नामसम्पदे ॥ ६५

मुख्यालाभे[6] विधिज्ञेन विधिश्चिन्त्योऽप्रमादतः ।
नक्षत्रतिथिलग्नानां विचार्यैवं पुनःपुनः ॥ ६६

मृदुध्रुवं च रक्षिप्रभेष्वेषामुदयेऽपि च ।
गुरौ शुक्रेऽथवा केन्द्रे जातकर्म च नाम च ॥ ६७

शुभवारे[7] च षड्वर्गे शुभानां नामसञ्चयः ।
राशयश्च[8] स्थिराः श्रेष्ठाः द्विःस्वभावाः शुभैर्युताः ।
श्रेष्ठा नेष्टास्तथा शेषा यद्यप्युक्तशुभैर्युताः ॥ ६८

[1] सं. कौ., p. 95 ; प्र. पारि., p. 163 ; [a] सर्वोक्तः कालो मासो ; [b] मूढले वक्रले.

[2] सं. म., p. 26 ; वी. मि. सं., p. 236.

[3] वी. मि. सं., p. 235 ; प्र. पारि., p. 163 ; [c] श्रविष्ठायां ; [d] श्रविष्ठा.

[4] प्र. पारि., p. 163.

[5] प्र. पारि., p. 163.

[6] निर्ण. सि., p. 179.

[7] वी. मि. सं., p. 235.

[8] प्र. पारि., p. 163.

स्वोच्चस्वषड्वर्गयुतग्रहाणां[1]
लग्नेऽथवा वीक्षितयुक्तराशौ ।
शुभग्रहाणां च विशेषतश्च
नामानुकीर्तिं शुभदां वदन्ति ॥ ६९

शुद्धे[2] व्ययाष्टमे लग्ने पापाश्च त्रिषडायगाः ।
शुभेषु शेषसंस्थेषु नामकर्म शुभावहम् ॥ ७०

अष्टमे[3] तु ग्रहाः सर्वे नेष्टास्ते नामकर्मणि ।
धनकर्मसुतभ्रातृनवमस्थः[4] शुभः शशी ॥ ७१

नामाखिलस्य[5] व्यवहारहेतुः
शुभावहं कर्मसु भाग्यहेतुः ।
नाम्नैव कीर्तिं लभते मनुष्य-
स्ततः प्रशस्तं खलु नामकर्म ॥ ७२

यात्रोक्तसमये[6] मासि तृतीये द्वादशेऽह्नि वै ।
खट्वारोहस्तु[7 a] कर्तव्यो दशमे द्वादशेऽपि वा ।
षोडशे दिवसे वाऽपि [b]द्वात्रिंशे दिवसेऽपि वा ॥ ७३

आन्दोला[8] शयने पुंसो द्वादशो दिवसः शुभः ।
त्रयोदशस्तु कन्याया न नक्षत्रविचारणा ॥ ७४

[1] प्र. पारि., p. 163.

[2] वी. मि. सं., p. 236.

[3] वी. मि. सं., p. 236.

[4] वी. मि. सं., p. 236.

[5] वी. मि. सं., p. 241 ; सं. कौ., p. 98 ; शुभावहमित्यन्त एव पाठः.

[6] वी. मि. सं., p. 250.

[7] पु. चि., p. 434 ; प्र. पारि., p. 178 ; [b] द्वात्रिंशद्, वि. पारि., p. 431 ; सं. कौ., p. 100 ; [a] दोलारोहस्तु ; [b] द्वाविंशद्, प्र. चि., p. 103 ; [b] द्वाविंशे ; [a] दोलारोहस्तु ; [a] निर्ण. सि., p. 185 ; दोलारोहस्तु.

[8] प्र. चि., p. 103 ; निर्ण. सि., p. 185.

अन्यस्मिन् दिवसे चेत्स्यात् तिर्यगास्ये प्रशस्यते ।
जीवभार्गवसौम्यानां[1] शिशुनिष्क्रमणक्रिया ।
दिवसे शस्यते नित्यमायुर्वृद्धिधनप्रदा ॥ ७५
अश्विनी[2] रेवती हस्तो धनिष्ठा रोहिणी तथा ।
श्रवणं हस्तसंयुक्तं मृगेणोत्तरफल्गुनी ॥ ७६
अनुराधोत्तराषाढा[3] तथा चैव पुनर्वसुः ।
इमानि भानि शस्तानि शिशुनिष्क्रमणे विधौ ॥ ७७
स्वस्ति[4] वाच्य समारूढवाहनं निर्ययेद्गृहात् ।
मातुलो[5] वा वहेत्तत्र निर्वाहनशिशुं स्वयम् ॥ ७८
शिशुना सह मित्राणि [a]निर्ययुश्च गृहात्स्वयम् ।
अलङ्कृत्य[6][b] शिशुं [c]सम्यगभ्यर्च्य धवलाक्षतैः ।
स्वस्ति वाच्य समारूढवाहनं निर्णयेद्गृहात् ॥ ७९
सह[7][d] दुन्दुभिघोषैश्च वाद्यशब्दसमन्वितैः ।
चतुरश्रे[8] शुचौ[e] देशे गोमयेनोपलेपिते ॥ ८०
धान्यपुञ्जे[9] समासीनं [f]बालं बालामथापि वा ।
अर्चयेद्गन्धपुष्पाद्यैस्तस्मिन्[g] मूर्ध्नि ललाटके ॥ ८१

[1] पु. चि., p. 434.

[2] पु. चि., p. 434.

[3] पु. चि., p. 434.

[4] सं. कौ., p. 101.

[5] वी. मि. सं., p. 254; प्र. पारि., p. 184; [a] बान्धवा निर्ययुस्तदा, सं. कौ., p. 101; पूर्वार्धं परम्.

[6] वी. मि. सं., p. 254; प्र. पारि., p. 184; [b] अलङ्कृतं; [c] अभ्यर्चितशुभाक्षतैः.

[7] वी. मि. सं., p. 254; प्र. पारि., p. 184; [d] सर्वै.

[8] वी. मि. सं., p. 254; प्र. पारि., p. 184; [e] शुभे, वि. पारि., p. 438.

[9] वी. मि. सं., p. 254; प्र. पारि., p. 184; [f] पीठे; [g] तस्य, वि. पारि., p. 438.

तस्य[1a] रक्षां ततः कृत्वा [b]मृतसञ्जीविनीं जपेत् ।
तत्रार्चयेद्गणेशानं[2c] भूतेशानं तथैव च ।
भक्ष्यैर्विचित्रैः सफलैः शिशूनभ्यर्चयेद्बुधः ॥ ८२

अथातः[3] सम्प्रवक्ष्यामि उपनिष्क्रमणं शिशोः ।
अथ[4] निष्क्रमणं नाम गृहात्प्रथमनिर्गमः ।
अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः ॥ ८३

कृते सम्पद्विवृद्धिः स्यादायुर्वर्धनमेव च ।
जन्मतो[5] दशमे चाह्नि द्वादशे वाऽथ षोडशे ।
सप्तमे[6] मासि वा कुर्याद्दशमे मासि वा पुनः ॥ ८४

झषचापकुळीरस्थो[7] जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥ ८५

कार्तिके[8] पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥ ८६

शिशोरजातदन्तस्य[9] मातुरुत्सङ्गसर्पिणः ।
सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया ॥ ८७

[1] वि. पारि., p. 438; प्र. पारि., p. 184; वी. मि. सं., p. 255; [a] अस्य; [b] सञ्जीवनम्.

[2] वी. मि. सं., p. 255; प्र. पारि., p. 184; [c] गृहेशानम्.

[3] प्र. पारि., p. 183.

[4] वी. मि. सं., p. 256; प्र. पारि., p. 183; वि. पारि., p. 437; सं. कौ., p. 102.

[5] सं. म., p. 26; वि. पारि., p. 442; वी. मि. सं., p. 258.

[6] सं. म., p. 26; वि. पारि., p. 442; वी. मि. सं., p. 258.

[7] वि. पारि., p. 471.

[8] बा. आ., p. 30.

[9] बा. आ., p. 30.

हस्ताश्विनीस्वातिपुनर्वसौ[1] च
तिष्येन्दुचित्राहरिरेवतीषु ।
चन्द्रेऽनुकूले गुरुशुक्रवारे
कर्णौ च वेध्यावमले च शुक्रे ॥ ८८

द्वितीया[2] दशमी षष्ठी सप्तमी च त्रयोदशी ।
द्वादशी पञ्चमी शस्ता तृतीया कर्णवेधने ॥ ८९

एकादश्यष्टमीपर्वरिक्ता[3] वर्ज्याः शुभावहाः ।
शिष्टाश्च तिथयः सर्वाः कृष्णे चान्त्यत्रिकं विना ॥ ९०

शकुन्यादीनि[4] विष्टिं च विशेषेण विवर्जयेत् ।
शुभयोगेषु सर्वेषु कर्णवेधः शुभावहः ॥ ९१

भूमिजार्कात्मजार्काणां[5] दिवसान् परिवर्जयेत् ।
जीवेन्दुजेन्दुशुक्राणां दिवसाः पूजिता मताः ॥ ९२

मन्दारार्कांशवारास्तु[6] वर्ज्याः स्युः कर्णवेधने ।
गुरुशुक्रेन्दुजेन्दूनां पूज्या वारांशकोदयाः ॥ ९३

तस्मिन्वारे[7] तिथौ तारे द्वे द्वे युक्ते न शोभने ।
सन्ध्योर्द्वयोः पुरा पश्चाद्दिनानि शुभतारयोः ॥ ९४

पूर्वाह्ने[8] सुप्रशस्तं स्यादपराह्ने न शोभनम् ।

[1] बा. आ., p. 30.
[2] वी. मि. सं., p. 260.
[3] प्र. पारि., p. 182.
[4] प्र. पारि., p. 182.
[5] वी. मि. सं., p. 260.
[6] प्र. पारि., p. 182.
[7] प्र. पारि., p. 182.
[8] प्र. पारि., p. 182.

सौम्यार्द्रार्यादित्युत्तराहस्तचित्राश्विविष्णुभम्[1] ।
धनिष्ठा[a] रेवती चैव शुभाः स्युः कर्णवेधने ॥ ९५

स्थिराः[2] श्रेष्ठाश्चरा निन्द्याः मध्यमाश्चोभये स्मृताः ।
मध्यमे शेषिताः सर्वे शुभाः स्युः कर्णवेधने ॥ ९६

रन्ध्रादिव्ययगो[3] नेष्टो गुरुः [b]शेषः सुशोभनः ।
सप्ताष्टमगतः शुक्रो न शुभोऽन्यत्र शोभनः ॥ ९७

त्रिषडायगताः[4] पापाः शुभाः कर्णस्य वेधने ।
अष्टमस्था ग्रहाः[5] सर्वे नेष्टाः [c]कर्णस्य वेधने ॥ ९८

चन्द्रो[6] द्वित्रिसुतस्त्रीषु धर्मकर्मगतः शुभः ।
शुक्लसूत्रसमायुक्तताम्रसूच्याथ[7] वेधयेत् ॥ ९९

शातकुम्भमयी[8] सूची वेधने शोभनप्रदा ।
राजती वाऽऽयसी वाऽपि यथाविभवतः शुभा ॥ १००

सौवर्णी[9] राजपुत्रस्य राजती विप्रवैश्ययोः ।
शूद्रस्य चायसी सूची मध्यमाऽष्टाङ्गुलात्मिका ॥ १०१

पञ्चाशद्दिवसात्त्रिघ्नात्पश्चात्त्रिहतषष्ठ्यहात्[10][d] ।
अर्वागेवोत्तमा भुक्तिर्मास्यन्येऽप्येवमूचिरे ॥ १०२

[1] वी. मि. सं., p. 260; प्र. पारि., p. 182; चित्राश्व; [a] श्रविष्ठा.
[2] प्र. पारि., p. 182.
[3] वी. मि. सं., p. 261; प्र. पारि., p. 182; [b] शिष्टेषु शोभनः । (शुभो रन्ध्रगतः सौम्यो नष्टः शेषेषु शोभनः).
[4] वी. मि. सं., p. 261; प्र. पारि., p. 182.
[5] वी. मि. सं., p. 261; प्र. पारि., p. 182; [c] स्युः कर्णवेधने.
[6] वी. मि. सं., p. 261; प्र. पारि., p. 182.
[7] वी. मि. सं., p. 262.
[8] वी. मि. सं., p. 262.
[9] वी. मि. सं., p. 262.
[10] वी. मि. सं., p. 268; प्र. पारि., p. 186; वै. व., p. 141; [d] षष्टिकात्.

पक्षच्छिद्रां[1] च नवमीं यत्नेनैव विवर्जयेत् ।
रविभौमार्कवारांश्च[2] बुद्धिमानन्नकर्मणि ॥ १०३

मासि[3] षष्ठेऽथ सौरेण वाष्टमे दशमेऽपि वा ।
द्वादशे वा परं विद्याद्युग्मेषु शिशुजन्मतः ॥ १०४

पौष्णादितीन्दुहस्ताश्वित्वाष्ट्रवैष्णववासवाः[4][a] ।
रोहिणीमैत्रतिष्याश्च वारुणश्चोत्तरात्रयम् ॥ १०५

श्रविष्ठा[5] च[b] शुभा ह्येते षोडशान्नाशने शुभाः ।
न[6] वैधृतौ व्यतीपाते विष्ट्यां गण्डातिगण्डयोः ॥ १०६

शुक्रारज्ञाः[7] क्रमाद्याताः सप्तमाष्टमधर्मभे ।
भोज्यभोक्त्रोर्नवे त्वेते सर्वदा मरणप्रदाः ॥ १०७

अनुक्तेऽपि च यत्स्थाने स्थितो जीवबलो ग्रहः ।
मित्रदृष्टः स्ववर्गे वा स्वतुङ्गे वाऽतिशोभनाः ॥ १०८

शूले वज्रे न परिघे बालान्नप्राशनं [c]हितम् ।
प्रतिसंवत्सरान्त्यर्क्षे[8] वक्ष्ये नृणां विधिं परम् ॥ १०९

मध्वाज्यदधिसंयुक्तदूर्वामृत्युञ्जयेन तु ।
जुहुयाच्च सहस्रं वा अष्टाविंशतिमाहुतीः ॥ ११०

[1] वी. मि. सं., p. 270.

[2] वी. मि. सं., p. 270.

[3] प्र. पारि., p. 186.

[4] वी. मि. सं., p. 271; प्र. पारि., p. 186; [a] वायव्यवैष्णवाः, सं. कौ., p. 103.

[5] वी. मि. सं., p. 271; प्र. पारि., p. 186; [b] तारका ह्येताः, सं. कौ., p. 103.

[6] वी. मि. सं., p. 272; सं. कौ., p. 103.

[7] प्र. पारि., p. 187; [c] शुभम्.

[8] प्र. पारि., p. 190.

ततोऽपराह्णे सम्प्राप्ते कृत्वा कौतुकमङ्गलम् ।
ग्रहपूजां प्रकुर्वीत नक्षत्राधिपपूजनम् ॥ १११

आयुष्यहोमं कृत्वाऽथ श्रोत्रियानथ भोजयेत् ।
दत्वा गोभूहिरण्यादि तथा स्वर्णादिनिर्मितम् ॥ ११२

बध्वाथ कटिसूत्रं च वस्त्रं च परिधापयेत् ।
नक्षत्रे[1] खण्डिते येन प्राप्तः कालश्च कर्मणः ।
नक्षत्रकर्माण्यत्रैव तिथिकर्म तथैव च ॥ ११३

चूडाकर्म[2] त्रिवार्षिके ... ... ... ।
तृतीये[3] पञ्चमे वर्षे गते भागतृतीयके ।
तदा चौलं प्रकर्तव्यमिति केचित्प्रचक्षते ॥ ११४

तृतीयेऽपि[4 a] शिशोर्गर्भाज्जन्मतो वा विशेषतः ।
पञ्चमे[5] सप्तमे वाऽपि स्त्रियाः पुंसोऽथवा समम् ॥ ११५

उत्तरायणगे[6] सूर्ये विशेषात्सौम्यगोळके ।
अधिमासस्तु निन्द्यः स्यात्संसर्पांहस्पती तथा ॥ ११६

दशपञ्चात्मकतिथौ[7] कृष्णपक्षे त्रिधा कृते ।
अशुभं चान्त्यभागे स्यात्पूर्वभागद्वये शुभम् ॥ ११७

शुक्लपक्षे[8] शुभं प्रोक्तं चौलं कृष्णे शुभेतरत् ।
अशुभोऽन्त्यत्रिभागः स्यात्कृष्णपक्षे त्रिधा कृते ॥ ११८

[1] वी. मि. सं., p. 290.
[2] हे. प. का., p. 742.
[3] प्र. चि., p. 112.
[4] वी. मि. सं., p. 297; प्र. पारि., p. 199; पु. चि., p. 436; अब्दे.
[5] वी. मि. सं., p. 297; प्र. पारि., p. 199; पु. चि., p. 436.
[6] वी. मि. सं., p. 300.
[7] वी. मि. सं., p. 302.
[8] प्र. पारि., p. 200.

द्वादशीं[1] चाष्टमीं रिक्तां षष्ठीं प्रतिपदं तथा ।
हित्वा शेषासु तिथिषु [a]क्षौरकर्म शुभावहम् ॥ ११९

शुभग्रहाणां[2] वाराः [b]स्युः पूजिता ब्रह्मणो मतम् ।
सोमवारः [c]सिते पक्षे कृष्णे [d]पक्षेऽतिगर्हितः ।
बुधवारोऽशुभः[e] प्रोक्तः पापग्रहयुते बुधे ॥ १२०

पापग्रहाणां[3] वारादौ[f] विप्राणां [g]तु [h]शुभो रवेः ।
क्षत्रियाणां क्षमासूनोर्विट्शूद्राणां [i]शनेः [j]शुभः ।
पापग्रहाणां[4] वारांशा निन्दिताः शुभकर्मणि ॥ १२१

त्रीण्युत्तराणि[5] वायव्यं रोहिणी वारुणं तथा ।
क्षौरे [k]षण्मध्यमाः [l]प्रोक्ता शेषा द्वादश गर्हिताः ॥ १२२

हस्ताश्विविष्णुपौष्णाश्च[6m] श्रविष्टादित्यपुष्यभम् ।
सौम्यचित्रे [n]नवक्षौरे उत्तमा नव तारकाः ॥ १२३

निधने[7] जन्मनक्षत्रे वैनाशे चन्द्रभेऽष्टमे ।
विपत्करवधे क्षौरं प्रत्यरे च विवर्जयेत् ॥ १२४

[1] वी. मि. सं., p. 302; पु. चि., p. 436; [a] चौलकर्म.

[2] वी. मि. सं., p. 303; प्र. पारि., p. 201; [b] तु; [d] वि, मु. टी., p. 147; [c] सितः शस्तः; [d] तु; [e] वारः शुभः प्रोक्तः पापग्रहयुतोऽपि सन् । शुभग्रहाणामित्यर्धं न दृश्यते.

[3] वी. मि. सं., p. 303; प्र. पारि., p. 201; [f] वाराद्याः; [h] शुभाः; [j] शुभाः, मु. टी., p. 147; [g] शुभदं; [j] शुभम्, प्र. चि., p. 112; [g] शुभदं; [i] शनौ शुभम्.

[4] वी. मि. सं., p. 303; प्र. पारि., p. 201.

[5] वी. मि. सं., pp. 304 and 320; 320 तमपुटे; [l] ताराः, प्र. पारि., p. 200; सं. कौ., p. 108; प्र. चि., p. 112; [k] च.

[6] वी. मि. सं., pp. 304 and 319; 319 तमे पुटे; [m] पौष्णानि श्रवणादितिपुष्यकाः; [n] क्षौरेषूत्तमाः, प्र. पारि., p. 200; [m] "पौष्णाश्च" इत्येतल्लिखिते न दृश्यते । सं. कौ., p. 108; [m] पौष्णानि, प्र. चि., p. 112; [m] पौष्याश्च.

[7] प्र. पारि., p. 112.

सम्पदि[1] क्षेमभे मित्रे साधके भेऽतिमित्रभे ।
क्षौरकर्म प्रशस्तं स्याच्छोभनांशगते विधौ ॥ १२५

आद्योऽंशो विपदि त्याज्यः प्रत्यरे चरमोऽशुभः ।
वधे त्याज्यस्तृतीयोऽंशः शेषांशा अतिशोभनाः ॥ १२६

जन्माष्टमे विधौ याते क्षौरमायुःक्षयाय च ।
तस्माच्चन्द्रोऽष्टमे वर्ज्यः सर्वथा क्षुरकर्मणि ॥ १२७

वैनाशिकाख्यनक्षत्रे अष्टाशीत्यंशकं विना ।
शिष्टांशाः शुभदाः सर्वे जन्मनीन्दुगतांशकात् ॥ १२८

जन्मर्क्षं कर्मनक्षत्रं आधानर्क्षं च वर्जयेत् ।
सर्वथा क्षौरकर्माद्यं कृतं चेल्लुप्ततां व्रजेत् ॥ १२९

अस्तग्रहाणां[2] वर्गाश्च तादृग्वर्गगतः शशी ।
पापग्रहाणां वर्गश्च वर्ज्याः क्षौरे विशेषतः ॥ १३०

अष्टमस्था[3] ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः ।
शुक्रश्च[4][a] निधने क्षौरे सर्वसम्पत्प्रदः शिशोः ॥ १३१

गुरुर्भृगुर्वा[5] चन्द्रो वा शुभांशस्थो बलान्वितः ।
लग्नादुपचये[b] क्रूराश्चौलयोगः शुभावहः ॥ १३२

गर्भे[6] मातुः कुमारस्य न कुर्याच्चौलकर्म तु ।
पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ॥ १३३

[1] प्र. पारि., p. 200.
[2] वी. मि. सं., p. 307.
[3] वी. मि. सं., p. 308; प्र. पारि., p. 201.
[4] वी. मि. सं., p. 308; प्र. पारि., p. 201; [a] तु.
[5] वी. मि. सं., p. 308; प्र. पारि., p. 202; [b] तथोपचयगो लग्नात् क्षौर.
[6] सं. म., p. 30; बा. आ., p. 32.

अथास्मिन्[1a] योगान्वक्ष्यामि दुर्लभे प्रोक्तलक्षणे।
अहं [b]तद्दोषसङ्घाततूलवातान् लघौ दिने ॥ १३४

यथोक्तकालाभावे[2] तु यथालाभं [c]शुभो बलैः।
योगो दोषहरः [d]कुर्याद्दोषाणामपवादनम् ॥ १३५

सितेन्दुजीवसौम्यानामंशके[3] दिवसोदये।
होराद्रेष्काणलग्ने[4] च चूडाकर्माऽतिशोभनम् ॥ १३६

त्रिकोणकण्टके[5e] वाऽपि [f]सत्कर्मणि गते विधौ।
गुरुर्वातिबली[g] प्रोक्तश्चौलयोगः शुभावहः ॥ १३७

मीने[6] शुक्रेण[h] संयुक्ते भवे भानौ चतुष्टये।
गुरौ [i]यातेऽथवा योगः [j]शुभदश्चौलकर्मणि ॥ १३८

अनिष्टस्थानगो[7] यः स्याद्ग्रहो लग्नेशवीक्षितः।
गुरुणा बलिना दृष्टो यदीष्टस्थानगो भवेत् ॥ १३९

मीने[8k] मेषे वृषे लग्ने ससिते भवगे रवौ।
बुधोदये वा योगाः स्युश्चूडाकर्मणि [l]शोभनाः ॥ १४०

[1] वी. मि. सं., p. 308; प्र. पारि., p. 202; [a] अत्र योगं; [b] वात-लघौ.

[2] वी. मि. सं., p. 308; प्र. पारि., p. 202; [c] बलैः शुभः; [d] वाहनम्.

[3] वी. मि. सं., p. 308.

[4] वी. मि. सं., p. 308.

[5] वी. मि. सं., p. 308; प्र. पारि., p. 202; [e] णे केन्द्रगे; [f] निरते; [g] बलः प्रोक्तः क्षौर.

[6] वी. मि. सं., p. 309; प्र. पारि., p. 202; [h] शुक्रे च लग्नस्थे भवनाथौ; [i] चाये; [j] क्षुर.

[7] वी. मि. सं., p. 309; प्र. पारि., p. 202.

[8] वी. मि. सं., p. 309; प्र. पारि., p. 202; [k] मीनमेषवृषे; [l] पूजिताः.

घटे[1] सशुक्रे लग्नस्थे [a]सबुधे व्ययगे रवौ ।
त्रिकोणगे[2] गुरौ चन्द्रे चूडायोगोऽयमुत्तमः ॥ १४१

भवे[3b] व्ययोदये भानुबुधशुक्रा [c]यदा स्थिताः ।
चन्द्रे [d]शुभांशके केन्द्रे चूडायोगः शुभावहः ॥ १४२

त्रिषडायेषु[4e] पापेषु शुभाः [f]केन्द्रत्रिकोणयोः ।
एको द्वौ वा यथालाभं चूडायोगः शुभावहः ॥ १४३

यमे[5] कर्किणि सिंहे च शशिजे भृगुजे [g]विधौ ।
रवौ भवे व्यये वाऽपि [h]योगश्चौले शुभावहः ॥ १४४

यमारार्कांशगे[6] लग्ने द्रेष्काणे दिवसे तथा ।
कालहोरोदये चैव क्षौरमायुःक्षयावहम् ॥ १४५

लग्नेन्दुराशिगौ[7] द्वौ द्वौ भवनाथयुतेक्षितौ ।
भवे[8] कश्चिद्बली स्याचेत् चूडायोगोऽयमुत्तमः ॥ १४६

लग्नेन्दुराशिगौ[9] द्वौ द्वौ भवनाथयुतेक्षितौ ।
भवेत्कश्चिद्बली तत्र चूडायोगोऽयमुत्तमः ॥ १४७

सिते[10] पक्षे विधुः प्राणी भवे लग्नाद्ग्रहो बली ।
लग्नस्योपचये नाथश्चूडायोगः शुभावहः ॥ १४८

[1] वी. मि. सं., p. 309; प्र. पारि., p. 202; [a] बुधे व्ययगते.
[2] वी. मि. सं., p. 309; प्र. पारि., p. 202.
[3] वी. मि. सं., p. 309; प्र. पारि., p. 202; [b] भवव्य; [c] यदि; [d] शुभांशगे.
[4] वी. मि. सं., p. 309; प्र. पारि., p. 202; [e] यगताः पापाः; [f] कोणगाः.
[5] वी. मि. सं., p. 309; प्र. पारि., p. 202; [g] बुधे; [h] क्षौरे.
[6] वी. मि. सं., p. 309.
[7] वी. मि. सं., p. 310.
[8] वी. मि. सं., p. 309.
[9] प्र. पारि., p. 202.
[10] वी. मि. सं., p. 309.

विद्यारम्भो[1] व्रतोद्देशः क्षौरं चैव विशेषतः ।
गलग्रहे न कर्तव्यं यदीच्छेत्पुत्रजीवितम् ॥ १४९

जन्माष्टमे[2] विधौ याते चौळमायुःक्षयाय च ।
तस्माज्जन्माष्टमं वर्ज्यं सर्वदा क्षुरकर्मणि ॥ १५०

रन्ध्रेशः[3] स्वांशकस्वोच्चस्वक्षेत्रोपचयर्क्षगः ।
अष्टमस्थस्य दोषोऽयं विनश्यति न संशयः ॥ १५१

लग्नादष्टमराशीशः[4] केन्द्रगः शुभवीक्षितः ।
यद्यप्यष्टमगस्योक्तं[5] दोषमाशु व्यपोहति ॥ १५२

गर्भिण्यां[6] मातरि शिशोः क्षौरकर्म न कारयेत् ।
शताभिषेकेऽप्येवं स्यात्कालो वेदव्रतेष्वपि ॥ १५३

वैधव्यं[7] च विवाहे स्याज्जडत्वं व्रतबन्धने ।
चूडायां च शिशोर्मृत्युर्विघ्नं यात्राप्रवेशयोः ॥ १५४

विट्शूद्राणां[8] शनेः शुभः ... ... ।
राजकार्यनियुक्तानां[9] नटानां रूपजीविनाम् ।
श्मश्रुरोमनखच्छेदे नास्ति [a]कालविशोधनम् ॥ १५४अ

द्वितीयजन्मनः[10] पूर्वमारभेताक्षरान्[b] सुधीः ।

[1] सं. कौ., p. 111.
[2] वी. मि. सं., p. 310.
[3] वी. मि. सं., p. 311.
[4] वी. मि. सं., p. 311.
[5] वी. मि. सं., p. 311.
[6] वी. मि. सं., p. 312.
[7] सं. म., p. 113; वी. मि. सं., pp. 313 and 385.
[8] वी. मि. सं., p. 318.
[9] वी. मि. सं., p. 321; पु. चि., p. 456; [a] विधिर्नृणाम्.
[10] वी. मि. सं., p. 321; ध. प्र., p. 59; [b] अक्षराभ्यासमाचरेत्.

मौञ्जीबन्धः[1] ततः पश्चाद्वेदारम्भो विधीयते ॥ १५५

पञ्चसप्तममेवाष्टपूर्वं[2] स्यान्मौञ्जिबन्धनम् ।
तत्र चैवाक्षराभ्यासः कर्तव्यः सूदगायने ॥ १५६

बृहस्पतिमतं चैव तदभावेऽधुनोच्यते ।
सौम्यायने प्रदोषादि चिन्तयेन्मौञ्जिबन्धनात् ॥ १५७

यां[3] तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।
सा[4] तिथिर्मुनिभिः प्रोक्ता दानाध्ययनकर्मसु ॥ १५८

प्राङ्मुखो[5] गुरुरासीनो वरुणाभिमुखं शिशुम् ।
अध्यापयेच्च प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥ १५९

उपदेष्टाऽनुमन्ता[6] च लोके तुल्यफलौ स्मृतौ ।
एकलव्येनानुपदेष्टापि द्रोणाचार्यो गुरुः कृतः ॥ १६०

शमयन्त्या[7] सप्ताहात् कम्पादिकृतं निमित्तमाश्वेव ।
अतिवर्षणोपवासव्रतदीक्षाजप्यहवनानि ॥ १६१

वृष्टिः[8] करोति दोषं तावन्नाकामसम्भवा राज्ञः ।
यावन्न भवति याने नरपशुचरणाङ्किता वसुधा ॥ १६२

अग्न्याधेयं[9 a] प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः[b] ॥ १६३

[1] ध. प्र., p. 59.
[2] ध. प्र., p. 59.
[3] बो. ध. वि., p. 199.
[4] बो. ध. वि., p. 199.
[5] ज्यो. तत्व., p. 656.
[6] आ. तत्व., p. 347; ज्यो. तत्व., p. 658; पूर्वार्ध परम्.
[7] ज्यो. तत्व., p. 710; मल. तत्व., p. 833.
[8] मल. तत्व., p. 820.
[9] हे. प. का., p. 40; हे. व्रत., p. 244; [a] धानं; [b] मेखला, पु. चि., p. 19.

माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ।
गर्भाष्टमेऽब्दे[1] विप्रस्य क्षत्रस्यैकादशे तथा ।
वैश्यस्य द्वादशे वर्षे कार्यं मौञ्जीनिबन्धनम् ॥ १६४

कृष्णाजिनं[2] ब्राह्मणस्य रौरवं क्षत्रियस्य तु ।
बस्ताजिनं[3] तु वैश्यस्य सर्वेषां वा गवाजिनम् ॥ १६५

विनर्तुना[4] वसन्तेन कृष्णपक्षे गळग्रहे ।
अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥ १६६

श्रीविद्याबलकारि[5] चोपनयनं प्रोक्तं वसन्ते शिशोः
  ग्रीष्मे क्षत्रियवैश्ययोः शुभकरं पूर्वाह्णपक्षे सिते ।
कृष्णे च प्रतिपद्दिनं शुभकरं नैकादशी द्वादशी
  रिक्तानध्ययनं विना शुभदिने चन्द्रे शुभैर्वीक्षिते ॥ १६७

गोचराष्टमवर्गाभ्यां[6] गुरुशुद्धिर्न लभ्यते ।
तदोपनयनं कार्यं चैत्रे मीनगते रवौ ॥ १६८

गुरौ[7] भृगौ नष्टगते च चैत्रे
  कार्यं न मङ्गल्यमनर्थकारि ।
मीनस्थितेऽर्के खलु चैत्रमासे
  शुभप्रदो ब्राह्मणमौञ्जिबन्धः ॥ १६९

सिंहाळी[8] वर्जयेल्लग्ने ग्रहैरष्टमवर्जितैः ।

[1] हे. प. का., p. 746.
[2] स्मृ. च. सं., p. 74.
[3] स्मृ. च. सं., p. 74.
[4] वी. मि. सं., p. 354; सं. कौ., p. 115.
[5] वी. मि. सं., p. 354.
[6] वी. मि. सं., p. 357.
[7] वी. मि. सं., p. 357.
[8] नि. व्या., p. 836.

मृगकुंभगते[1] भानौ मध्यमं मीनमेषयोः ।
उत्तमं गोयुगस्थेऽर्के ह्यधमं चोपनायनम् ॥ १७०

शुक्रे[2] नष्टे तथा जीवे दुर्बले चन्द्रभास्करे ।
व्रतोपनयनं कार्यं चैत्रे मीनगते रवौ ॥ १७१

अतीव[3] नष्टे सुरराजपूज्ये
सिंहस्थिते वा द्विजपुङ्गवानाम् ।
व्रतं[4] प्रशस्तं खलु मासि चैत्रे
कर्तुश्चिरायुः सुखसम्पदे स्यात् ॥ १७२

जीवभार्गवयोरस्ते[5] सिंहस्थे देवतागुरौ ।
मेखलाबन्धनं शस्तं चैत्रे मीनगते रवौ ॥ १७३
द्वादश्येकादशी[6] चैव मध्यमास्तिथयस्तथा ।
मध्यमाश्च[a] प्रशंसन्ति चन्द्रे च बलसंयुते ॥ १७४
द्वितीया[7] पञ्चमी षष्ठी सप्तमी दशमी तथा ।
त्रयोदशी तृतीया च शुक्ले [b]श्रेष्ठाः प्रचोदिताः ॥ १७५
कृष्णे[8] चैव प्रशस्ताः स्युस्तिथयश्चोपनायने ।
शुक्लपक्षः[9] शुभः प्रोक्तः कृष्णश्चाऽन्त्यत्रिकं विना ।

[1] नि. व्या., p. 931.

[2] वी. मि. सं., p. 357; नि. व्या., p. 932.

[3] वी. मि. सं., p. 357.

[4] वी. मि. सं., p. 357.

[5] वी. मि. सं., p. 357; नि. व्या., p. 932.

[6] वी. मि. सं., p. 359; पु. चि., p. 438; [a] कृष्णे पञ्च प्रशंसन्ति तिथयश्चोपनायने.

[7] वी. मि. सं., p. 359; पु. चि., p. 438; [b] श्रेष्ठा प्रकीर्तिता.

[8] वी. मि. सं., p. 359.

[9] वी. मि. सं., p. 359; च. म. सं., p. 14; वि. पारि., p. 474; सं. कौ., p. 116; बा. आ., p. 46.

मिथुने[1] संस्थिते भानौ ज्येष्ठमासो न दोषकृत् ॥ १७६

भृगोरङ्गिरसो[2] मौढ्ये कर्तव्यं नोपनायनम् ।
हस्तत्रये[3] पुष्यधनिष्ठयोश्च
पौष्णाश्विसौम्यादितिविष्णुभेषु ।
शस्ते तिथौ चन्द्रबलेन युक्ते
कार्यौ द्विजानां व्रतबन्धमोक्षौ ॥ १७७

चन्द्रे[4] बलयुते लग्नाच्छुभभावे शुभेक्षिते ।
चतुर्दशीं प्रशंसन्ति कुमारे वयसाधिके ॥ १७८

कृष्णे[5] च [a]प्रथमा पूज्या कदाचिच्छुभगे विधौ ।
पापग्रहाणां[6] वाराः स्युर्न शुभाश्चन्द्रवासरः ।
सिते[7] पक्षे प्रशस्तः स्यात्कृष्णे वारो विधोर्न हि ॥ १७९

शुभो[8] बुधो नास्तमितः पापग्रहयुतो न च ।
बह्वृचानां[9] गुरोर्वारो[b] यजुर्वेदजुषां [c]कवेः ।
सामगानां [d]धरासूनोरथर्वविदुषां [e]रवेः ॥ १८०

त्रिषूत्तरेषु[10] रोहिण्यां हस्ते मैत्रे च वासवे ।
त्वाष्ट्रे [f]सौम्यपुनर्वस्वोः [g]प्रशस्तं ह्युपनायनम् ॥ १८१

[1] वि. पारि., p. 474.
[2] च. म. सं., p. 14.
[3] वि. पारि., p. 476.
[4] वी. मि. सं., p. 360.
[5] वी. मि. सं., p. 360; पु. चि., p. 438; [a] प्रथमाः पूज्याः.
[6] वी. मि. सं., p. 364; पु. चि., p. 439.
[7] वी. मि. सं., p. 364; पु. चि., p. 439.
[8] पु. चि., p. 439.
[9] वी. मि. सं., p. 365; प्र. पारि., p. 215; [d] सूनुः; [e] रविः, वि. पारि., p. 476; [b] वारे; [c] बुधे, सं. कौ., p. 117.
[10] वी. मि. सं., p. 366; प्र. पारि., p. 216; वि. पारि., p. 477; [g] उत्तमम्, बा. आ., p. 61; [f] सौम्ये.

वारुणे[1] वैष्णवे पुष्ये वायव्ये प्रौष्ठपद्यपि ।
आश्विने षट्सु भेषूक्तं मध्यमं चैव पौष्णभे ॥ १८२

कृत्तिका[2] भरणीमूलज्येष्ठार्द्रासु विशाखयोः ।
पूर्वात्रये च सार्पर्क्षे न कुर्यादौपनायनम् ॥ १८३

व्याघातं[3] परिघं वज्रं व्यतीपातं च वैधृतिम् ।
गण्डातिगण्डशूलं च विष्कम्भं चैव वर्जयेत् ॥ १८४

शिष्टाष्टादशयोगेषु[a] प्रशस्तं ह्यौपनायनम् ।
बवादीनां[4] तु षट्कं स्यादुपनाये सुपूजितम् ।
शकुन्यादीनि विष्टिं च वर्जयेत्तु विशेषतः ॥ १८५

झषचापकुळीरस्थो[5 b] जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥ १८६

एवं[6] शुभेऽब्दे देवेज्यो जन्मकर्मव्ययारिभिः ।
तृतीयबन्धुरन्ध्रैश्च विनाऽन्यत्र शुभप्रदः ॥ १८७

विशेषादेवमन्त्री[7] चेदशुभे गोचरे स्थितः ।
चापे[8] मीने कुळीरे च शुभदश्चोपनायने ॥ १८८

अशुभेऽब्दे[9] ग्रहास्सर्वेऽशुभगोचरगा यदि ।
शान्त्यभावाच्छमं नैव यात्यब्दः कालमृत्युवत् ॥ १८९

[1] बा. आ., p. 68.
[2] वी. मि. सं., p. 367; बा. आ., p. 68.
[3] वी. मि. सं., p. 370; पु. चि., p. 440; [a] शिष्टेत्यर्धं न दृश्यते.
[4] वी. मि. सं., p. 371.
[5] वी. मि. सं., p. 373; प्र. पारि., p. 213; [b] झष.
[6] वी. मि. सं., p. 373.
[7] वी. मि. सं., p. 373.
[8] वी. मि. सं., p. 373.
[9] प्र. पारि., p. 213.

अथर्वणप्रदिष्टाः स्युः शतं सैकं तु मृत्यवः ।
एकस्तेषां सकालः स्यादन्येऽप्यागन्तवो नृणाम् ॥ १९०

आगन्तवो महाशान्त्या शान्तिं यान्तीह मृत्यवः ।
न कालसंज्ञितो मृत्युः यायाच्छान्त्या शमं बलात् ॥ १९१

तस्माद्ग्रहेभ्यः[1] कालत्वाद्बली संवत्सरः स्मृतः ।
शान्तिर्ग्रहाणां कर्तव्या न तु संवत्सरस्य च ॥ १९२

भृगोरङ्गिरसो[2] मौढ्ये कर्तव्यं नोपनायनम् ॥ १९३

तयोर्बाल्ये च वार्धक्येऽधिमासे दक्षिणायने ।
द्वितीया[3] पञ्चमी षष्ठी सप्तमी दशमी तथा ।
त्रयोदशी तृतीया च शुक्ले श्रेष्ठाः प्रचोदिताः ॥ १९४

द्वादश्येकादशी[4] चैव मध्यमौ च तिथी विना ।
मध्यमौ च प्रशंसन्ति चन्द्रे तु बलसंयुते ॥ १९५

कृष्णे चैव प्रशस्ताः स्युस्तिथयश्चोपनायने ॥ १९५अ

अस्तं[5] गते गुरौ शुक्रे वृद्धे बाले मलिम्लुचे ।
व्रतारम्भापवर्गं[a] च न कुर्यान्मौञ्जिबन्धनम् ॥ १९६

आधानं[6] यज्ञकर्मादि प्रायश्चित्तव्रतानि च ।
न कुर्यान्मलमासेऽपि शुक्रगुर्वोरुपप्लवे ॥ १९७

निष्क्रमं[7] जातकर्माणि काम्यं वृषविसर्जनम् ॥ १९७अ

[1] वी. मि. सं., p. 374; प्र. पारि., p. 213.
[2] प्र. पारि., p. 214.
[3] प्र. पारि., p. 215.
[4] प्र. पारि., p. 215.
[5] स. म., p. 168; तिथ्य, p. 251; [a] अपवर्गौ.
[6] स. म., p. 168.
[7] स. म., p. 168.

उपनीतो[1] रवेर्लग्ने हन्यते भूपतेरुषा ।
तेन दृष्टे युते लग्ने बहुरोगी द्विजो भवेत् ॥ १९८

चन्द्रादर्थे[2] व्यये वाऽपि तथैवोभयतो ग्रहाः ।
सुनफाप्यनफा चैव योगा दुरुधुराः शुभाः ॥ १९९

चन्द्रात्स्मरारिरन्ध्रेषु[3] यद्येकस्मिन् शुभग्रहे ।
स्थितेऽधियोगसंज्ञः स्याच्छुभयोगो द्विजन्मनि ॥ २००

मीने[4] स्वांशगते लग्ने वृषे तत्त्वकला बुधे ।
सर्वेऽपि तुङ्गाः शुभदाः शुभयोगो द्विजन्मनि ॥ २०१

जीवेन्दू[5] कर्कगौ लग्ने सितज्ञौ मेषगे रवौ ।
वृषांशेऽन्ये त्रिषष्ठाये काले कुर्याद्विजन्म तत् ॥ २०२

अनिष्टस्थानगो[6] यश्च तस्य चाष्टमवर्गके ।
तद्युक्तराशिः बह्वक्षः सोऽसौ दोषं न यच्छति ॥ २०३

एते[7] शुभप्रदा योगा द्वितीये जन्मनीरिताः ।
सत्स्वप्यन्तदोषेषु शुभं दद्युर्निजैर्बलैः ॥ २०४

यथोक्तकालदौर्लभ्याद्योगान्वच्मि[8] शुभप्रदान् ।
द्विजन्मकालसम्भूतदोषाणां कुलनाशनम् ॥ २०५

केन्द्रे[9] त्रिकोणे वा जीवे भानौ शुक्रेऽथवा व्यये ।
द्वितीये ज्ञे शुभो योगो द्विजानां चोपनायने ॥ २०६

[1] वी. मि. सं., p. 377; प्र. पारि., p. 216.
[2] प्र. पारि., p. 217.
[3] प्र. पारि., p. 217.
[4] प्र. पारि., p. 217.
[5] प्र. पारि., p. 217.
[6] प्र. पारि., p. 218.
[7] प्र. पारि., p. 218.
[8] प्र. पारि., p. 218.
[9] प्र. पारि., p. 218.

लग्नार्थभ्रातृभे[1] शुक्रे जीवो वाऽन्योऽथ कण्टके ।
त्रिषडेकादशे पापे न कोऽप्यष्टमगो यदि ॥ २०७

गुरौ[2] केन्द्रे भवे भानौ चन्द्रे शुभनवांशके ।
शुभग्रहदृशा युक्तः शुभराश्युदयो यदि ॥ २०८

भृगौ[3] मीने वृषे चापे जीवे केन्द्रत्रिकोणगे ।
कर्किचापझषस्थेऽस्मिन् योगः शुभग्रहोदये ॥ २०९

दशमायोदयान्[4] याताः शुक्रभान्विन्दुजाः क्रमात् ।
चन्द्रे शुभनवांशस्थे योगः स्यादौपनायने ॥ २१०

बुधार्कशुक्राः[5] कर्मायलग्नगाः क्रमशो बली ।
चन्द्रः शुभांशगो योगो द्विजन्मनि शुभोदये ॥ २११

मेषगोकर्कटान्[6] याताः भानुशुक्रेन्दवः क्रमात् ।
यमोदये भवेद्योगो द्विजोपनयने शुभः ॥ २१२

जीवे[7] शुक्रेऽथवा मीने लग्ने भवगते रवौ ।
व्यये कर्मणि वा सौम्ये शुभयोगो द्विजन्मनि ॥ २१३

दोषे[8] बलविहीने च गुणे बहुबलैर्युते ।
अपवादबलैर्दोषप्रध्वंसो भावगे शुभे ॥ २१४

प्राप्तमभ्युदयश्राद्धं[9] पुत्रसंस्कारकर्मणि ।
पत्नी रजस्वला चेत्स्यान्न कुर्यात्तत्पिता तदा ॥ २१५

[1] प्र. पारि., p. 218.
[2] प्र. पारि., p. 218.
[3] प्र. पारि., p. 218.
[4] प्र. पारि., p. 218.
[5] प्र. पारि., p. 218.
[6] प्र. पारि., p. 218.
[7] प्र. पारि., p. 218.
[8] प्र. पारि., p. 218.
[9] वि. पारि., Part I, p. 480; Part II, p. 4.

अष्टैतान्यव्रतघ्नानि[1] आपो[a] मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ २१६

कार्पासकं[2] सदा दद्याच्छुचिक्षेत्रे विशोधितम् ।
जीवभर्तृकया नार्या ब्राह्मण्या सूत्रकं कृतम् ॥ २१७

ब्राह्मणस्याजिनं[3] कार्ष्णं रौरवं क्षत्रियस्य च ।
बास्तं[b] वैश्यस्य वासांसि शाणक्षौमाविकानि च ॥ २१८

अवकीर्णिव्रतं[4] कुर्यात्सप्तरात्रमसंशयम् ।
नर्मदोत्तरभागे[5][c] तु कर्तव्यं [d]सिंहसंयुते ।
कर्कटे[6] संस्थिते [e]भानावुपाकुर्यात्तु [f]दक्षिणे ॥ २१९

शान्तिं[7] कृत्वा [g]तयोर्वाऽपि शुक्रदेवेन्द्रमन्त्रिणोः ।
होमैर्दानैर्जपैर्वाऽपि तयोरुदितमन्त्रकैः ॥ २२०

कर्तव्यं[8] श्रावणं विप्रैरिति जीवेन भाषितम् ।
वेदोपाकरणे[9] प्राप्ते कुळीरे संस्थिते रवौ ।
उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके ॥ २२१

[1] वि. पारि., p. 494; प्र. पारि., p. 240; [a] ह्यापो मूलं घृतम्.

[2] वै. व., p. 154.

[3] वी. मि. सं., p. 414; वै. व., p. 160; [b] बस्ताजिनं तु वैश्यस्य सर्वेषां वा गवाजिनम्.

[4] वै. व., p. 169.

[5] परा. आ., p. 129; च. म. सं., p. 57; [d] युक्तके, प्र. पारि., p. 246; [c] देशे, (वि. पारि., Part I, p. 511; Part II, p. 553; च. म. सं वत्पाठः) नि सि., Part II, p. 17; [d] युक्तके, वी. मि. सं., p. 97; [d] युक्तके.

[6] परा. आ., p. 129; च. म. सं., p. 57; प्र. पारि., p. 246; वि. पारि., p. 511; Part II, p. 553; नि. सि., p. 17; [f] दक्षिणः, वी. मि. सं., p. 97; [e] च.

[7] वै. व., p. 60; वि. पारि., p. 741; [g] तयोस्तद्वत्.

[8] वै. व., p. 60.

[9] वि. पारि., Part II, p. 553.

उपनीय[1] ददद्वेदमाचार्यः स उदाहृतः ।
एवं[2] दण्डादिभिर्युक्तं[a] संस्कृत्य [b]विधिवत् पिता ।
वेदमध्यापयेद्यत्नाच्छास्त्रं[c] मन्वादिकं तथा ॥ २२२

उपनीतो[3] द्विजो नित्यं गुरवे हितमाचरेत् ।
स्रज्ञालोजनसिकुथाद्यैर्न[4](?) स्यादौक्षणिकः क्वचित् ॥२२३

यानि[5] शास्त्रनिषिद्धानि तानि यत्नेन वर्जयेत् ।
दयादयं(?) गुरुहितं कुर्याद्देवर्षिपूजनम् ॥ २२४

अग्न्याधेयं[6] भैक्षचर्यामधःशय्यां प्रदोर्हिनम्(?) ।
आसमावर्तनात्कुर्यात्कृतोपनयनो द्विजः ॥ २२५

ब्राह्मणो[7a] वेदमूलः स्याच्छ्रुतिस्मृत्योः [b]समः स्मृतः ।
सदाचारस्य च तथा ज्ञेयमेतत्त्रिकं सदा ॥ २२६

अधीत्य[8] चतुरो वेदान् [c]सषडङ्गपदक्रमान् ।
स्मृतिहीना न शोभन्ते चन्द्रहीनेव शर्वरी ॥ २२७

[1] स्मृ. च. सं., p. 88.

[2] या. अप., p. 64; स्मृ. च. सं., p. 88; [b] तनयं, ब्रा. स., p. 3; [a] कैः; [b] तनयं, (च. म. सं., p. 31; [c] पश्चात् उत्तरार्धं परम्), परा. आ., p. 153; [a] कैः; [b] तनयं; [c] पश्चात् नि. प्र., Part I, p. 16; उत्तरार्धं परं, Part II, p. 241; स्मृ. च. सं. वत्पाठः, ग. आचा., p. 218; [b] तनयं, (वै. व., p. 179; स्मृ. मुक्ता. का., ग. आचा. वत्पाठः), वा. आ., p. 5; [c] पश्चात् उत्तरार्धं परम्.

[3] ब्र. कल्प., p. 58/2.

[4] ब्र. कल्प., p. 58/2.

[5] ब्र. कल्प., p. 58/2.

[6] ब्र. कल्प., p. 60.

[7] परा. आ. p. 153; ब्र. कल्प., p. 67; [a] ब्राह्मणा धर्ममूलत्वं; [b] समं स्मृतम्.

[8] स्मृ. च. सं., p. 10; परा. आ., p. 153; [c] साङ्गोपाङ्ग, स्मृ. मुक्ता. का., p. 13; [c] षडङ्गं च.

श्रुतिस्मृती[1] हि[a] विप्राणां चक्षुषी [b]परमे मते ।
काणस्तत्रैकया[2] हीनः द्वाभ्यामन्धः प्रकीर्तितः ॥ २२८

श्रुतिस्मृती[3] चक्षुषी द्वे द्विजानां न्यायवर्त्मनि ।
मार्गमुज्झन्ति तद्धीनाः प्रपतन्ति पथश्च्युताः ॥ २२९

प्रथमा[4] च द्वितीया च तृतीया पञ्चमी तथा ।
दशमी द्वादशी चैव एकादश्यः सुपूजिताः ॥ २३०

त्रयोदशी[5] सप्तमी च कदाचिच्छुभदे तिथी ।
यदा चन्द्रो बुधांशस्थो बुधजीवसितेक्षितः ॥ २३१

वारवर्गोदया[6] वर्ज्याः दर्शनं चार्किभौमयोः ।
मध्यमौ रविशीतांश्वोः शेषाणामुत्तमाः स्मृताः ॥ २३२

ताराश्चतस्रः[7] सौम्याद्याः विद्यारम्भे चतुर्मुखे ।
त्रीण्युत्तराणि पौष्णं च रोहिणी मध्यमानि च ॥ २३३

शेषाणि[8] भानि वर्ज्यानि विद्यारम्भे शुभेप्सुभिः ।
प्रत्येकमेकतो[9] वक्ष्ये वृत्रारेऽवहितः शृणु ।
भेर्यादिनटशास्त्रेषु[10] नाट्ये सामुद्रिकाह्वये ॥ २३४

[1] स्मृ. च. सं., p. 10; स्मृ. रत्ना., p. 5; [a] तु; [b] द्वे विनिर्मिते; स्मृ. मुक्ता. का., p. 13.

[2] स्मृ. च., p. 10; स्मृ. रत्ना., p. 5; स्मृ. मुक्ता. का., p. 13.

[3] कृ. रत्ना., p. 23.

[4] प्र. पारि., p. 257.

[5] प्र. पारि., p. 257.

[6] प्र. पारि., p. 257.

[7] प्र. पारि., p. 257.

[8] प्र. पारि., p. 257.

[9] प्र. पारि., pp. 257-8.

[10] प्र. पारि., p. 258.

कौटिल्य[1](ये ?)क्षुरिकादाने वेदशान्तिकमारभेत् ।
मल्ले महानसे खड्गे कृते तुरगवारणे ॥ २३५

शास्त्राभ्यासे[2] विरोधे च रौद्रतिष्योत्तरास्त्रयः ।
पौष्णश्रवणरोहिण्यः सौम्यवायू च शोभनाः ॥ २३६

मैत्रं[3] कुक्कुटशास्त्रे स्यादायुर्वेदगजाश्वयोः ।
तयोरारोहणे चैव पूषभानि शुभानि च ॥ २३७

अश्विनी[4] चाश्वविद्यायां गजविद्यासु शोभनम् ।
त्वाष्ट्रं चित्रकविद्यासु स्वातीमैत्रपुनर्वसू ॥ २३८

गजानां[5] जन्मभं सौम्यं पुमान्पुष्ये परेऽङ्गना ।
हयानां[6] वारुणाश्विन्यौ स्त्रीपुंसो जन्मभे वरे ॥ २३९

अर्थशास्त्रेषु[7] वैश्वाद्यत्रितयं पौष्णमेव च ।
अश्विनी रोहिणी सौम्यं पुष्यं हस्तादिपञ्चकम् ॥ २४०

ज्योतिराद्यङ्गशास्त्राणां[8] स्वाती हस्तपुनर्वसू ।
पौष्णं तिष्याश्विनीमूलवारुणाः स्युः सुपूजिताः ॥ २४१

वारुणं[9] योगशास्त्रेषु समरेष्विन्द्रभं शुभम् ।
हस्तस्वात्यश्विसौम्याः स्युरायुर्वेदे सुपूजिताः ॥ २४२

[1] प्र. पारि., p. 258.
[2] प्र. पारि., p. 258.
[3] प्र. पारि., p. 258.
[4] प्र. पारि., p. 258.
[5] प्र. पारि., p. 258.
[6] प्र. पारि., pp. 257-8.
[7] प्र. पारि., pp. 257-8.
[8] प्र. पारि., pp. 257-8.
[9] प्र. पारि., pp. 257-8.

वासवो[1] रेवती सौम्या रोहिणी तिष्यमैत्रभम् ।
पुनर्वसुश्च हस्तश्च शब्दशास्त्रे सुपूजिताः ॥ २४३

गणिते[2] रेवतीहस्तमैत्रतिष्यार्द्रवासवाः ।
ज्योतिःशास्त्रे[3] निमित्ते च रोहिणीवारुणौ शुभौ ॥ २४४

आदित्यवैष्णवस्वातीतिष्यहस्ताश्विवारुणाः[4] ।
त्रीण्युत्तरा रोहिणी च ह्यर्थशास्त्रे सुपूजिताः ॥ २४५

ब्रह्मविद्यासु[5] सर्वाणि नक्षत्राणि शुभानि च ।
शिवागमे शुभान्याहुः क्षिप्रमिश्राणि तान्यपि ॥ २४६

ततो[6] विष्णवागमे शास्त्रे वारः साधारणः स्मृतः ।
विषशास्त्रभृता योगा वारनक्षत्रपूजिताः ॥ २४७

सर्वे[7] शंसन्ति मुख्यत्वं वृत्रारे ब्रह्मणा पुरा ।
ध्रुवाणि सर्वशास्त्रेषु सर्वसाधारणान्यपि ॥ २४८

मृदूनि[8] सर्वविद्यासु सर्वज्ञानेषु तान्यपि ।
वैष्णवं[9] सुप्रशंसन्ति मायाचौर्यादिकैतवे ।
शंसन्ति सर्वभान्याहुः ज्योतिःशास्त्राविरोधतः ॥ २४९

चरस्थिरद्विस्वभावा[10] मध्यमाधमपूजिताः ।
शुभयुक्तेषु दृष्टेषु मध्यमाधमपूजिताः ॥ २५०

[1] प्र. पारि., pp. 257-8.
[2] प्र. पारि., pp. 257-8.
[3] प्र. पारि., pp. 257-8.
[4] प्र. पारि., pp. 257-8.
[5] प्र. पारि., pp. 257-8.
[6] प्र. पारि., pp. 257-8.
[7] प्र. पारि., pp. 257-8.
[8] प्र. पारि., pp. 257-8.
[9] प्र. पारि., pp. 257-8.
[10] प्र. पारि., p. 258.

त्रिषडायगताः[1] पापास्त्रिकोणे कण्टके शुभाः ।
विद्यारम्भे तु पूज्याः स्युः पञ्चमे पापवर्जिते ॥ २५१

सप्तमस्थाः[2] शुभाः सर्वे पूज्याः पापविवर्जिताः ।
विशेषादुदिताः सौम्याः पापसंयोगवर्जिताः ॥ २५२

विद्यारंभेषु[3] सर्वेषु शस्तं सारस्वतं तदा ।
तस्मात्प्रवक्ष्यते सम्यग्योगः सारस्वताह्वयः ॥ २५३

हस्ते[4] बुधांशके युक्ता यदि भान्विन्दुसोमजाः ।
सोमवारे रवौ लग्ने योगः सारस्वतो भवेत् ॥ २५४

हस्ते[5] बुधांशकस्थौ चेद्बुधेन्दू लग्नगौ तदा ।
बुधवारे मुहूर्तेऽह्नि योगः सारस्वताह्वयः ॥ २५५

अत्युच्चस्थे[6] लग्ने - - पार्थो नान्यत्रिभागके ।
भानौ तत्सौम्यवारेण योगो वागीश्वराह्वयः ॥ २५६

इन्द्वर्कज्ञदिने[7] वारनाथे लग्ने बुधांशके ।
हस्तर्क्षे च मता ह्येते योगाः सारस्वताह्वयाः ॥ २५७

वर्गोत्तमस्थे[8] ज्ञे लग्ने जीवे चोभयराशिगे ।
गुरुशुक्रबुधाः केन्द्रे योगः सारस्वताह्वयः ॥ २५८

उपकुर्वाणकस्यैतत्समादिष्टं[9] मया व्रतम् ।
अधुना सम्प्रवक्ष्यामि नैष्ठिकस्य समासतः ॥ २५९

[1] प्र. पारि., p. 258.
[2] प्र. पारि., p. 258.
[3] प्र. पारि., p. 258.
[4] प्र. पारि., p. 258.
[5] प्र. पारि., p. 258.
[6] प्र. पारि., p. 258.
[7] प्र. पारि., p. 258.
[8] प्र. पारि., p. 258.
[9] स्मृ. च. सं., p. 168 ; व्र. कल्प., p. 71/2.

सन्ध्याग्निकार्यमधःशयनं[1] दया प्राङ् निषिद्धपरित्यागं मनोभवं गुरोर्हितं गुरोरभावे तु तद्दारसुतज्ञात्यग्निसेवनम् ॥ २६०

सन्ध्याऽग्निकार्यं[2] स्वाध्यायो भिक्षाऽधःशयनं दया ।
आमृत्योर्नैष्ठिकं[a] कुर्वन् ब्रह्मलोकमवाप्नुयात् ॥ २६१

वेदानधीत्य[3] वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत् ॥ २६२

वेदं[4] वेदौ च वेदान्वा ततोऽधीत्य यथाविधि ।
अविशीर्णब्रह्मचर्यो दारान् कुर्वीत धर्मतः ॥ २६३

गुरुं[5] वा समनुज्ञाप्य प्रदाय गुरुदक्षिणाम् ।
सदृशानाहरेद्दारान् मातापितृमते स्थितः ॥ २६४

समानमुद्वहेत्पत्नीं[6] कुलशीलवयोगुणैः ।
तया सह चेरद्धर्मं [b]श्रौतस्मार्तं च [c]शक्तितः ॥ २६५

सकृदंशो[7] निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ २६६

उक्तो[8][d] नियोगो मनुना निषिद्धः स्वयमेव च ।
युगह्रासादशक्योऽसौ [e]कर्तुमन्यैर्विधानतः ॥ २६७

[1] ब्र. कल्प., p. 71/2.

[2] स्मृ. च. सं., p. 168; ब्र. कल्प., p. 71/2; [a] अमृत्यौ नैष्ठिकः उत्तरार्धं परम्.

[3] हे. प. का., p. 785; पु. चि., p. 445.

[4] हे. प. का., p. 785.

[5] हे. प. का., p. 785.

[6] गृ. रत्ना., p. 5; [c] सम्मतः इत्यपि दृश्यते, गृ. कल्प., p. 1/b; [b] स्मार्तसमाहितः.

[7] या. वी., p. 129; गृ. कल्प., p. 16/a; गृ. रत्ना., p. 47.

[8] या. वी., p. 132; या. अप., p. 97; [d] उक्ता; [e] कर्तुं सर्वैः, p. 38; [e] कर्तुं सर्वैः.

तपोज्ञानसमायुक्ताः[1] कृतत्रेतायुगे[a] नराः ।
द्वापरे च कलौ नृणां [b]शक्तिह्रानिर्विजायते ॥ २६८

अनेकधा[2] कृताः पुत्रा [c]ऋषिभिर्ये पुरातनैः ।
न [d]शक्यास्तेऽधुना कर्तुं [e, f]शक्तिहीनतया नरैः ॥ २६९

क्षेत्रजो[3] गर्हितः सद्भिस्तथा पौनर्भवः सुतः ।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥ २७०

दत्तोपविद्धः[4] क्रीतश्च [g]कृत्रिमो दत्रिमस्तथा ।
जातिशुद्धाः[5] कर्मशुद्धा मध्यमास्ते सुता मताः ॥ २७१

रवेरभ्युदये[6] मानं चन्द्रस्य पितृकर्मणि ।
यज्ञे सावनमित्याहुरार्क्षं सर्वव्रतादिषु ॥ २७२

श्रोत्रियाय[7] कुलीनाय दरिद्राय च वासव ।
सन्तुष्टाय विनीताय सर्वभूतहिताय च ॥ २७३

सर्वदानं सुरश्रेष्ठ दत्तं भवति चाक्षयम् ।
पर्वसु[8] प्रयतो नित्यमुक्तदानफलं लभेत् ॥ २७४

[1] या. वी., p. 133; या. अप., p. 97; [a] कृते; [b] विनिर्मिता, वि. म., p. 38; [b] हि निर्मिता.

[2] या. अप., p. 97; शु. वि., p. 23; [f] हीनैर्न तत्क्षमम्, उ. तत्व., p. 113; [c] यैः; [d] शक्यन्ते; [f] हीनैरिदन्तनैः, वै. व., p. 175; सङ्कल्पेन; [e] च; [d] शक्यन्ते; [f] हीनैर्नरैरिति, वि. म., p. 39; [e] तपोहीनैरतन्द्रितैः, या. वी., p. 133; उ. तत्ववत्पाठः, कृत्य. समु., p. 72; उ. तत्ववत्पाठः.

[3] शु. वि., p. 23; वि. म., p. 39.

[4] वै. व., p. 176; शु. वि., p. 23; [g] कृतः शौद्रस्तथैव च । वि. म., p. 39; [g] अपविद्धस्तथैव च.

[5] शु. वि., p. 23.

[6] हे. प. का., p. 20; पु. चि., p. 5.

[7] दा. कौ., p. 2. Authenticity doubtful.

[8] स्मृ. रत्ना., p. 116.

ब्राह्मणातिक्रमो[1] नास्ति मूर्खे मन्त्रविवर्जिते ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ २७५

चन्द्रसूर्यग्रहे[2] चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षयकारकम् ॥ २७६

किञ्चिद्वेदमयं[3] पात्रं किञ्चित्पात्रं तपोमयम् ।
आगमिष्यति[4] यत्पात्रं तत्पात्रं तारयिष्यति ॥ २७७

कृते[5] प्रदीयते[a] गत्वा [b]त्रेतास्वानीयते गृहे ।
द्वापरे च [c]प्रार्थयतः कलावनुगमान्विते ॥ २७८

पादौ[6] शुची [d]ब्राह्मणानामजाश्वस्य मुखं शुचि ।
गवां [e]पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम् ॥ २७९

अपि[7] पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम् ॥ २८०

सर्वत्र[8] गुणवद्दानं श्वपाकादिष्वपि स्मृतम् ।
देशे काले विधानेन पात्रे दत्तं विशेषतः ॥ २८१

[1] स्मृ. रत्ना., p. 130.

[2] हे. प. का., p. 40.

[3] हे. दा., p. 25.

[4] परा. आ., p. 185.

[5] परा. आ., p. 124; दा. कल्प., p. 3/a; [a] प्रयच्छते; [b] यां दीयते; [c] प्रार्थयति च कलौ चानुगायति, हे. दा., p. 89; [b] यां दीयते; [c] प्रार्थयति कलौ चा.

[6] या. अप., p. 276; शु. कल्प., p. 36/a; [d] अजाश्वानां, हे. प. श्रा., p. 843; म. पारि., p. 470; परा. प्रा., p. 190; शु. वि., p. 38; शु कल्पवत्पाठः, शु. चि., p. 117; [d] अजाश्वानां; [e] स्पृष्टानि, नि. अमृ., p. 233; श्रा. सा., p. 90; शु. कौ., p. 359; पूर्वार्धं परं, वै. आ., p. 439; स्मृ. उद्धार., p. 249; [d] अजाश्वानां, या. वी., p. 270.

[7] हे. दा., p. 55.

[8] दा. कल्प., p. 3/a.

मन्त्राज्यदोषाद्धोमे[1a] तु तपसीन्द्रियदोषतः ।
न्यूनता स्यान्न दाने तु श्रद्धायुक्ते भवेत् क्वचित् ॥ २८२

सत्कृत्य[2] भिक्षवे भिक्षा दातव्या सव्रताय च ।
आश्रमाणां[3] समुत्पत्तिर्वर्धनं पालनं तथा ।
गृहस्थाज्जायते सम्यक् तस्मात्सोऽभ्यधिकः स्मृतः ॥ २८३

अतो[4] यत्सात्विकं दानं मृदुपूर्वं तु शान्तिकम् ।
आशिषं पौष्टिकं दद्यात् त्रिविधं दानलक्षणम् ॥ २८४

कुटुम्बभक्तवसनाद्देयं[5] यदतिरिच्यते ।
अन्यथा[6] दीयते यद्धि न तद्दानफलप्रदम् ॥ २८५

मध्वास्वादो[7] विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत् ।
कुटुम्बं[8] पीडयित्वा तु ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥ २८६

कस्मैचिद्याचमानाय[9] दत्तं धर्माय यद्भवेत् ।
पश्चाच्च न तथा तत्स्यान्न देयं तस्य तद्भवेत् ॥ २८७

शूद्रे[10] समगुणं दानं वैश्ये [b]च द्विगुणं स्मृतम् ।
क्षत्रिये त्रिगुणं [c,d]प्राहुर्ब्राह्मणे षड्गुणं स्मृतम् ॥ २८८

[1] हे. दा., III, p. 86; दा. कल्प., p. 3/a; [a] मन्त्रादिदोषाद्धोमेषु.
[2] वी. मि. आ., p. 434.
[3] वी. मि. आ., p. 457.
[4] वै. व., p. 76.
[5] परा. आ., I, p. 190; दा. कल्प., p. 3/b; नि. प्र., Part II, p. 356; शु. तत्व., p. 351; वै. व., p. 82; कृत्य. समु., p. 89.
[6] वै. व., p. 82.
[7] दा. कल्प., p. 3/b; शु. तत्व., p. 351; कृत्य. समु., p. 89.
[8] शु. तत्व., p. 351.
[9] हे. दा., III, p. 52.
[10] कृत्य. समु., p. 88; दा. कल्प., p. 9/b; [b] तद्; [d] अनन्तं ब्राह्मणे, या. अप., p. 287; [b] तद्; [c] दानम्.

श्रोत्रिये[1] चैव साहस्रमाचार्ये द्विगुणं ततः ।
आत्मज्ञे शतसाहस्रमनन्तं त्वग्निहोत्रिणे ॥ २८९

विप्रपादोदकक्लिन्ना[2] यावत्तिष्ठति मेदिनी ।
तावत्पुष्करपात्रेण पिबन्ति पितरो जलम् ॥ २९०

यस्याध्वखिन्नाः[3] पथिका गृहमायान्ति कर्षिताः ।
पूज्यन्ते तृणभूम्याद्यैः पितरस्तेन पुत्रिणः ॥ २९१

हेमशृङ्गीं[4] रौप्यखुरां [a]वस्त्रकांस्याज्यसंयुताम् ।
सवत्सां कपिलां दत्वा [b]सप्त वंश्यान् समुद्धरेत् ॥ २९२

वसा(न्तो)[5] पुष्कलयुतं गृहं विप्राय योऽर्पयेत् ।
तस्य न क्षीयते वंशः स्वर्गं प्राप्नोत्यनुत्तमम् ॥ २९३

यत्किञ्चित्कुरुते[6] पापं जन्मप्रभृति मानवः ।
अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ॥ २९४

यत्किञ्चित्कुरुते[7] पापं पुरुषो लोभमोहितः ।
तत्सर्वं भूमिदानेन क्षिप्रमेव विनश्यति ॥ २९५

दशहस्तेन[8] [c] दण्डेन [b]त्रिंशद्दण्डा निवर्तनम् ।
दश [e] तान्येव [f] गोचर्म [g] ब्राह्मणेभ्यो [h] ददाति [i] यः ॥ २९६

[1] कृत्य. समु., p. 88 ; दा. कल्प., p. 9/b.

[2] गृ. रत्ना., p. 298.

[3] गृ. रत्ना., p. 298.

[4] या. अप., p. 297 ; दा. कल्प., p. 40/a ; [a] कांस्यभाजन ; [b] वंशान् सप्त.

[5] दा. कल्प., p. 66/b.

[6] या. अप., p. 367.

[7] या. अप., p. 1225 ; हे. दा., VII, p. 505.

[8] हे. दा., III, p. 122 and VII, p. 505 ; हे. व्रत., p. 52 ; या. मि., p. 65 ; [c] सप्त ; [d] दण्डं, या. अप., p. 367 ; [c] सप्त ; [f] तानेव ; [h] दत्वा स्वर्गे महीयते, नि. प्र., Part I, p. 141 ; [h] मानमाह प्रजापतिः, दा. कौ., p. 40 ; [d] दण्डाग्नि ; [e] पार्श्वतो दशदण्डेन गोचर्म परिचक्षते, दा. म., p. 23 ; [g] वर्तानि, बा. आ., p. 626 ; [i] दधाति.

अपि[1] गोचर्ममात्रेण सम्यग्दत्तेन मानवः ।
धौतपापो विशुद्धात्मा स्वर्गलोके महीयते ॥ २९७

वेदव्रती[2] स्याद्वृषभप्रदाने [a]वेदावाप्तिर्गोयुगस्य प्रदाने ॥२९७अ

आस्फोटयन्ति[3] पितरः प्रगल्पन्ति पितामहाः ।
भूमिदोऽस्मत्कुले जातः सोऽस्माकं तारयिष्यति ॥ २९८

सुवर्णदानं[4] गोदानं भूमिदानं च वासव ।
एतत्प्रयच्छमानस्तु[b] सर्वपापैः प्रमुच्यते ॥ २९९

गृहादिके[5][c] पुण्यफलं भवेन्मूल्यानुसारतः ।
तस्मात्सर्वप्रदानानां हिरण्यमधिकं स्मृतम् ॥ ३००

तथा[6][d] सान्तानिकादीनां हेम्नां सरूपद्यते क्रिया ।
तथा न गृहदानेन हिरण्यमधिकं ततः ॥ ३०१

फालकृष्टां[7] महीं दत्वा सवीजां सस्यशालिनीम् ।
यावत्सूर्यकृतो लोकस्तावत्स्वर्गे महीयते ॥ ३०२

गामेकां[8] स्वर्णमेकं च भूमेरप्यर्धमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसंप्लवम् ॥ ३०३

हुतं[9] दत्तं तपोऽधीतं यत्किञ्चित्कर्म सञ्चितम् ।
अर्धाङ्गुष्ठेन सीमाया हरणेन प्रणश्यति ॥ ३०४

[1] हे. दा., VII, p. 505.

[2] हे. दा., III, pp. 482 and 466; [a] युगस्य इतिपाठः.

[3] हे. दा., VII, p. 507.

[4] दा. कौ., p. 40; दा. कल्प., p. 49/a; [b] अपि.

[5] हे. दा., VIII, p. 567; हे. प. श्रा., p. 665; दा. कल्प., p. 49/a; [c] गृहाधिके.

[6] हे. प. श्रा., p. 665; हे. दा., VIII, p. 567; [d] यथा सान्तनिका, दा. कल्प., p. 49/a; [d] यथा.

[7] दा. कौ., p. 40.

[8] दा. कौ., p. 41.

[9] दा. कौ., p. 41.

सर्वेषामेव[1] दानानामेकजन्मानुगं फलम् ।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥ ३०५

तान्[2] प्रतिग्रहजान् दोषान् प्राणायामे व्यवस्थिताः ।
नाशयन्ति हि विद्वांसो वायुर्मेघमिवाम्बरे ॥ ३०६

अग्नेरपत्यं[3] प्रथमं सुवर्णं
भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकास्त्रयस्तेन भवन्ति दत्ता
यः काञ्चनं गां च महीं च दद्यात् ॥ ३०७

हेमरत्नाम्बरयुतोऽभुञ्जानो[4] म्रियते[a] नरः ।
अश्नन् [b]विनाऽप्यलङ्कारं जीर्णवस्त्रोऽपि जीवति ॥ ३०८

तस्मात्प्रदद्याद्विप्रेभ्यः[5] संस्कृतान्नं सदक्षिणम् ।
तेनेह कीर्तिमाप्नोति स्वर्गं चानन्तकं तथा ॥ ३०९

गृहं[6] मम विभूत्यर्थं गृहाण त्वं द्विजोत्तम ।
प्रीयतां मे जगद्योनिर्वास्तुरूपी जनार्दनः ॥ ३१०

आगतस्यासनं[7] दद्याच्छ्रान्तस्य शयनं तथा ।
तृषितस्य [c]तु पानीयं क्षुधितस्य तु भोजनम् ॥ ३११

प्रीयते[8][d] स्वागतेनाग्निः आसनेन शतक्रतुः ।
पितरः पादशौचेन भोजनेन प्रजापतिः ॥ ३१२

[1] दा. कौ., p. 41.
[2] दा. कौ., p. 85.
[3] हे, दा., VIII, pp. 546 and 567.
[4] या. अप., p. 374; दा. कल्प., p. 63/b; [a] न हि जीवति; [b] अलङ्कारैः.
[5] या. अप., p. 374; दा. कल्प., p. 63/b.
[6] हे. दा., IX, p. 659.
[7] हे. दा., IX, p. 675; गृ. रत्ना., p. 298; [c] च.
[8] हे. दा., IX, p. 675; आ. दर्श., p. 56; [d] प्रीतये, गृ. रत्ना., p. 298; वी. मि. आ., p. 434; आ. भू., p. 270.

चक्षुर्दद्यान्मनो[1] दद्याद्वाचं दद्याच्च सूनृताम् ।
एष[a] साधारणो [b]धर्मश्चातुर्वर्ण्योऽब्रवीन्मनुः ॥ ३१३

अन्नदानं[2] गुणकरं[c] सर्वदानाधिकं स्मृतम् ।
अन्नात्प्राणप्रजननं[d] नृणां सञ्जायते सदा ॥ ३१४

प्राणाप्यायनमात्रं[3] तु यो विप्राय प्रयच्छति ।
दुर्भिक्षे [e]तु विशेषेण [f]स लभेताक्षयां दिवम् ॥ ३१५

रसान्नोपस्करान्[4*] गेहं विप्रेभ्यो यः प्रयच्छति ।
तस्य न क्षीयते वंशः स्वर्गमाप्नोत्यनन्तकम् ॥ ३१६

असिपत्रवनं[5 g] मार्गं क्षुरधारासमन्वितम् ।
तीक्ष्णातपं च तरति छत्रोपानत्प्रदो नरः ॥ ३१७

सहस्रमेव[6 h] धेनूनां शतं चानडुहां समम् ।
शतानडुत्समं[i] यानं दशयानसमो हयः ॥ ३१८

[1] हे. दा., IX, p. 675; गृ. रत्ना., p. 298; [a] एवं; [b] चातुर्वर्णः.

[2] या. अप., p. 374; दा. कल्प., p. 63/b; [c] बहुगुणं; [d] यत्प्राणजननं, हे. दा., XIII, p. 979; [d] हि. प्राणजननं नृणां वै.

[3] या. अप., p. 374; दा. कल्प., p. 63/b; हे. दा., XIII, p. 979; [e] अत्र; [f] दातव्यं मानवैर्भुवि.

[4] या. अप., p. 384; हे. दा., VIII, p. 646; * रयुतं गृहं विप्राय योऽर्पयेत् । न हीयते तस्य वंशः स्वर्गं प्राप्नोत्यनुत्तमम् ॥

[5] या. अप., p. 386; दा. कल्प., p. 67/b; [g] मयं, हे. दा., XIII, p. 924.

[6] या. अप., p. 389; स्मृ. च. सं., pp. 145 and 214; [h] सम्मिता धेनुरनड्वान् दशः धेनवः । दश, हे. दा., VII, p. 512 and IX, p. 677; प्र. पारि., p. 355; [i] दश, वि. पारि., Part II, p. 48; [i] दश, दा. म., p. 170; वी. मि. सं., pp. 516 and 833; स्मृ. च. सं. वत्पाठः; प्र. चि. p. 197; [i] दश.

दशवाजिसमा[1] कन्या भूमिदानं च तत्समम् ।
भूमिदानात्समं[a] नास्ति विद्यादानं ततोऽधिकम् ॥ ३१९

तस्मात्सर्वेषु[2b] दानेषु कन्यादानं विशिष्यते ।
विद्यादानेन[3] सुमतिर्ब्रह्मलोके महीयते ॥ ३२०

अलाभे[4] सुमुहूर्तस्य रजोदोषे ह्युपस्थिते ।
श्रियं सम्पूज्य विधिवत्ततो मङ्गलमाचरेत् ॥ ३२१

चतुष्पादं[5] गृहं कन्यां दासीं छत्रं रथं तरुम् ।
तिष्ठन्नेतान् द्विजो दद्याद्भूम्यादीनुपविश्य च ॥ ३२२

न[6] तं त्यजन्ति पशवः सङ्ग्रामे विजयत्यपि ।
पुत्रं श्रियं च लभते यच्छन्तं सम्प्रयच्छति ॥ ३२३

भूमौ[7] यदापो दीयन्ते दाता चैव जले स्थितः ।
वृथा तद्दीयते तोयं नोपतिष्ठति कस्यचित् ॥ ३२४

असंस्कृतप्रमीतानां[8] स्थले दद्याज्जलाञ्जलिम् ।
प्रादेशमात्रमुद्धृत्य सलिलं सलिले क्षिपेत् ॥ ३२५

[1] या. अप., p. 389 ; स्मृ. च. सं., p. 145 ; 214 तमपुटे पूर्वार्धं परं; [a] परं इति च (हे. दा., VII, p. 512 and IX, p. 677 ; प्र. पारि., p. 355 ; वि. पारि., Part II, p. 48 ; पूर्वार्धं परम्) ; वी. मि. सं., pp. 516 and 833 ; प्र. चि., p. 197 ; पूर्वार्धं परम्.

[2] हे. दा., VII, p. 512 and IX, p. 677 ; प्र. पारि., p. 355 ; [b] सर्वप्रयत्नेन ; [b] सर्वप्रदानेभ्यः, प्र. चि., p. 197 ; प्र. पारि वत्पाठः.

[3] स्मृ. रत्ना., p. 133.

[4] वि. पारि., Part II, p. 4.

[5] वि. पारि., Part II, p. 40.

[6] नि. प्र., Part II, p. 347.

[7] ग. आचा., p. 264.

[8] ग. आचा., p. 264.

कनकाश्वतिला[1] नागा दासीरथमहीगृहाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥ ३२६

वेदानधीत्य[2] विधिना [a]समावृत्तोऽलुप्तव्रतः ।
समानामुद्वहेत्पत्नीं यशःशीलवयोगुणैः ॥ ३२७

सदृशानाहरेद्दारान्मातापितृमते[3] स्थितः ।
वर्षैरेकगुणां[4] भार्यामुद्वहेत्त्रिगुणः स्वयम् ॥ ३२८

त्रिंशद्वर्षो[5] दशाब्दां तु भार्यां विन्देत [b]नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥ ३२९

ततो[6] मङ्गलसू[त्रं? क्तं] च ध्यायन्निष्टां च देवताम् ।
बध्वा कण्ठे प्रदेशेऽस्या भूषणानि च शक्तितः ॥ ३३०

कन्यकां प्रतिगृह्यैवं वरः पूर्ववदासने ।
कालः[7] पटुतरो नृणां गृहस्थानां शुभाय वै ।
गृहप्रवेशनादेव गृहस्थस्य गृहस्थितिः ॥ ३३१

भूतग्रामगृहादीनां[8] प्रवेशे पुरुषस्य वा ।
उभयोरपि वा योगे नवे त्वभ्यसनेन वा ॥ ३३२

प्रवेश्य[9] नूतनत्वेऽथ प्रवेष्टॄणां च तत्वतः ।
इच्छूनां सम्पदां नृणां उच्यते समयः शुभः ॥ ३३३

[1] स्मृ. च. सं., p. 214.
[2] हे. प. का., p. 785 ; पु. चि., p. 445 ; [a] अच्युत.
[3] पु. चि., p. 445.
[4] बा. आ., p. 175.
[5] स्मृ. च. सं., p. 214 ; च. म. सं., p. 97 ; [b] नग्निकाम्, परा. आ., p. 69 ; वै. व., p. 216 ; [b] मानवः.
[6] वि. पारि., Part II, p. 40.
[7] प्र. पारि., p. 423.
[8] प्र. पारि., p. 425.
[9] प्र. पारि., p. 425.

चतुष्पदां[1] तथाऽन्येषां वाहनानां प्रवेशने ।
प्राणिनां पक्षिणां वाऽपि नवसंवेशनेऽपि च ॥ ३३४

सर्वेषामपि[2] वा कालं विशेषेण पृथक् पृथक् ।
वदामि कुलिशान् सम्यग्विनिर्दिष्टो ह्यहं यतः ॥ ३३५

शुभांशे[3] शुभवारेषु शुभदृष्टे स्थिरांशके ।
दिवा प्रवेशः सम्पत्तौ निशि वा शोभनो भवेत् ॥ ३३६

यदि[4] लाभाधिपः सौम्यः सुबली सौम्यवीक्षितः ।
वृषभे प्रविशेद्भृत्यैः शेषेषु स्थिरराशिषु ॥ ३३७

शुभदृष्टियुते[5] वाऽपि वीर्योत्कटसमाह्वये ।
वृषांशकोदये सर्वप्रवेशः शोभनः सदा ॥ ३३८

चरोदयेषु[6] सर्वेषु वृषांशश्चातिशोभनः ।
विष्टिवर्जं शुभे वारे शुभऋक्षे शुभेक्षिते ॥ ३३९

शुभांशके[7] शुभैर्युक्ते शुभवीक्षादिसंयुते ।
शुभराश्युदये सम्यक् स्थिरभे च स्थिरांशके ॥ ३४०

राश्यंशनाथदृष्टीशान्[8] सम्पूज्यागारमाविशेत् ।
पैत्रमैत्रश्रविष्ठाग्नितारकादिचतुष्टये ॥ ३४१

याम्यवारुणसौम्येन्द्रदिग्गैर्द्वारैः[9] क्रमाद्विशेत् ।
शेषेषु द्वादशर्क्षेषु न विशेद्यदि दुर्बलः ॥ ३४२

[1] प्र. पारि., p. 425.
[2] प्र. पारि., p. 425.
[3] प्र. पारि., p. 425.
[4] प्र. पारि., p. 425.
[5] प्र. पारि., p. 425.
[6] प्र. पारि., p. 425.
[7] प्र. पारि., p. 425.
[8] प्र. पारि., p. 425.
[9] प्र. पारि., p. 425.

यदि[1] वा द्वादशर्क्षेषु शुभांशे बलवांस्तथा ।
यथालाभं गुणानन्यान् दृष्ट्वा शेषेषु निर्दिशेत् ॥ ३४३
एवमेवान्यसंवेशे[2] धनधान्यादिना नरः ।
तत्र वाहनवस्त्रादिग्रहणे च विशेषतः ॥ ३४४
नन्दायां[3] दक्षिणद्वारं भद्रायां पश्चिमेन तु ।
जयायामुत्तरं द्वारं पूर्णायां पूर्वतो व्रजेत् ॥ ३४५
रिक्तायां[4] न विशेत्स्थानं कृष्णे चात्यन्तिकादृते ।
तथा शुभग्रहाणां तु क्रमाद्वाराः शुभावहाः ॥ ३४६
नाशुभे[5] नित्ययोगे च विशेन्नवसमाह्वयम् ।
प्रविशेत्समये[6] सौम्ये विनाशः स्यादशोभने ॥ ३४७
नगरग्रामगेहानां[7] प्रवेशास्त्रिविधा(?) हरेत् ।
सपूर्वापूर्वद्वन्द्वाख्या त्रिविधं नैव कारयेत् ॥ ३४८
कन्याकुम्भकुळीरे[8] च कृते सर्वविनाशनम् ।
कुम्भकर्कटयोः कृत्वा कदाचित्परिहृत्य च ॥ ३४९
अवश्येऽपि[9] न कर्तव्यं परित्यागेऽपि सर्वदा ।
कन्यकायां रवौ कुर्वन् पुत्रदारपशुक्षयः ॥ ३५०
पृष्ठगं[10] दक्षिणस्थं वा भृगुं कृत्वा विशेद्गृहम् ।
पुरतो वामतो वापि शुक्रं कृत्वा न चाविशेत् ॥ ३५१

[1] प्र. पारि., p. 425.
[2] प्र. पारि., p. 425.
[3] प्र. पारि., p. 425.
[4] प्र. पारि., p. 425.
[5] प्र. पारि., p. 425.
[6] प्र. पारि., p. 425.
[7] प्र. पारि., p. 425.
[8] प्र. पारि., p. 425.
[9] प्र. पारि., p. 425.
[10] प्र. पारि., p. 426.

मूढस्थे भृगुजे सर्वप्रवेशो नैव शोभनः ।
सिते[1] स्वतुङ्गस्वक्षेत्रयुते दोषो न विद्यते ॥ ३५२

एकगेहे चतुःशाले विवाहे यज्ञकर्मणि ।
प्रजारिष्टे च कलहे प्रतिशुक्रो न दुष्यति ॥ ३५३

एकग्रामे[2] पुरे वापि दुर्भिक्षे राष्ट्रविप्लवे ।
उद्वाहे तीर्थयात्रायां प्रतिशुक्रो न विद्यते ॥ ३५४

काश्यपेषु[3] वसिष्ठेषु भृगुष्वप्यङ्गिरस्सु च ।
भारद्वाजेषु वत्सेषु प्रतिशुक्रो न विद्यते ॥ ३५५

बालानामातुराणां[4] च गमने रक्षणाय तु ।
प्रतिशुक्रफलं नास्ति स्त्रीणां भर्तृगृहं प्रति ॥ ३५६

शुभनामसु[5] तारासु सर्वासु प्रविशेद्गृहम् ।
शुभांशे शुभवारेषु शुभदृष्टे स्थिरांशके ॥ ३५७

यदि[6] लग्नाधिपः सौम्यः सुबली सौम्यवीक्षितः ।
वृषभे प्रविशेद्भूत्यै शेषेषु स्थिरराशिषु ॥ ३५८

शुभदृष्टे[7] युते वाऽपि वीर्योत्कर्षसमाह्वयः ।
वृषांशकोदये सर्वप्रवेशः शोभनस्तदा ॥ ३५९

चरोदयेषु सर्वेषु वृषांशः स्यात्सुशोभनः ।

[1] प्र. पारि., p. 426.
[2] प्र. पारि., p. 426.
[3] प्र. पारि., p. 426.
[4] प्र. पारि., p. 426.
[5] प्र. पारि., p. 426.
[6] प्र. पारि., p. 426.
[7] प्र. पारि., p. 426.

वामप्रत्यङ्मुखाख्यादिदोषैः[1] शुक्रे व्यवस्थिते ।
आवश्यके[2] गमे नृणां प्रवेशविधिरुच्यते ॥ ३६०

भार्गवं[3] वा भरद्वाजवंशोत्थं द्विजमग्रतः ।
कृत्वा सुपूर्णकुम्भं च जपन्तो मृतजीविनीम् ॥ ३६१

विद्वान्[4] द्विजो विवृध्यर्थं वर्धनार्थं प्रजायुषाम् ।
'शुक्रं ते अन्यदि'त्यादि तथा त्रैयम्बकं मनुम् ॥ ३६२

जप्त्वा[5] हुत्वा पयोभिर्वा तर्पयित्वा सहस्रशः ।
समिदन्नघृताद्यैश्च वास्तुमध्ये गुडूचिभिः ॥ ३६३

सावित्र्यष्टसहस्रं[6] च हुत्वाऽऽज्येन विधानतः ।
अनेनापि वनिं कृत्वा नैर्ऋत्यां वायुदिग्भवे ॥ ३६४

आग्नेय्यां[7] च क्रमाद्धुत्वा विशेद्गेहं नराधिपः ।
अपामार्गपलाशार्कखादिरोदुम्बरैः[8] सह ॥ ३६५

नन्दाभद्राभृताख्येन[9] तृणेन सह बन्धयेत् ।
इन्द्रवल्लीलताभिश्च यज्ञियद्रुमपल्लवैः ॥ ३६६

गृहसम्मार्जनं[10] कृत्वा सम्प्रोक्षेद्दर्भमुष्टिना ।
पञ्चगव्यं यथान्यायं संगृह्य न्यस्य मध्यमे ॥ ३६७

[1] प्र. पारि., p. 426.
[2] प्र. पारि., p. 426.
[3] प्र. पारि., p. 426.
[4] प्र. पारि., p. 426.
[5] प्र. पारि., p. 426.
[6] प्र. पारि., p. 426.
[7] प्र. पारि., p. 426.
[8] प्र. पारि., p. 426.
[9] प्र. पारि., p. 426.
[10] प्र. पारि., p. 426.

सिद्धार्थकैर्महाधान्यैः[1] पत्रपुष्पैः प्रकीर्य च ।
अश्वत्थपत्रमालाभिः दर्भमालाभिरेव च ॥ ३६८

अलङ्कृत्य[2] क्रमाद्दिक्षु पूर्णकुम्भाक्षतैरपि ।
दीपैरपि सुधूपैश्च सम्पूज्य गृहमाविशेत् ॥ ३६९

ब्राह्मणैराशिषो[3] वाच्या भुक्ततुष्टैर्द्विजोत्तमैः ।
एवं गजाश्वशालासु कृत्वैव प्रविशेत्सदा ॥ ३७०

कुळीरकन्यकाकुम्भे[4] दिनेशे न विशेद्गृहम् ।
ग्रामं वा नगरं वापि पत्तनं वा नराधिपः ॥ ३७१

निमित्तेष्वेषु[5] सर्वेषु दक्षिणं श्रवणं स्पृशेत् ।
आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट् ॥ ३७२

विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति वै यतः ॥ ३७२अ

पितुर्गृहे[6] तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥ ३७३

यस्तां[7] विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो[8] ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥ ३७४

[1] प्र. पारि., p. 426.

[2] प्र. पारि., p. 426.

[3] प्र. पारि., p. 426.

[4] वि. पारि., II, p. 134.

[5] वि. पारि., II, p. 162.

[6] स्मृ. च. सं., p. 216; हे. प. का., pp. 800 and 802; वै. व., p. 235; वी. मि. सं., p. 768. Ascribed also to अङ्गिरस्.

[7] हे. प. का., p. 800; वै. व., p. 235.

[8] हे. प. का., p. 800; वै. व., p. 235.

वृषलीसङ्गृहीता[1] यो ब्राह्मणो मदमोहितः ।
सततं सूतकं तस्य ब्रह्महत्या दिने दिने ॥ ३७५

यः[2] करोत्येकरात्रेण वृषलीसेवनं द्विजः ।
तद्भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥ ३७६

वृषलीगमनं[3] चैव मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं मृतः श्वा चैव जायते ॥ ३७७

व्यञ्जने[4] तु कुलं हन्यात्पितॄन् हन्यात्पयोधरे ।
हन्यादिष्टं च पूर्तं च प्राप्ते रजसि कन्यका ॥ ३७८

एकस्मिन्[5] दिवसेऽप्येकलग्ने भिन्नांशके तथा ।
एकगर्भोत्थयोर्वह्निन्[6] ! विवाहः शुभकृद्भवेत् ॥ ३७९

एकोदरप्रसूतानामेकस्मिन्नपि[7] वत्सरे ।
विवाहो नैव कर्तव्यो गर्गस्य वचनं यथा ॥ ३८०

एकत्र[8] वर्षेऽधिकमासयुग्मं[a]
तत्कार्तिकादित्रितये [b]क्षयाख्यः ।
तद्वर्जनीयं त्रितयं प्रयत्नात्
विवाहयज्ञोत्सवमङ्गलेषु ॥ ३८१

[1] हे. प. का., p. 800; वै. व., p. 235.

[2] वै. व., p. 235.

[3] वै. व., p. 235.

[4] हे. प. का., p. 803; वी. मि. सं., p. 769.

[5] वै. व., p. 252.

[6] वै. व., p. 252.

[7] उ. तत्व., p. 120.

[8] स्मृ. कौ., p. 431; मल. तत्व., p. 782; [a] ह्यधिमास; [b] क्षयाख्यम्.

प्राक्पश्चादुदितः[1] शुक्रः पञ्चसप्तदिनं शिशुः ।
विपरीतं तु वृद्धत्वं तद्वदेव गुरोरपि ॥ ३८२

देशभेदात्कुलाचारादिमे[2] धर्माः प्रकीर्तिताः ।
एकलग्ने[3] द्विलग्ने वा गृहे यत्र द्विशोभनम् ॥ ३८३

तयोरन्यद्विनष्टं[4] स्याद्वर्धतेऽन्यदिति स्थितिः ।
एकमातृप्रसूतानामेकस्मिन्नेव वासरे ॥ ३८४

एक[5] एव न कुर्वीत विवाहं व्रतबन्धनम् ।
एकः कर्ता शुभं कुर्यान्न पुत्र्योः पुत्रयोरपि ॥ ३८५

षण्मासे[6] वा चतुर्मासे पूर्णे वर्षे शुभावहम् ।
यद्येकस्यापि[7] मूढत्वं शुभकर्म न दोषकृत् ।
द्वयोर्मूढत्वमेवोक्तं दोषदं गुरुशुक्रयोः ॥ ३८६

द्विजन्मादिशुभे[8] कार्ये शुक्रमौढ्यं न दोषदम् ।
त्रैवर्णिकानामेवोक्तं दोषदं गुरुशुक्रयोः ॥ ३८७

यदा[9] जीवसितौ [a]वक्रौ परस्परनिरीक्षितौ ।
सप्तमस्थौ तदा दोषो मूढत्वादतिरिच्यते ॥ ३८८

अतिपातिषु[10] कार्येषु राज्ञां तत्कर्मकारिणाम् ।
विवाहादीनि कार्याणि मौढ्येऽपि गुरुशुक्रयोः ॥ ३८९

[1] स्मृ. कौ., p. 461 ; वी. मि. सं., p. 156.
[2] वै. व., p. 252.
[3] वै. व., p. 252.
[4] वै. व., p. 252.
[5] वै. व., p. 252.
[6] वै. व., p. 253.
[7] वि. पारि., Part I, p. 740 ; प्र. पारि., p. 316.
[8] वि. पारि., Part I, p. 740 ; प्र. पारि., p. 316.
[9] वि. पारि., Part I, p. 741 ; प्र. पारि., p. 316 ; [a] चक्रे.
[10] वि. पारि., Part I, p. 741.

क्षत्रियाणां[1] विशेषेण भृत्यानां राजसेविनाम् ।
मौढ्यदोषं न पश्येत दीक्षाणामेव कारयेत् ॥ ३९०

विवाहे[2] बलमावश्यं दम्पत्योर्गुरुसूर्ययोः ।
न चेत्पूजां प्रकुर्वीत दुष्फलप्रदयोस्तयोः ॥ ३९१

कन्यकाजन्मलग्नेन्द्वोः[3] द्वादशाष्टमजन्मभाक् ।
चतुर्थदशमे जीवः जन्मभ्रातृगतोऽशुभः ॥ ३९२

अन्यत्र शुभदो जीवो गौरीवयसि सप्तमे ।
सर्वत्रापि शुभं दद्याद्द्वादशाब्दात्परं गुरुः ॥ ३९३

पञ्चषष्ठाब्दयोरेव शुभगोचरता मता ।
सप्ताब्दात्पञ्चवर्षेषु स्वोच्चस्वर्क्षगतो यदि ॥ ३९४

अशुभेऽपि शुभं दद्यात् शुभदर्क्षेषु किं पुनः ।
पुंसो[4] भानुस्त्रिषडाये[a] शनिभौमौ च शोभनौ ।
अन्यत्र [b]शान्तिमेतेषां कृत्वा कर्म समाचरेत् ॥ ३९५

पुनश्च[5] भूतलिङ्गे च जातिजोत्रखगास्तथा ।
योगिन्यासौच दैवं च पुनरष्टौ विशेषतः ॥ ३९६

पुनश्च वर्णकूटं च माहेन्द्रं च ततः परम् ।
दिनं[6] गणं च माहेन्द्रं स्त्रीदैर्घ्यं योनिरेव च ।
राशिराद्यधिपौ वश्यं रज्जुर्वेधश्च ते दश ॥ ३९७

[1] वि. पारि., Part I, p. 741; प्र. पारि., p. 316.

[2] वि. पारि., Part I, p. 742.

[3] प्र. पारि., p. 317.

[4] वि. पारि., Part I, p. 742; प्र. पारि., p. 317; [a] षष्ठाये; [b] होमेषु तेषां कृत्वा समारभेत्.

[5] वि. पारि., Part I, p. 743.

[6] वि. पारि., Part I, p. 743.

द्विजन्मकालवत्कृत्वा[1] शान्तिं सर्वगते गुरौ ।
विवाहश्चापि कर्तव्यो गृहस्थाश्रमशोभनः ॥ ३९८

विवाहसमये[2] काले सुखासीनं [a]शुभप्रदम् ।
दैवज्ञं भक्तितो गत्वा सम्पूज्यादौ यथाबलम् ॥ ३९९

उडुनी नामनी [b]चोक्का सम्पृच्छेत्सकृदेव तम् ।
रविवारे[3] शुभं कर्म कर्तव्यं यो मतः शुभे ।
योगाच्छुभे कुजे मन्दे कन्योद्वाहादि कारयेत् ॥ ४००

उद्वाह्यते[4 c] दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
सापिण्ड्यमपि[5] संकोच्य प्रत्यक्षश्रुतिदर्शनात् ॥ ४०१

मध्यदेशे[6] कर्मकराः [d]शिबिनश्च गवाशिनः ।
मत्स्यादाश्च[7] नराः पूर्वे व्यभिचाररताः स्त्रियः ।
उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः ॥ ४०२

सजाताश्चापि[8] गृह्णन्ति भ्रातृभार्यां सभर्तृकाम् ।
सर्वदेशेष्वनाचारो रथ्याताम्बूलचर्वणम् ॥ ४०३

[1] प्र. पारि., p. 317.

[2] वी. मि. सं., p. 773; प्र. पारि., p. 318; [b] वोक्का, वि. पारि., Part I, p. 743; [a] शुचिं द्विजम्.

[3] वी. मि. सं., p. 781.

[4] स्मृ. च. सं., p. 25; च. म. सं., pp. 94 and 96; [c] उदूह्यते, वै. व., p. 225; वि. पारि., p. 695; [c] उदूह्यते, व्य. म., p. 5; [c] उदूह्यते, वी. मि. सं., p. 725; [c] उदुह्यते, व्य. नि., p. 11; [c] उदूह्यते.

[5] वि. पारि., p. 695.

[6] स्मृ. च. सं., p. 25; वै. व., p. 225; [d] शिलिपनश्च, व्य. म., p. 5; [d] शिलिपनश्च, व्य. नि., p. 11; [d] शिलिपनश्च.

[7] च. म. सं., p. 96.

[8] च. म. सं., p. 96.

शकुन्यादिचतुष्केषु[1a] करणेष्वपि विष्टिषु ।
कुलिकेषु शुभं वर्ज्यमशुभान्येव कारयेत् ॥ ४०४

एवं[2] वश्यसमायोगे दम्पत्योः प्रीतिरुत्तमा ।
वश्याभावेऽपि दम्पत्योः विवाहः कलहप्रदः ॥ ४०५

तुला[3] सिंहस्य वश्या स्यात्कन्याया यममत्स्यभे ।
मृगकन्ये तु जूकस्य कर्की स्याद्वृश्चिकस्य तु ॥ ४०६

मीनश्चापस्य[4] वश्यः स्यान्मकरो मीनवश्यकृत् ।
कुम्भस्य कन्या वश्या स्यान्मीनो मेषस्य वश्यकृत् ॥ ४०७

मेषस्य[5] वश्यौ सिंहाळी कर्किजूकौ वृषस्य तु ।
युग्मस्य कन्या वश्या स्यात्कर्किणश्चापवृश्चिकौ ॥ ४०८

आद्यांशं विपदाख्यर्क्षे[6b] प्रत्यरे[c] च चतुर्थकम् ।
वधाख्ये च तृतीयांशं विना शेषा [d]न शोभनाः ॥ ४०९

जन्मकर्मर्क्षनाथौ[7] द्वौ मिथो मित्रे यदा तदा ।
वैनाशिकांशकोद्भूतदोषो भङ्गत्वमाप्नुयात् ॥ ४१०

जन्मकर्मर्क्षनाथौ द्वौ तदंशस्थौ यदा तदा ।
वैनाशिकांशकोद्भूतदोषो भङ्गत्वमाप्नुयात् ॥ ४११

एकयोनिषु[8] सम्पत्त्यै दम्पत्योः सङ्गमः सदा ।
भिन्नयोनिषु मध्यः स्यादरिभावो न चेत्तयोः ॥ ४१२

[1] वी. मि. सं., p. 782; प्र. पारि., p. 330; [a] चतुर्ष्वेषु.
[2] वी. मि. सं., p. 774.
[3] वी. मि. सं., p. 774.
[4] वी. मि. सं., p. 774.
[5] वी. मि. सं., p. 774.
[6] वी. मि. सं., p. 776; प्र. पारि., p. 318; [b] आद्यांशं; [c] प्रत्यरे; [d] सुशोभनाः.
[7] प्र. पारि., p. 319.
[8] प्र. पारि., p. 320.

अरिभावकृतोद्वाहः[1a] शीघ्रं मरणमाप्नुयात् ।
पौष्णोत्तरमघाहस्तमूलश्रवणसप्त[2] भाः ।
सूर्यवारयुता दोषहालाहलगणोद्धराः ॥ ४१३
मित्रोऽश्विन्यर्यमा[3] पूषा साहिर्बुध्न्या च रोहिणी ।
भौमवारेण संयुक्ता दोषाः स्युर्दोषघस्मराः ॥ ४१४
कृत्तिका-रोहिणी-स्वाती-शततारार्किचारणाः[4] ।
शुभयोगा महादोषकैरव्यादित्यवर्चसाः ॥ ४१५
एकादश[5] त्रये चैव दशमे च चतुर्थके ।
मध्यमो दम्पतीयोगो मित्रभावेऽतिशोभनः ।
वश्यराशौ विद्यमाने योगोऽयं शोभनो मतः ॥ ४१६
गुरुर्गुरुज्ञौ[6] शुक्रज्ञौ व्यर्का व्याराश्च वीन्दुना ।
व्यर्केन्द्ववनिजाः सर्वे सुहृदो रिपवः परे ॥ ४१७
उत्तमो[7] मित्रवर्गः स्यात्सममित्रं तु मध्यमम् ।
कनिष्ठः समवर्गः स्याद्वैरवर्गस्तु मारणः ॥ ४१८
कलहः[8] शत्रुमित्रत्वे वियोगः समशत्रुतः ।
जन्मनक्षत्रभागेशमित्रता चेच्छुभं तयोः ॥ ४१९
स्त्रीपुंसोः[9] जन्मनक्षत्रे विभागांशेशयोरपि ।

[1] वी. मि. सं., p. 777; प्र. पारि., p. 320; [a] भावे.
[2] वी. मि. सं., p. 781.
[3] वी. मि. सं., p. 781.
[4] वी. मि. सं., p. 782.
[5] प्र. पारि., p. 320.
[6] प्र. पारि., p. 321.
[7] प्र. पारि., p. 321.
[8] प्र. पारि., p. 321.
[9] प्र. पारि., p. 321.

वश्यभावे[1] सर्वसम्पत्साधको योग उत्तमः ॥ ४२०

दम्पत्योर्जन्मलग्नाभ्यां[2] यौ ग्रहावधिपौ मतौ ।
तयोः परस्परं मैत्रे सर्वसम्पदुपस्थिता ॥ ४२१

औदासीन्ये[3] मध्यमं स्यादरिभावे न शोभनम् ।
अरिभावकृतोद्वाहः शीघ्रं मरणमाप्नुयात् ॥ ४२२

उदासीने कृतं कर्म समत्वं धनपुत्रके ।
एवं[4] वश्यसमायोगे स्त्रीराशेः पुरुषस्य भे ।
वश्ययोगः शुभः प्रोक्तः दम्पत्योः शुभदः स्मृतः ॥ ४२३

वश्यराशौ[5] तु दम्पत्योः प्रेमभङ्गो न जायते ।
स्वामिदर्शनकाले च वश्यारूढोदयः शुभः ॥ ४२४

स्वामिराशेर्गृहे[6] वापि वश्यराशिः शुभावहः ।
वश्यराशिप्रकारोऽयं पुरा पद्मासनोदितः ॥ ४२५

सार्पाचतुष्कं[7] रौद्रं च याम्यं त्वाष्ट्रत्रिकं जलम् ।
विश्वेन्दुवासवं पौष्णं स्त्रीलिङ्गं समुदाहृतम् ॥ ४२६

सौम्यवारुणमूलानि[8] नपुंसकाह्वयानि च ।
शेषाः पुल्लिङ्गतां यातास्ताराः शृणु शचीपते ॥ ४२७

स्त्रीनक्षत्रेऽङ्गना[9] जन्म पुंनक्षत्रे पुमान् यदि ।
स संयोगः शुभः प्रोक्तः देवेन्द्रगुरुणा मतः ॥ ४२८

[1] प्र. पारि., p. 321.
[2] प्र. पारि., p. 321.
[3] प्र. पारि., p. 321.
[4] प्र. पारि., p. 322.
[5] प्र. पारि., p. 322.
[6] प्र. पारि., p. 322.
[7] प्र. पारि., p. 322.
[8] प्र. पारि., p. 322.
[9] प्र. पारि., p. 322.

अरिभावकृतोद्वाहः[1a] शीघ्रं मरणमाप्नुयात् ।
पौष्णोत्तरमघाहस्तमूलश्रवणसप्त[2] भाः ।
सूर्यवारयुता दोषहालाहलगणोद्धराः ॥ ४१३

मित्रोऽश्विन्यर्यमा[3] पूषा साहिर्बुध्न्या च रोहिणी ।
भौमवारेण संयुक्ता दोषाः स्युर्दोषघस्मराः ॥ ४१४

कृत्तिका-रोहिणी-स्वाती-शततारार्किचारणाः[4] ।
शुभयोगा महादोषकैरव्यादित्यवर्चसाः ॥ ४१५

एकादश[5] त्रये चैव दशमे च चतुर्थके ।
मध्यमो दम्पतीयोगो मित्रभावेऽतिशोभनः ।
वश्यराशौ विद्यमाने योगोऽयं शोभनो मतः ॥ ४१६

गुरुर्गुरुज्ञौ[6] शुक्रज्ञौ व्यर्का व्याराश्च वीन्दिना ।
व्यर्केन्द्ववनिजाः सर्वे सुहृदो रिपवः परे ॥ ४१७

उत्तमो[7] मित्रवर्गः स्यात्सममित्रं तु मध्यमम् ।
कनिष्ठः समवर्गः स्याद्वैरवर्गस्तु मारणः ॥ ४१८

कलहः[8] शत्रुमित्रत्वे वियोगः समशात्रुतः ।
जन्मनक्षत्रभागेशमित्रता चेच्छुभं तयोः ॥ ४१९

स्त्रीपुंसोः[9] जन्मनक्षत्रे विभागांशेशयोरपि ।

[1] वी. मि. सं., p. 777 ; प्र. पारि., p. 320 ; [a] भावे.
[2] वी. मि. सं., p. 781.
[3] वी. मि. सं., p. 781.
[4] वी. मि. सं., p. 782.
[5] प्र. पारि., p. 320.
[6] प्र. पारि., p. 321.
[7] प्र. पारि., p. 321.
[8] प्र. पारि., p. 321.
[9] प्र. पारि., p. 321.

वश्यभावे[1] सर्वसम्पत्साधको योग उत्तमः ॥ ४२०

दम्पत्योर्जन्मलग्नाभ्यां[2] यौ ग्रहावधिपौ मतौ ।
तयोः परस्परं मैत्रे सर्वसम्पदुपस्थिता ॥ ४२१

औदासीन्ये[3] मध्यमं स्यादरिभावे न शोभनम् ।
अरिभावकृतोद्वाहः शीघ्रं मरणमाप्नुयात् ॥ ४२२

उदासीने कृतं कर्म समत्वं धनपुत्रके ।
एवं[4] वश्यसमायोगे स्त्रीराशेः पुरुषस्य भे ।
वश्ययोगः शुभः प्रोक्तः दम्पत्योः शुभदः स्मृतः ॥ ४२३

वश्यराशौ[5] तु दम्पत्योः प्रेमभङ्गो न जायते ।
स्वामिदर्शनकाले च वश्यारूढोदयः शुभः ॥ ४२४

स्वामिराशेर्गृहे[6] वापि वश्यराशिः शुभावहः ।
वश्यराशिप्रकारोऽयं पुरा पद्मासनोदितः ॥ ४२५

सार्पाचतुष्कं[7] रौद्रं च याम्यं त्वाष्ट्रत्रिकं जलम् ।
विश्वेन्दुवासवं पौष्णं स्त्रीलिङ्गं समुदाहृतम् ॥ ४२६

सौम्यवारुणमूलानि[8] नपुंसकाह्वयानि च ।
शेषाः पुल्लिङ्गतां यातास्ताराः शृणु शचीपते ॥ ४२७

स्त्रीनक्षत्रेऽङ्गना[9] जन्म पुंनक्षत्रे पुमान् यदि ।
स संयोगः शुभः प्रोक्तः देवेन्द्रगुरुणा मतः ॥ ४२८

[1] प्र. पारि., p. 321.
[2] प्र. पारि., p. 321.
[3] प्र. पारि., p. 321.
[4] प्र. पारि., p. 322.
[5] प्र. पारि., p. 322.
[6] प्र. पारि., p. 322.
[7] प्र. पारि., p. 322.
[8] प्र. पारि., p. 322.
[9] प्र. पारि., p. 322.

पुंनपुंसकमेवं स्यात्सर्वत्र द्विकयोगतः ।
सौम्यपैतृकहस्ताश्च[1] मैत्रमूलाख्यवायवः ॥ ४२९

त्रीण्युत्तराणि[2] पौष्णं च रोहिणी शोभनप्रदा ।
अन्याश्च सर्वा वर्ज्याः स्युस्ताराः पाणिग्रहे सदा ॥ ४३०

मुक्तं[3] युक्तं ग्रहैर्यत्र काङ्क्षितं च त्रिभं भवेत् ।
दग्धज्वालाः सधूमाः स्युः क्रमाद्दोषेषु दुस्तराः ॥ ४३१

पापग्रहस्थनक्षत्रपृष्ठे[4] पूर्वत्र द्वयं खरम् ।
एतास्तारा विवर्ज्याः स्युः शुभकर्मणि सर्वदा ॥ ४३२

असंख्याता[5] ग्रहा नित्यं दुर्ज्ञेया भानुना खराः ।
अत एवार्कसंयुक्तं क्षेत्रं सर्वप्रमाददम् ॥ ४३३

दग्धक्रमेण[6] यत्क्षेत्रं त्रिंशता दिवसैस्तु तत् ।
पूर्वभावमथायाति यथा वृक्षास्तु नीरदैः ॥ ४३४

वत्सरेण[7] तदर्धेन तस्मादर्धेन यान्ति ये ।
मन्दजीवकुजैर्दग्धा राशयः पूर्वजं गुणम् ॥ ४३५

बुधेनाक्रान्तभं[8] सद्यः प्रकृतिं याति वृक्षवत् ।
उत्पातैः पीडितास्ताराः षण्मासैः प्रकृतिं ययुः ॥ ४३६

राहुकेतुविमुक्तं[9] यत् ग्रहवक्त्रनिपीडितम् ।
वत्सरार्धेन शुध्येत ग्रहयुद्धहतं च भम् ॥ ४३७

[1] प्र. पारि., p. 329.
[2] प्र. पारि., p. 329.
[3] प्र. पारि., p. 329.
[4] प्र. पारि., p. 329.
[5] प्र. पारि., p. 329.
[6] प्र. पारि., p. 329.
[7] प्र. पारि., p. 329.
[8] प्र. पारि., p. 329.
[9] प्र. पारि., p. 329.

अप्रकाशग्रहैर्युक्तं[1] सद्यो दोषाद्व्यपोहति ।
मुक्तं शुभग्रहैर्यत्तत् शुभत्वं त्रिदिनैर्व्रजेत् ॥ ४३८

यस्मिन्[2] भेऽस्तमयं यान्ति ग्रहास्तद्धं त्रिमासतः ।
शुद्धत्वमुपयातीति वज्रिन् ! पद्मासनोदितम् ॥ ४३९

ग्रहनक्षत्रयोगेन[3] यदुक्तो दोषसञ्चयः ।
तद्दिनं सर्वकार्येषु शुभेषु परिवर्जयेत् ॥ ४४०

यदुक्तमिदमृक्षेषु[4] तारासु च खगैर्युताः ।
चापल्यमपवादैस्ते दोषाः शोभनतामियुः ॥ ४४१

गुणायुतैर्युतोऽप्यस्मिन्[5] शकुन्यादिचतुष्टये ।
कालेनैव[6][a] शुभं सर्वं कृतं सम्यग्विनश्यति ॥ ४४२

उदयांशाः[7] स्वनाथेन मित्रसौम्येन वा पुनः ।
प्रेक्षितो वा तथास्तांशो दम्पत्योः पुत्रपौत्रदः ॥ ४४३

क्रूरग्रहमध्यगते[8]
लग्ने चन्द्रेऽथवा करग्रहणे ।
ते यमसदनाभिमुखं
गमनं वाञ्छन्ति कन्यायाः ॥ ४४४

जन्मेशाष्टमलग्नेशौ[9] मिथो यत्र व्यवस्थितौ ।
जन्मराश्यष्टमर्क्षोत्थदोषो नश्यति भावतः ॥ ४४५

[1] प्र. पारि., p. 329.
[2] प्र. पारि., p. 329.
[3] प्र. पारि., p. 329.
[4] प्र. पारि., p. 329.
[5] वी. मि. सं., p. 783; प्र. पारि., p. 330.
[6] वी. मि. सं., p. 783; प्र. पारि., p. 330; [a] नेष्टम्.
[7] प्र. पारि., p. 331.
[8] प्र. पारि., p. 332.
[9] प्र. पारि., p. 333.

निधनं[1] प्रहरार्धे तु निस्स्वत्वं यमघण्डके ।
कुलिके [a]सर्वनाशः स्याद्रात्रावेते न दोषदाः ॥ ४४६

उल्कापाते[2] महापाते महाशनिनिपातने ।
नभोशनिनिपाते च भूकम्पपरिवेषयोः ॥ ४४७

ग्रामोत्पाते[3] शिवाशब्दे दुर्निमित्ते न शोभनम् ।
केतवो यत्र दृश्यन्ते सधूमा [b]वा पृथग्विधाः ॥ ४४८

पश्चादेवोपरागे[4] तु दोषः स्यान्नैव पूर्वतः ।
गृहदाहादयो दोषा यथा स्युर्दहनात्परम् ॥ ४४९

ग्रहाणां[5] ग्रहणं चैव वर्जयेद्दिनसप्तकम् ।
युद्धग्रहाणामन्योन्यं[6] निर्घाते वा कुकम्पने ।
महोत्पातयुतात् कालात् सप्तरात्रं शुभं त्यजेत् ॥ ४५०

महागणितमार्गस्थो[7] व्यतीपातोऽतिदोषदः ।
बलवद्गुणसम्पन्नोऽप्यसौ कुलविनाशनः ॥ ४५१

यन्नक्षत्रं[8] पातमध्यस्थकालः
तन्नक्षत्रं वर्जनीयं समस्तम् ।
यावत्तावत्पातकालः पुरस्तात्
पश्चाद्वर्ज्यं सर्वकार्येषु नूनम् ॥ ४५२

[1] वी. मि. सं., p. 791; प्र. पारि., p. 334; [a] दोषः.
[2] वी. मि. सं., p. 793; प्र. पारि., p. 334.
[3] वी. मि. सं., p. 793; प्र. पारि., p. 334; [b] ये पृथग्द्वयोः.
[4] वी. मि. सं., p. 793; प्र. पारि., p. 334.
[5] वी. मि. सं., p. 793; प्र. पारि., p. 334.
[6] वी. मि. सं., p. 793; प्र. पारि., p. 334.
[7] प्र. पारि., p. 335.
[8] प्र. पारि., p. 335.

स्वगृहविधुगृहस्थः[1] सौम्यभागस्थितो वा
गुरुरुपचययातः सौम्यगो वा बलाढ्यः ।
अपि गुरुतरदोषा यान्ति नाशं यथैव
श्रुतिरपि समधीता पापनाशाय दृष्टा ॥ ४५३

उदयभवनतोऽरित्र्यायगा[2] दीप्ततापा
निजगृहगतसौम्याः प्राणिनः कण्टकस्थाः ।
यदि शशिनि शुभस्थे कर्मणि प्रस्थिते वा
निजमुदयगदोषं नाशयेच्छीतरश्मिः ॥ ४५४

चन्द्रादित्यौ[3] शुभांशस्थौ बलाढ्यौ स्वोच्चगौ यदा ।
महादोषसमाख्याता दोषा भङ्गं ययुस्तदा ॥ ४५५

अथातः[4] सम्प्रवक्ष्यामि दोषाणां रूपलक्षणम् ।
तथा तेषां बलं चैव यथोवाचाम्बुजासनः ॥ ४५६

नाशयोगस्तथा[5] मृत्युयोगो दग्धस्तथैव च ।
विषदग्धाग्नियोगाश्च ग्रहजन्मर्क्षमेव च ॥ ४५७

शकटो[6] ग्रहयोगश्च शनियोगो विषं तथा ।
गरयोगस्तथा पक्षच्छिद्रं नक्षत्रलुञ्छनम् ॥ ४५८

अपरो[7] धीनिरोधश्च दिनमृत्युस्तथैव च ।
वारनक्षत्रयोगश्च काणान्धर्क्षं तथैव च ॥ ४५९

[1] प्र. पारि., p. 336.
[2] प्र. पारि., p. 336.
[3] प्र. पारि., p. 336.
[4] प्र. पारि., p. 336.
[5] प्र. पारि., p. 336.
[6] प्र. पारि., p. 336.
[7] प्र. पारि., p. 336.

विषलग्नाख्ययोगश्च[1] पश्चाकर्किस्तथैव च ।
मासशून्यतथाशून्य(?) शशिदिग्दाह एव च ॥ ४६०

रक्तस्थूणस्तथापातो[2] व्यतीपातस्तथैव च ।
दिवा ऋक्षप्रकाशश्च महाशूलस्तथैव च ॥ ४६१

चन्द्रार्कयोगे[3] भूकम्पः कण्टकः स्थूणसंज्ञकः ।
अदृश्यग्रहचारश्च ग्रहरश्मिस्तथैव च ॥ ४६२

पापग्रहसुसंयुक्तराशिरित्येवमादयः[4] ।
दोषाश्च गणिताः सर्वे गुणेभ्यो बलिनः कलौ ॥ ४६३

तथापि[5] दोषा नश्यन्ति स्वापवादैर्गुणैरपि ।
दोषा[6] ये स्वापवादैस्तु स्वरूपाभावमाययुः ।
यथा पापा ययुः सर्वे प्रायश्चित्तैरभावताम् ॥ ४६४

स्वर्क्षव्ययगतं[7] भानुमपि पश्येद्धरासुतः ।
सोऽन्धतां न गुरोर्दद्याद्यदीन्दुः सत्क्रियारतः ॥ ४६५

यस्य[8] लग्नर्क्षचन्द्रर्क्षौ गुरोः सप्तमपञ्चमौ ।
तृतीये वा स दोषाणामपवादविनाशनः ॥ ४६६

यस्य[9] लग्नर्क्षचन्द्रर्क्षाद्रविर्विपदि वा स्थितः ।
प्रत्यरे[10] वा वधे वासौ दोषाणामपवादहा ॥ ४६७

[1] प्र. पारि., p. 336.
[2] प्र. पारि., p. 336.
[3] प्र. पारि., p. 336.
[4] प्र. पारि., p. 336.
[5] प्र. पारि., p. 336.
[6] प्र. पारि., p. 337.
[7] प्र. पारि., p. 337.
[8] प्र. पारि., p. 338.
[9] प्र. पारि., p. 338.
[10] प्र. पारि., p. 338.

यस्य[1] सर्वग्रहाः सन्ति दुस्थाने गोचरे तथा ।
दोषापवादा नश्यन्ति दोषास्तत्र बलाधिकाः ॥ ४६८

तिथिरेकगुणा[2] वारो द्विगुणस्त्रिगुणं च भम् ।
योगश्चतुर्गुणः पञ्चगुणस्तिथ्यर्धसंज्ञकः ॥ ४६९

ततो[3] मुहूर्तो बलवान् तस्मात्पश्येद्बलाबलम् ।
शुभेक्षितयुताः शस्ताः उद्वाहेऽखिलराशयः ॥ ४७०

पातालाम्बरपञ्चमे[4] द्विनवमे लग्ने च सौम्यग्रहाः
क्रूराः षष्ठगताः शशी धनगतः सर्वे त्रिरेकादशे ।
जामित्रे ग्रहवर्जिते न च भृगुः षष्ठे कुजश्चाष्टमे
षष्ठान्त्यस्थशशी विवाहसमये शेषेषु ते शोभनाः ॥ ४७१

अनिष्टस्थानस्थोप्यशुभद[5] - एवाशुभगतः
शुभांशस्थः सौम्योदितबलदृशा वा हिततनुः ।
तदानीं चन्द्रोतिप्रथितशुभकृच्चेद्बलयुतः
स्वतुङ्गस्वर्क्षस्थो यदि शुभकरः किं पुनरयम् ॥ ४७२

ग्रहाः[6] सर्वे लग्नादशुभगदितस्थानसहिताः
स्वतुङ्गे वा स्वर्क्षे यदि समियुरुत्कृष्टबलिनः ।
तदा तेनैवास्मिन् कथितमखिलं दद्युरशुभं
भवे युक्ताः प्रोक्तं शुभमतितरां दद्युरखिलम् ॥ ४७३

अग्निहोत्रादिभिर्यत्स्यादीक्षातो[7] ब्राह्मणस्य च ।
तत्कन्यां विधिवद्दत्वा फलमाप्नोति मानवः ॥ ४७४

[1] प्र. पारि., p. 338.
[2] प्र. पारि., p. 338.
[3] प्र. पारि., p. 338.
[4] प्र. पारि., p. 338.
[5] प्र. पारि., p. 340.
[6] प्र. पारि., p. 340.
[7] प्र. पारि., p. 355.

तिस्रः[1] कन्या यथान्यायं पालयित्वा निवेद्य च ।
न पिता नरकं याति नारी वा स्त्रीप्रसूतिनी ॥ ४७५

वेदोदितानि[2] कर्माणि न करोति दिने दिने ।
चाण्डालीं योनिमाप्नोति श्वयोनिषु च जायते ॥ ४७६

भर्त्रा[3] पत्नी समभ्यर्च्या वस्त्रालङ्कारभूषणैः ।
उत्सवे पितृमातृभ्यां श्वश्रूश्वशुरबन्धुभिः ॥ ४७७

अप्रयच्छन्[4] पिता काले [a]पतिश्चानुपयन्नृतौ ।
पुत्रश्चाभक्तदो[b] मातुर्गर्ह्यदण्ड्याश्च धर्मतः ॥ ४७८

सूक्ष्मेभ्योऽपि[5] प्रसङ्गेभ्यो निवार्या स्त्री स्वबन्धुभिः ।
श्वश्र्वादिभिः कुलस्त्रीभिः पालनीया दिवानिशम् ॥ ४७९

आयव्ययेऽर्थसंस्कारे[6] गृहोपस्कररक्षणे ।
शौचाग्निकार्ये संयोज्या रक्षा स्त्रीणामियं स्मृता ॥ ४८०

पित्रा[7] भर्त्रा सुतैर्न स्त्री वियुक्ताऽन्यगृहे वसेत् ।
असत्सङ्गविशेषेण गर्ह्यतामेति सा ध्रुवम् ॥ ४८१

पूर्वोत्थानं[8] गुरुष्वर्चा भोजनव्यञ्जनक्रिया ।
जघन्यासनशायित्वं कर्म स्त्रीणामुदाहृतम् ॥ ४८२

[1] वी. मि. सं., p. 834.

[2] स्मृ. रत्ना., p. 219.

[3] या. अप., p. 107.

[4] कृत्य. समु., p. 99; बा. आ., p. 216; [a] अपतिश्चानुयन्नृतौ; रक्षको मातुर्गर्ह्या दण्ड्याः. Repeated; see p. 192 *infra*.

[5] बा. आ., p. 216.

[6] बा. आ., p. 216. Repeated; see p. 192 *infra*.

[7] बा. आ., p. 216. *Ibid.*

[8] बा. आ., p. 216. *Ibid.*

यानाटनदिवास्वप्नमक्रिया दूषणं[1] स्त्रियाः ।
आर्तार्ते[2] मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते[3] म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥ ४८३

शरीरार्धं[4] स्मृता जाया पुण्यापुण्यफले समा ।
अन्वारूढा जीवती वा साध्वी भर्तृहिताय सा ॥ ४८४

प्रसाधनं[5] नृत्यगीतसमाजोत्सवदर्शनम् ।
मांसमद्याभियोगं च न कुर्यात्प्रोषिते पतौ ॥ ४८५

व्रतोपवासनिरता[6] ब्रह्मचर्ये व्यवस्थिता ।
दमदानरता नित्यमपुत्राऽपि दिवं व्रजेत् ॥ ४८६

अन्नार्थं[7] तण्डुलप्रस्थमपराह्णे तु सेन्धनम् ।
वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः ॥ ४८७

एतावदेव साध्वीनां चोदितं [a]विधवाशनम् ।
प्रातिलोम्येन[8] सम्भूता नियोगेन विना च ये ।
सावित्रीपतिताज्जातास्त्रयः सङ्करजातयः ॥ ४८८

दया[9] क्षमाऽनसूया[b] च शौचानायासमङ्गलम् ।
अकार्पण्यमस्पृहत्वं[c] सर्वसाधारणानि[d] तु[e] ॥ ४८९

[1] बा. आ., p. 216. Repeated; see p. 193 *infra*.
[2] बा. आ., p. 218; या. अप., p. 109. *Ibid.*
[3] बा. आ., p. 218; या. अप., p. 109. *Ibid.*
[4] बा. आ., p. 234; या. अप., p. 111. Repeated; see p. 194 *infra*.
[5] बा. आ., p. 231. *Ibid.*
[6] बा. आ., p. 234. *Ibid.*
[7] गौ. मि., p. 225; आ. ध. व्या., p. 239; [a] विधवाधनम्.
[8] म. गो., p. 135.
[9] या. अप., p. 164; ब्र. कल्प., p. 4; [b] अनसूयाश्च शौचानाशास; [e] च, हे, व्रत., p. 8; [e] च, कृ. रत्ना., p. 14; [c] ण्यास्पृहत्वं च; [e] च, परा. आ., p. 84; [c] ण्यास्पृहत्वे च; [d] इमे, वी. मि. प., p. 32; स्मृ. मुक्ता. का., p. 9; [c] चास्पृहत्वं.

परे[1][a] वा बन्धुवर्गे वा [b]मित्रे द्वेष्टरि वा सदा ।
आपन्ने[c] रक्षितव्यं तु दयैषा परिकीर्तिता ॥ ४९०

आत्मवत्सर्वभूतेषु[2] यद्धिताय शिवाय च ।
वर्तते सततं हृष्टः कृत्स्ना ह्येषा दया स्मृता ॥ ४९१

बाह्ये[3] चाध्यात्मिके[d] चैव [e]दुःखे [f]चोत्पादिते [g]क्वचित् ।
न कुप्यति न [h]वा हन्ति सा क्षमा परिकीर्तिता ॥ ४९२

न[4] गुणान्[i] गुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ॥ ४९३

यो[5] धर्ममर्थं कामं वा लभते मोक्षमेव वा ।
न द्विष्यात्तं सदा प्राज्ञः साऽनसूया स्मृता बुधैः ॥ ४९४

[1] या. अप., p. 164; ब्र. कल्प., p. 4; [b] मित्रद्वेष्टरि; [c] आपन्न-रक्षिका, वि., p. 453; [c] आत्मवद्वर्तितव्यं हि, स्मृ. च. सं., p. 33; [a] यदा तु बन्धुवर्गेषु; [c] आपन्नो रक्षितव्यस्तु, हे. व्रत., p. 8; कृ. रत्ना., p. 15; ए. तत्व., p. 20; [c] आत्मवद्वर्तितव्यं हि दयैवैषा, वै. व., p. 124; [c] आपदे रक्षणं यत्तु, वी. मि. प., p. 33; स्मृ. मुक्ता. का., p. 9; [c] आपन्नो रक्षितव्ये यत्.

[2] वी. मि. सं., p. 138.

[3] या. अप., p. 164; ब्र. कल्प., p. 4; [d] वा, का. वि., p. 453 [g] तथा, स्मृ. च. सं., p. 33; [d] चाभ्यन्तरे; [e] दुःख उत्पादिते; [h] चा, हे व्रत., p. 8; [f] औत्पादिके, कृ. रत्ना., p. 15; ए. तत्व., p. 20; वै. व. p. 124; वी. मि. प., p. 33; (वी. मि. सं., p. 138; [d] चाभ्यन्तरे) स्मृ. मुक्ता. का., p. 10.

[4] या. अप., p. 164; ब्र. कल्प., p. 4; का. वि., p. 453; स्मृ. च सं., p. 33; हे. व्रत., p. 8; कृ. रत्ना., p. 15; ए. तत्व., p. 20; वी. मि सं., p. 138; [i] दुर्गुणान् गुणैः, वी. मि. प., p. 33; स्मृ. मुक्ता. का., p. 10

[5] वै. व., p. 124.

अभक्ष्यपरिहारश्च[1a, b] संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे[c] च व्यवस्थानं [d]शौचमेतत्प्रकीर्तितम् ॥ ४०५

शरीरं[2] पीड्यते येन [e]सुशुभेनापि कर्मणा ।
अत्यन्तं [f]तत्र [g]कर्तव्यमनायासः स उच्यते ॥ ४०६

यदारम्भे[3] भवेत्पीडा नित्यमत्यन्तमात्मनः ।
तद्वर्जयेद्धर्म्यमपि सोऽनायासः प्रकीर्तितः ॥ ४०७

प्रशस्ताचरणं[4] नित्यं [h]नाप्रशस्तप्रवर्तनम् ।
एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ ४०८

स्तोकादपि[5] प्रदातव्यमदीनेनान्तरात्मना[i, j] ।
अहन्यहनि [k]यत्किञ्चिदकार्पण्यं [l]तदुच्यते ॥ ४०९

[1] या. अप., p. 164; ब्र. कल्प., p. 4; का. वि., p. 453; [b] तु, स्मृ. च. सं., p. 33; [b] तु दुष्टसंसर्गवर्जनम्, हे. व्रत., p. 8; कृ. रत्ना., p. 15; स्मृ. रत्ना., p. 2; [d] प्रचक्षते, ए. तत्व., p. 20; [b] तु, वै. व., p. 124; वी. मि. सं., p. 138; [c] स्वधर्मेषु, वी. मि. प., p. 33; [a] अधर्मे, स्मृ. मुक्ता., p. 10.

[2] या. अप., p. 165; ब्र. कल्प., p. 4; का. वि., p. 453; [e] अशुभेनापि, स्मृ. च. सं., p. 33; हे. व्रत., p. 8; [g] कुर्वीत, कृ. रत्ना., p. 15; ए. तत्व., p. 20; [g] कुर्वीत, वी. मि. प., p. 33; वी. मि. सं., p. 138; [e] शुभेनापि च; [f] वर्जयेत्तु सोऽनायासः, स्मृ. मुक्ता. का., p 10.

[3] वै. व., p. 124.

[4] या. अप., p. 165; ब्र. कल्प., p. 4; [h] अप्रशस्तविवर्जनम्, (का. वि., p. 453; स्मृ. च. सं., p. 33; हे. व्रत., p. 9; ब्र. कल्प. वत्पाठः), कृ. रत्ना., p. 15; (ए. तत्व., p. 20: वै. व., p. 124; वी. मि. प., p. 33; वी. मि. सं., p. 138; स्मृ. मुक्ता. का., p. 10; ब्र. कल्पवत्पाठः).

[5] या. अप., p. 165; ब्र. कल्प., p. 4; [l] हि तत्स्मृतं, का. वि., p. 543; [l] हि तत्स्मृतं, स्मृ. च. सं., p. 33; [i] हि दातव्यं मुदितेन; [l] हि तत्स्मृतं, हे. व्रत., p. 9; [i] उपकर्तव्यं; [l] हि तत्स्मृतं, कृ. रत्ना., p. 16; [l] हि तत्स्मृतं, स्मृ. रत्ना., p. 2; [l] हि, ए. तत्व., p. 20; [i] च दातव्यमदीनेनैव चात्मना; [l] हि तत्स्मृतं, वै. व., p. 124; स्मृ. च. सं., वत्पाठः, वी. मि. प., p. 34; कृ. रत्ना. वत्पाठः, वी. मि. सं., p. 138; [k] तदकार्पण्यमु, स्मृ. मुक्ता. का., p. 10; [j] न दीनेन; [l] हि तत्स्मृतम्.

यथोत्पन्नेन[1a] सन्तोषः कर्तव्यो [b]ह्यन्नवस्तु वा ।
परस्याचिन्तयित्वार्थं साऽस्पृहा परिकीर्तिता ॥ ५००

विवर्जयेदसन्तोषं[2] विषयेषु सदा नरः ।
परद्रव्याभिलाषं च साऽस्पृहा कथ्यते बुधैः ॥ ५०१

यथा[3] विद्या यथा कर्म यथा वित्तं यथा वयः ।
जनस्तथैव[c] वर्तेत वेषादिभिरनुद्धतः ॥ ५०२

स्वाध्यायोऽध्यापनं[4] चापि यजनं याजनं तथा ।
दानं प्रतिग्रहश्चापि षट् कर्माण्यग्रजन्मनः ॥ ५०३

इज्याऽध्ययनदाने[5] च प्रजानां परिपालनम् ।
शस्त्रास्त्रधारणं सेवा कर्माणि क्षत्रियस्य तु ॥ ५०४

स्वधर्मविदनुरक्तः[6] शुचिरनुद्धत उद्युक्तो देशकालविन्नीतिनिगमेतिहासकुशलोऽव्यसनी मृदुरर्थशास्त्रयोग्यो हस्त्यश्वपुरुषाचाराहोरात्रयामनिर्गमविनिश्चितमतिश्च स्वपरबलबलाबलज्ञो बलाधिकृतः सेनापतिः स्यात् । कुलाढ्य उद्युक्तो मृदुरुदात्तः समरचित्तः शूरोऽनुरक्तोऽभेद्यः

[1] या. अप., p. 165; ब्र. कल्प., p. 4; [b] अर्थवस्तुना, का. वि., p. 453; [b] अल्पवस्तुना, स्मृ. च. सं., p. 33; [a] यथोपपन्नैः; [b] स्वागतैर्द्विजैः । परार्थं नाभिलाषेत, हे. व्रत., p, 9; [a] यथोपपन्ने; [b] ह्यल्पवस्तुनि । परस्य चिन्तयन्नर्थं, कृ. रत्ना., p. 16; [b] ष्यथ वस्तुना, स्मृ. रत्ना., p. 132; [a] यथोत्पन्नैस्तु; [b] स्वागतैर्धनैः । परार्थं नाभिलाषेत, ए. तत्व., p. 20; [b] ष्यल्पवस्तुना, वै. व., p. 124; स्मृ. रत्ना. वत्पाठः स्वार्जितैरिति परं भेदः, वी. मि. प., p. 34; [b] अर्थवस्तुना, स्मृ. मुक्ता. का., p. 10; [b] ह्यल्पवस्तुनि.

[2] वी. मि. सं., p. 138.

[3] या. अप., p. 165; वै. आ., p. 422; [c] जानंस्तथैव कुर्वीत न वेषादिभिरुद्धतः, वी. मि. प., p. 36; [c] जानंस्तथैव.

[4] परा. आ., p. 85.

[5] परा. आ., p. 85.

[6] या. बा., I, p. 184.

पत्तिविशेषज्ञः इङ्गिताकारकुशलः प्रतिहारः स्यात्। वनकुलकालजातिसात्म्यगुणवयःशीलायुरादानगमनकल्पनावान् व्यपगतभयो विजयोर्जितमना हस्त्यध्यक्षः स्यात्। क्षेत्रजातिसात्म्यगुणलक्षणवाहनास्त्रज्ञोऽत्यर्थसमर्थः शुचिरनुद्धतोऽनुरूपोऽश्वाध्यक्षः स्यात्। सन्धिभेदसन्धानस्थानज्ञोऽनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालज्ञो दर्शनीयो नीतिगतिज्ञः प्राज्ञो वाग्मी दूतः स्यात्। उभयत उत्तमवंशप्रभवः शुद्धो मनुबृहस्पत्युशनःशास्त्रविद्दण्डनीत्यादिकुशलोऽशठोऽजिह्मः सम्मानासम्मानाविकृतो विगतभीः कार्याकार्यविनिश्चितमतिराहार्यः सर्वोपधाशुद्धो गूढमन्त्रो मन्त्री स्यात्। अविकार्योऽविकलेन्द्रियः प्रतापवान् सुभगः सुमुखोऽकृपणोऽप्रमादी दक्षो दाक्षिण्यचारित्ररक्षणार्थमधिकरणसन्दिग्धविवेककृदुपरिकः स्यात्॥ ५०५

ब्रह्मशङ्खस्तुतिपुण्याहशब्दैर्विबोध्योत्थाय[1] सन्ध्यामुपास्य देवपितृब्राह्मणान् मनसा वा नमस्कृत्य धर्मार्थकामभयोपधाशुद्धावश्वकगृहीतायुधायातयामविश्वासोत्पन्नासन्नपरिवृतः॥ ५०६

दत्वा[2] भूम्यादिकं राजा ताम्रपट्टेऽथवा पटे।
शासनं कारयेद्धर्म्यं स्थानवंश्यादिसंयुतम्॥ ५०७

अनाच्छेद्यमनाहार्यं[3] सर्वभाव्यविवर्जितम्।
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयागतम्॥ ५०८

[1] या. बा., I, p. 188.
[2] या. अप., p. 579. Repetition; see p. 62 *infra*.
[3] या. अप., p. 579. Repetition; see p. 63 *infra*.

दातुः[1] पालयितुः स्वर्गं हर्तुर्नरकमेव च ।
षष्टिं वर्षसहस्राणि दानच्छेदफलं लिखेत् ॥ ५०९

स्वमुद्रावर्षमासार्धदिनाध्यक्षाक्षरान्वितम्[2] ।
एवंविधं राजकृतं शासनं समुदाहृतम् ॥ ५१०

वाग्धिग्वधः[3a] स्वकं चैव चतुर्धा कल्पितो दमः ।
पुरुषे[4b] दोषविभवं ज्ञात्वा सम्परिकल्पयेत् ॥ ५११

गुरून्[5] पुरोहितान्विप्रान् वाग्दण्डेनैव दण्डयेत् ।
विवादिनो नरांश्चान्यान् दोषिणोऽर्थेन दण्डयेत् ॥ ५१२

महापराधयुक्तांश्च वधदण्डेन दण्डयेत् ।
जगत्सर्वमिदं[6] हन्याद्ब्राह्मणस्य न तत्समम् ।
तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥ ५१३

अवध्यान्[7] ब्राह्मणानाहुः सर्वपापेष्ववस्थितान् ।
यद्यद्विप्रेषु कुशलं तत्तद्राजा समाचरेत् ॥ ५१४

राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम् ।
लोकवृत्ताद्राजवृत्तमन्यदाह[8] बृहस्पतिः ॥ ५१५

[1] या. अप., p. 580. Repetition; see p. 63 *infra*.

[2] या. अप., p. 580. Repetition; see p. 63 *infra*.

[3] परा. आ., p. 455; द. वि., p. 20; [a] वाग्धिग्धनं वधश्चैव चतुर्धा कथितो दमः । व्य. माला., p. 337; द. वि. वत्पाठः. Repeated with variation, *infra* p. 226.

[4] परा. आ., p. 455; द. वि., p. 20; [b] पुरुषं विभवं दोषं ज्ञात्वा तं परिकल्पयेत्.

[5] परा. आ., p. 455.

[6] परा. आ., p. 456.

[7] परा. आ., p. 456.

[8] राज. रत्ना., p. 77.

राज्यं[1] पुरोविवाहं च सपिण्डीकरणं पितुः ।
गुणवत्सु[2] कनिष्ठेषु ज्येष्ठ एव समर्हति ॥ ५१६

विहिताकरणात्[3] किन्तु प्रतिषिद्धनिषेवणात् ।
भक्ताच्छादं प्रदायैषां शेषं गृह्णीत पार्थिवः ॥ ५१७

अनेन[4] कर्मणा नैते प्रायश्चित्तदयावहाः ।
अन्यत्र[5] ब्राह्मणात् किन्तु राजा धर्मपरायणः ।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥ ५१८

वसनस्याशनस्यैव[6] तथैव रजकस्य च ।
त्रयं[a] व्यपोह्य तच्छिष्टं दायादानां प्रकल्पयेत् ॥ ५१९

धूमावसानिकं[7] द्रव्यं[b] सहायास्तानतः पुरा ।
तथैवाशनवासांसि[c] विगणय्य [d]धने मृता ॥ ५२०

परिपूर्णं[8] गृहीत्वाऽऽधिं बन्धं वा साधु लग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥ ५२१

आद्यौ[9] तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ च विसंवादे तौ विना तत्सुतावपि ॥ ५२२

आहैको[10] दर्शयामीति साधुरेषोऽपरोऽब्रवीत् ।
दाताहमेतद्द्रविणमर्पयाम्यपरोऽब्रवीत् ॥ ५२३

[1] राज. रत्ना., p. 79.
[2] राज. रत्ना., p. 79.
[3] हार., p. 213. Repetition; see p. 22 *infra*.
[4] हार., p. 213. Repetition; see p. 21 *infra*.
[5] गौ. मि., p. 225; आ. ध. व्या., p. 239.
[6] गौ. मि., p. 226; आ. ध. व्या., p. 240; [a] धनम्, Repeated; see p. 210 *infra*.
[7] गौ. मि., p. 226; आ. ध. व्या., p. 240; [b] ग्राह्यं सभायां स्नानतः; [c] वसना; [d] धवे मृते. भूमावसानिकं श्राव्यं सन्ध्यायां स्नानतत्परा इति पाठभेदः.
[8] स्मृ. उद्धार., p. 325.
[9] स्मृ. उद्धार., p. 326.
[10] स्मृ. उद्धार., p. 326.

दर्शने[1] प्रत्यये दाने ऋणिद्रव्यार्पणे तथा ।
चतुःप्रकारः प्रतिभूः शास्त्रदृष्टो मनीषिभिः ॥ ५२४

धटोऽग्निरुदकं[2] चैव विषं [a]कोषं च पञ्चमम् ।
षष्ठं च तण्डुलः प्रोक्तं सप्तमं तप्तमाषकम् ॥ ५२५

अष्टमं[3 b] [का? फा] लमित्युक्तं नवमं धर्मजं स्मृतम् ।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयंभुवा ॥ ५२६

क्रिया[4] न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥ ५२७

स्वाध्यायो[5] यजनं दानं पशूनां पालनं तथा ।
कुसीदकृषिवाणिज्यं वैश्यकर्माणि सप्त वै ॥ ५२८

शौचं[6] ब्राह्मणशुश्रूषा [c]सत्यमक्रोध एव च ।
शूद्रकर्म तथा मन्त्रो [d]नमस्कारोऽस्य [e]नोदितः ॥ ५२९

शूद्रस्य[7] द्विजशुश्रूषा सर्वशिल्पानि चाप्यथ ।
विक्रयः सर्वपण्यानां शूद्रधर्म उदाहृतः ॥ ५३०

धर्मार्थमुभयार्थं[8] वा ब्राह्मणानेव धारयेत् ।
जातब्राह्मणशब्दस्य साह्यस्य कृतकृत्यता ॥ ५३१

[1] स्मृ. उद्धार., p. 326.

[2] कृ. चि., p. 26; स्मृ. उद्धार., p. 339; [a] कोशश्च पञ्चमः । षष्ठश्च तण्डुलः प्रोक्तः सप्तमं तप्तमाषकः.

[3] कृ. चि., p. 26; स्मृ. उद्धार., p. 339; [b] अष्टमः काल इत्युक्तो धर्मजं नवमं भवेत्. Repetition of *vv.* 3 and 4 on p. 80 *infra.*

[4] कृ. चि., p. 26. Repeated; see p. 47 *infra.*

[5] परा. आ., p. 85.

[6] परा. आ., p. 85; गृ. कल्प., p. 58/a; [c] नित्यं; [d] अत्र वेदितः, गृ. रत्ना., p. 475; [d] अत्र देशितः, म. पारि., p. 230; [e] चोदितः, व. कौ., p. 569; [e] देशितः.

[7] व. कौ., p. 570.

[8] व. कौ., p. 570:

यस्मिन्[1] कामाः प्रविशन्ति विषयेभ्योपसंहृताः ।
विषयान्न पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥ ५३२

यस्मिन्[2] क्रोधः शमं याति विफलः सम्यगुत्थितः ।
आकाशेऽग्निर्यथा क्षिप्तः स कैवल्याश्रमे वसेत् ॥ ५३३

संसारमेव[3] निस्सारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजेदकृतोद्वाहः[a] परं वैराग्यमाश्रितः ॥ ५३४

अतीतान्न[4] स्मरेद्भोगान्न[b] तथाऽनागतानपि ।
प्राप्तांश्च नाभिनन्देद्यः स कैवल्याश्रमे वसेत् ॥ ५३५

श्रद्धा[5] ध्यानं तपः शौचं यस्य वित्तं चतुष्टयम् ।
स्मरणं[6] चाद्वितीयस्य स कैवल्याश्रमे वसेत् ॥ ५३६

अन्तस्थानीन्द्रियाण्यन्तर्बहिष्ठान्[7] विषयान् बहिः ।
शक्नोति यः सदा कर्तुं स कैवल्याश्रमे वसेत् ॥ ५३७

आत्यन्तिकं[8] ब्रह्मचर्यमाश्रमत्रयवासिनाम् ।
स्वदारनियमात्सम्यग्ब्रह्मचारी गृहाश्रमी ॥ ५३८

पितृमन्त्रोच्चरे[9][c] रौद्रे आत्मालम्भेऽधमेक्षणे ।

[1] यति. सं., p. 3.

[2] यति. सं., p. 3.

[3] वै. व., p. 301; यति. सं., p. 4; [a] प्रव्रजन्त्यकृतोद्वाहाः.

[4] वै. व., p. 302; यति. सं., p. 6. [b] भोगांस्तथैव.

[5] यति. सं., p. 6.

[6] यति. सं., p. 6.

[7] वै. व., p. 302; यति. सं., p. 6.

[8] यति. सं., p. 27.

[9] म. पारि., p. 58; यति. सं., p. 67; आ. रत्न., p. 18; [c] पितृमन्त्रानुचरणे आत्मालम्भे क्षणे तथा.

अधोवायुसमुत्सर्गे[1] आक्रन्दे क्रोधसंभवे ॥ ५३९

मार्जारमूषकस्पर्शे [a]प्रहासेऽनृतभाषणे ।
निमित्तेष्वेषु[b] सर्वेषु[c] कर्म[d] कुर्वन्नुपस्पृशेत्[e] ॥ ५४०

क्षुते[2] निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते ।
पतितानां[3] च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥ ५४१

आर्द्रं[4] तृणं गोमयं [f]वा भूमिं वा संस्पृशेद्द्विजः ।
न[5] किञ्चिद्भेषजादन्यदन्यद्वा दन्तधावनात् ।
विना भोजनकालं तु भक्षयेदात्मवान् यतिः ॥ ५४२

नैवाददीत[6] पाथेयं यतिः [g]किञ्चिदनापदि ।
पक्कमापत्सु गृह्णीयाद्यावदह्नोपभुज्यते ॥ ५४३

न[7] तीर्थवासी नित्यं स्यान्नोपवासपरो यतिः ।
न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत् ॥ ५४४

बन्धमोक्षविभागज्ञो[8] बन्धाच्चेन्मोक्षणेच्छया ।
उपायान्वेषणे युक्तः को न मुच्येत बन्धनात् ॥ ५४५

[1] स्मृ. च. आ., p. 262; हे. प. श्रा., p. 959; [c] धर्मार्थं, परा. आ. p. 240; [e] अपि, स्मृ. रत्ना., p. 39; [b] निमित्तेषु इति न दृश्यते, म. पारि. p. 58; [d] दक्षिणं श्रवणं, यति. सं., p. 67; [b] निमित्तेषु च, शू. चि. p. 94; [d] दक्षिणं श्रवणं, आ. रत्न., p. 18; [e] अपः, वै. आ., p. 45 वि. पारि., II, p. 161; आ. म., p. 15; [c] धर्मार्थं, वी. मि. आ., p. 102 [c] धर्मार्थं, स्मृ. मुक्ता. आ., p. 17; [a] हासे चानृतभाषणे, बा. आ., pp. 7 and 461; आ. भू., p. 32.

[2] यति. सं., p. 67.

[3] यति. सं., p. 67.

[4] म. पारि., p. 58; यति. सं., p. 67; शू. शि., p. 94; [f] च.

[5] परा. आ., p. 195.

[6] परा. आ., p. 195; यति. सं., p. 107; [g] अनापदि.

[7] परा. आ., p. 195; वै. व., p. 329.

[8] वै. व., p. 353; यति. सं., pp. 88 and 100.

यथा[1] चित्तं समासक्तं जन्तोर्विषयगोचरे ।
यदि नारायणोऽप्येवं को न मुच्येत बन्धनात् ॥ ७४६

पाथेयमेकरात्रस्य[2] पानीयं दुर्गमे पथि ।
गृह्णीयान्नाधिकं चान्नं भेषजं तु यथेच्छया ॥ ७४७

तत्कर्म[3] यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम् ॥ ७४८

लोहितार्कमुपासीत[4] सन्ध्यामातारकोदयात् ।
हृत्पद्मकोटरावासं चिन्मात्रज्योतिषं हरिम् ॥ ७४९

ध्यायेन्नारायणं[5] ह्यादौ त्रीन् कृत्वा प्राणसंयमान् ।
तावद्ध्यायेत्पुनर्यावन्निद्रावशमुपागतः ॥ ७५०

सुप्त्वोत्थितः[6] पुनर्ध्यायेत्तिष्ठन् ध्यायेज्जपन् पुनः ।
प्राग्रात्रेऽपररात्रे च मध्यरात्रे समाहितः ॥ ७५१

सन्ध्यास्वह्नि[7] विशेषेण चिन्तयेन्नित्यमीश्वरम् ।
कृत्वा हृत्पद्मनिलये विष्णवाख्यं विश्वसंभवम् ॥ ७५२

आत्मानं[8] सर्वभूतानां परस्तात्तमसः स्थितम् ।
सर्वस्याधारमव्यक्तमानन्दं ज्योतिरव्ययम् ॥ ७५३

पुराणं[9] पुरुषं शंभुं ध्यायन्मुच्येत बन्धनात् ।
मत्वाऽपृथक् स्वमात्मानं सर्वस्मादेव केवलम् ॥ ७५४

[1] वै. व., p. 353.
[2] यति. सं., p. 107.
[3] वै. व., p. 353.
[4] वै. व., p. 353.
[5] वै. व., p. 353.
[6] वै. व., p. 353.
[7] वै. व., p. 353.
[8] वै. व., p. 354.
[9] वै. व., p. 354.

आनन्दमक्षरं[1] ज्ञानं ध्यायीत च पुनः पुनः ।
तस्माद्ध्यानरतो नित्यमात्मविद्यापरायणः ॥ ५५५

ज्ञानं[2] समभ्यसेद्ब्रह्म येन मुच्येत बन्धनात् ।
वसीत[3] चर्म चीरं वा छत्रोपानद्विवर्जितः ॥ ५५६

प्राणायामैर्दहेद्दोषं[4 a] मनोवाग्देहसंभवम् ।
प्रत्याहारेण संसर्गं ध्यानेनैवैश्वरान् गुणान् ॥ ५५७

धाव्यमानं[5 b] यथा नश्येद्धातूनां संस्मृतं मलम् ।
तथेन्द्रियगतो दोषः प्राणायामेन दह्यति ॥ ५५८

आदानं[6] बोधमुत्सर्गं[c] वायोस्त्रिस्त्रिः समभ्यसेत् ।
ब्रह्माणं केशवं शंभुं ध्यायन्मुच्येत बन्धनात् ॥ ५५९

रक्तं[7] पितामहं ध्यायेद्विष्णुं [d]नीलोत्पलं प्रभुम् ।
श्वेतमक्ष्यं[e] हरं चैव संसारार्णवतारणम् ॥ ५६०

[1] वै. व., p. 354.

[2] वै. व., p. 354.

[3] सो. कल्प., p. 5/b.

[4] मो. कल्प., p. 42/b ; ब्रा. स., p. 12 ; [a] प्राणायामैर्दहेद्दोषा(न्) मनोवाक्कायसम्भवान्.

[5] मो. कल्प., p. 42/b ; ब्रा. स., p. 13 ; [b] धम्यमानं (तप्यमानं) यथा दह्याद्धातूनां सततं मलम्.

[6] मो. कल्प., p. 42/b ; ब्रा. स., p. 13 ; [c] रोधमुत्सर्गं मनसा त्रिः.

[7] मो. कल्प., p. 42/b ; ब्रा. स., p. 13 ; [d] नीलोत्पलप्रभं ; [e] श्वेतं तु त्र्यम्बकं.

२

## ॥ आचारकाण्डम् ॥

शौचं[1] च[a] कुर्यात्प्रथमं पादौ प्रक्षाळयेत् ततः ।
उपस्पृश्य [b]तदभ्युक्ष्य गृहीतं शुचितामियात् ॥ १

सुप्त्वा[2] क्षुत्वा च भुक्त्वा च [c]निष्ठीव्योक्त्वाऽनृतानि च ।
पीत्वाऽपोऽध्येष्यमाणश्च[d] आचामेत्प्रयतोऽपि सन् ॥ २

भुञ्जानस्य[3] तु विप्रस्य [e]कदाचित्स्रवते [f]गुदः ।
उच्छिष्टमशुचित्वं च तस्य शौचं [g]कथं भवेत् ॥ ३

पूर्वं[4] कृत्वा[h] तु शौचं तु ततः पश्चादुपस्पृशेत् ।
ततः [i]कृतोपवासश्च पञ्चगव्येन शुध्यति ॥ ४

उपविष्टस्तु[5] विण्मूत्रं कर्तुं यस्तं न विन्दति ।
तथाऽतिकुर्याच्छौचार्थं स्वस्य शौचस्य सर्वदा ॥ ५

[1] शु. कौ., p. 317; ब्र. कल्प., p. 36/2; हे. प. श्रा., p. 965; [a] प्र; [b] तदा, गृ. रत्ना., p. 171; [a] कुर्यात्प्रथमतः, नि. प्र., I, p. 281; वी. मि. आ., p. 119; बा. आ., p. 458.

[2] वी. मि. आ., p. 100; ब्र. कल्प., p. 34; [d] पीत्वापाध्येसामाणश्च आचमेत्प्रयतोऽपि सन् ? हे. प. श्रा., pp. 957 and 966; आ. दर्श., p. 7; [c] अनृतं वचः; [d] पीत्वा च योऽध्येष्यमाणश्च, प्रा. तत्व., p. 469.

[3] स्मृ. च. आ., p. 248; स्मृ. रत्ना., p. 35; म. पारि., p. 49; [e] प्रच्यवेद्गुदम्; [g] विधीयते, आ. रत्न., p. 14; [e] प्रस्रवेद्गुदं; [g] विधीयते वै. आ., p. 18; [f] गुदं, स्मृ. मुक्ता. आ., p. 11; [f] गुदं.

[4] स्मृ. च. आ., p. 248; स्मृ. रत्ना., p. 35; [h] कृत्वोपवासं च, म. पारि., p. 49; स्मृ. रत्ना. वत्पाठः आ. रत्न., p. 14; [h] कृत्वैव; [i] कृत्वोपवासं च.

[5] स्मृ. रत्ना., p. 35.

प्रचरन्नन्नपानेषु[1a] यदोच्छिष्टमुपस्पृशेत् ।
भूमौ निधाय [b]तद्द्रव्यमाचान्तः प्रचरेत् पुनः ॥ ६

अरण्येऽनुदके[2c] रात्रौ चौरव्याघ्राकुले पथि ।
कृत्वा [d]मूत्रं पुरीषं [e]वा द्रव्यहस्तो [f]न [g]शुध्यति ॥ ७

उपस्पृश्य[3] तदभ्युक्ष्य गृहीतं[4] शुचितामियात् ।
हृत्स्थितं[5] सर्वभूतानां रविमण्डलसंस्थितम् ।
नीलजीमूतसङ्काशं[6] वासुदेवं चतुर्भुजम् ॥ ८

शङ्खचक्रगदापद्मधारिणं वनमालिनम् ।
तत्पादोदकजां[7] गङ्गां[h] निपतन्तीं स्वमूर्धनि ।
चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ॥ ९

सर्वतीर्थाभिषेकार्थं[8] पवित्रं विदुषां हि वाक् ।
मानसं[9] प्रवरं प्रोक्तं सेवितं ब्रह्मवादिभिः ॥ १०

[1] स्मृ. च. आ., p. 274; ब्र. कल्प., p. 36/2; [a] प्रवरं स्वान्न, आ. दर्श., p. 9; [a] प्रचरंश्चान्न; [b] आचम्य, गृ. रत्ना., p. 171; आ. दर्शवत्पाठः स्मृ. रत्ना., p. 41; [b] आचम्य, शु. वि., pp. 25 and 26; आ. दर्शवत्पाठः नि. प्र., I, p. 281; ग. आचा., p. 54; वै. आ., p. 52; आ. म., p. 17; वी. मि. आ., p. 117.

[2] स्मृ. रत्ना., p. 42; ब्र. कल्प., p. 36/2; [d] मूत्रपुरीषं च; [g] दुष्यति, हे. प. श्रा., p. 965; [d] मूत्रपुरीषं तु, गृ. रत्ना., p. 171; [c] अवश्यमुदके; [d] मूत्रपुरीषं; [g] दूष्यति, नि. प्र., I, p. 281; मूत्रपुरीषं तु, ग. आचा., p. 54; [d] मूत्रपुरीषे तु; [g] दूष्यति, शु. कौ., p. 317; वी. मि. आ., p. 119; स्मृ. मुक्ता. आ., p. 24; [f] निषिध्यति, बा. आ., p. 458; [e] च; [g] दुष्यति.

[3] ग. आचा., p. 54; शु. वि., pp. 25 and 26.

[4] .........चित्पतिं ब्रा. स., p. 26.

[5] स्मृ. मुक्ता. आ., p. 45.

[6] स्मृ. मुक्ता. आ., p. 45; स्मृ. रत्ना., p. 46.

[7] स्मृ. मुक्ता. आ., p. 45; स्मृ. रत्ना., p. 46; [h] धाराम्.

[8] स्मृ. मुक्ता. आ., p. 45.

[9] स्मृ. मुक्ता. आ., p. 45; स्मृ. रत्ना., p. 46.

मनःशुद्धिकरं[1] पुंसां नित्यं तत्स्नानमाचरेत् ।
ब्राह्ममाग्नेयकं[2] भौमं वायव्यं दिव्यमेव च ।
वारुणं यौगिकं चैव षोढास्नानं प्रकीर्तितम् ॥ ११

शुचिदेशान्मृदादाय[3] कुर्याद्गात्रोपलम्भनम् ।
मन्त्रं पार्थिवसंयुक्तं भौमस्नानं तदुच्यते ॥ १२

गोखुराद्रज[4] आदाय गोसावित्रीं जपेद्बुधः ।
गात्रेष्वथ[5] तथा लिप्य स्नानं वायव्यमुच्यते ॥ १३

वायव्यं[6] गोरजः प्रोक्तमस्तं गच्छति गोपतौ ।
विद्वत्सरस्वतीप्राप्तं स्नानं सारस्वतं [a]स्मृतम् ॥ १४

उत्तरायणमध्ये[7] तु यदा वर्षति वासवः ।
आतपेन सह स्नानं दिव्यं स्नानं तदुच्यते ॥ १५

शक्तश्चेद्वारुणं[8] स्नानमप्रायत्ये तदैव हि ।
हृत्स्थितं सर्वभूतानां रविमण्डलसंस्थितम् ॥ १६

स्नानमब्दैवतैर्मन्त्रैर्जलमज्जनगाहनैः[9] ।
तर्पणं पितृदेवानां स्नानं वारुणमुच्यते ॥ १७

[1] स्मृ. रत्ना., p. 46.
[2] स्मृ. रत्ना., p. 46.
[3] स्मृ. रत्ना., p. 46.
[4] स्मृ. रत्ना., p. 46.
[5] स्मृ. रत्ना., p. 46.
[6] स्मृ. च. आ., p. 349; हे. प. श्रा., p. 854; चतुर्थपादो न दृश्यते, परा. प्रा., p. 16; स्मृ. रत्ना., p. 46; वै. आ., p. 136; वी. मि. आ., p. 196; [a] तु तत्.
[7] स्मृ. रत्ना., p. 46.
[8] स्मृ. रत्ना., p. 46.
[9] स्मृ. रत्ना., p. 46.

यौगिकं[1] स्नानमाख्यातं [a]योगो विष्णुविचिन्तनम् ।
आत्मतीर्थप्रशंसायां[b] व्यासेन परिकीर्तितम् ॥ १८

आर्द्रेण[2] कपटेनाङ्गशोधनं कापिलं स्मृतम् ।
भुवि[3] मूर्ध्नि तथाऽऽकाशे मूर्ध्न्याकाशे तथा भुवि ।
आकाशे भुवि मूर्ध्नि स्यान्मन्त्रस्नानं विधीयते ॥ १९

पादादिप्रणवं[4] कुर्यादर्धर्चान्ते तथैव च ।
ऋगादिप्रणवं कुर्यान्मन्त्रस्नानेष्वयं विधिः ॥ २०

विद्वत्सरस्वतीप्राप्तं[5] स्नानं सारस्वतं स्मृतम् ।
प्राप्य[6] सारस्वतं तीर्थं भवेन्मुदितमानसः ।
सर्वतीर्थाभिषेकाद्धि[7] पवित्रं विदुषां हि वाक् ॥ २१

द्रुपदादिव[8][c] यो मन्त्रो वेदे वाजसनेयके ।
अन्तर्जले त्रिरावर्त्य सर्वपापैः प्रमुच्यते ॥ २२

तया[9][d] प्रक्षालितं सर्वं स्वदेहं परिचिन्तयेत् ।
इदं [e]स्नानं परं मन्त्वा सहस्रादधिकं [f]स्मृतम् ॥ २३
एवं[10] स्नात्वा विशेषेण सर्वपापैः प्रमुच्यते ।

[1] स्मृ. रत्ना., p. 46; वि. म., p. 359 ; [a] योगात् ; [b] विद्वत्सरस्वतं प्राप्तं स्नानं सारस्वतं स्मृतम्.

[2] स्मृ. च. आ., p. 350 ; वी. मि. आ., p. 197.

[3] स्मृ. रत्ना., p. 46.

[4] स्मृ. रत्ना., p. 46.

[5] स्मृ. मुक्ता. आ., p. 45.

[6] स्मृ. मुक्ता. आ., p. 45 ; स्मृ. रत्ना., p. 46.

[7] स्मृ. रत्ना., p. 46.

[8] आ. दर्श., p. 20 ; नै. कल्प., p. 105 ; [c] द्रौपती दिवेति ? तच्चिन्त्यं ब्रा. स., p. 28 ; [c] द्रुपदा नाम, हे. प. श्रा., p. 902.

[9] स्मृ. रत्ना., p. 47 ; स्मृ. मुक्ता. आ., p. 45 ; [d] तथा ; [e] स्नानवरं मन्त्वात् ; [f] मतम्.

[10] स्मृ. रत्ना., p. 47.

दिवाकीर्ति[1] चितिं [a]चैव शवं यूपं रजस्वलाम् ।
स्पृष्ट्वाप्यकामतो[b] विप्रः स्नानं कृत्वा विशुद्ध्यति ॥ २४

युगं[2] युगद्वयं[c] चैव त्रियुगं च चतुर्युगम् ।
चण्डालः[d] सूतिकोदक्या पतितानामधः क्रमात् ॥ २५

ऋषिश्छन्दो देवताश्च[3] ध्यात्वा मन्त्रार्थमेव च ।
अनुष्ठानं ततः कुर्यादिति मन्त्रविदां मतम् ॥ २६

धाराच्युतेन[4] तोयेन सन्ध्योपास्तिर्विगर्हिता ।
'आपोहिष्ठा'[5] सुप्रसिद्धा नव पादा भवन्ति ते ।
पादं पादं क्षिपेद्वारि ब्रह्महत्यां व्यपोहति ॥ २७

आपोहिष्ठादिभिः[6] पादैः शिरस्यष्टैव विप्रुषः ।
यस्य[7] क्षयात्परस्तात्तु क्षिप्त्वा त्रिः परिषेचयेत् ॥ २८

रजस्तमोमोहजातान्[8] जाग्रत्स्वप्नसुषुप्तिगान् ।
वाङ्मनःकायजान्दोषान् नवैतान्नवभिर्दहेत् ॥ २९

प्रातःसन्ध्यां[9] ततः कृत्वा सङ्कल्पं बुध आचरेत् ।
प्रातः सङ्कल्पयेद्विद्वान् उपवासव्रतादिकम् ॥ ३०

पद्ममर्धासनं[10] वापि तथा स्वस्तिकमासनम् ।

[1] स्मृ. रत्ना., p. 59; प्रा. म., p. 95; [a] यूपं पतितं च; [b] प्रमादतः.

[2] स्मृ. रत्ना., p. 59; या. मि., p. 323; [c] च द्वियुगं, आ. रत्न., p. 18; [c] च द्वियुगं; [d] चण्डालसूतिकोदक्यापतितानां.

[3] स्मृ. रत्ना., p. 83.

[4] आ. रत्न., p. 40.

[5] स्मृ. मुक्ता. आ., p. 90.

[6] स्मृ. मुक्ता. आ., p. 90.

[7] स्मृ. मुक्ता. आ., p. 90.

[8] स्मृ. मुक्ता. आ., p. 90.

[9] ति. तत्त्व., p. 42.

[10] वी. मि. आ., p. 271.

बद्धासनं[1a] नियम्य[b] स्वं स्मृत्वा [c]चार्षादिकं तथा ।
संनिमीलितदृङ्मौनी[d] प्राणायामं[e] समभ्यसेत्[f] ॥ ३१

सव्याहृतिं[2g] सप्रणवां गायत्रीं शिरसा सह ।
त्रिः [h]पठेदायतप्राणः प्राणायामः स उच्यते ॥ ३२

मार्जनं[3] जलमध्ये तु प्राणायामो यतस्ततः ।
उपस्थानं ततः पश्चात्सावित्रीजप उच्यते ॥ ३३

सूतके[4] मृतके वापि सावित्र्या चाञ्जलिं क्षिपेत् ।
न गायत्रीं जपेद्धीमान् कुर्यात्सौरीमुपस्थितिम् ॥ ३४

देशक्षोभे[5] महापत्तौ मार्जनाद्यर्घ्याद्यसम्भवे ।
सन्ध्यागतं[6] सहस्रांशुं मन्त्रैः कुर्यादुपस्थितिम् ॥ ३५

अनृतं[7] मद्यगन्धं च दिवा स्वापं च मैथुनम् ।
पुनाति वृषलस्यान्नं बहिः सन्ध्या ह्युपासिता ॥ ३६

[1] या. अप., p. 44 ; मो. कल्प., p. 42/b ; [b] नियम्यासुं स्मृत्वाचार्यादिकं, ब्र. कल्प., p. 45 ; [b] नियम्यासून् स्मृत्वा वीर्यादिकं, स्मृ. च. आ., p. 370 ; [b] नियम्यासून्, ब्रा. स., p. 13 ; [b] नियम्यासून् स्मृत्वाचार्यादिकं, आ. दर्श., p. 27 ; [c] ऋष्यादिकं ; [e] प्राणायामान्, गृ. रत्ना., p. 239 ; [b] सन्नियम्य स्मृत्वाचार्यादिकं, परा. आ., p. 291 ; स्मृ. रत्ना., p. 81 ; आ. तत्व., p. 384 ; [c] ऋष्यादिकं ; [f] समाचरेत्, आ. रत्न., p. 38 ; [a] आसने नियम्यासून् स्मृत्वा चर्ष्यादिकं, वै. आ., p. 190 ; [b] नियम्यासून् स्मृत्वा चर्ष्यादिकं, वि. पारि., II, p. 174 ; [b] नियम्यास्यं स्मृत्वा चर्ष्यादिकं ततः ; [d] ससम्मीलित, वी. वि. आ., p. 271 ; या. वी., p. 55 ; आ. दर्श वत्पाठः, आ. भू., p. 92 ; [b] नियम्यासून् स्मृत्वा चर्ष्यादिकं ; [f] समाचरेत्.

[2] आ. दर्श., p. 28 ; मो. कल्प., p. 42/b ; ब्रा. स., p. 13 ; नि. प्र., I, p. 465 ; या. वी., p. 67 ; वि. पारि., II, p. 174 ; [g] प्रणवव्याहृतियुतां सावित्रीं ; [h] जपेत्.

[3] आ. दर्श., p. 31 ; या. वी., p. 61.

[4] स्मृ. मुक्ता. आ., p. 121.

[5] स्मृ. मुक्ता. आ., p. 122.

[6] स्मृ. मुक्ता. आ., p. 122.

[7] स्मृ. मुक्ता. आ., p. 375.

श्वशूद्रपतितांश्चैव[1] रासभं च रजस्वलाम् ।
दृष्ट्वा तोयमुपस्पृश्याभाष्य स्नात्वा पुनर्जपेत् ॥ ३७

मार्जारमूषिकस्पर्शे[2] कर्म कुर्वन्नुपस्पृशेत् ।
रक्तं[3] प्रजापतिं ध्यायेद्विष्णुं नीलोत्पलप्रभम् ।
शङ्करं त्र्यम्बकं श्वेतं ध्यायन्मुच्येत बन्धनात् ॥ ३८

न[4] क्लिन्नवासाः स्थलगो जपादीनाचरेद्बुधः ।
जपकाले न भाषेत स्नानहोमादिकेषु च ॥ ३९

तूष्णीमासीत[5] च जपंश्चण्डालपतितादिकान् ।
दृष्ट्वा तान्वाप्युपस्पृश्याऽऽभाष्य स्नात्वा विशुध्यति ॥ ४०

विना[6] शब्दं जपो यस्तु चलज्जिह्वाद्विजच्छदः ।
उपांशुं तं जपं प्राहुर्मनसा मानसं बुधाः ॥ ४१

विधियज्ञाज्जपयज्ञो[7] विशिष्टो दशभिर्गुणैः ।
उपांशु स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥ ४२

जपयज्ञगणस्थं[8 a] च समित्पुष्पकुशाजलान् ।
उदपात्रार्घ्यभैक्षान्नं[b, c] वहन्तं नाभिवादयेत् ॥ ४३

उदक्यां[9] सूतिकां नारीं भर्तृघ्नीं ब्रह्मघातिनीम् ।
अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति ॥ ४४

[1] वै. आ., p. 46.

[2] वै. आ., p. 98.

[3] स्मृ. च. आ., p. 373.

[4] म. पारि., p. 78.

[5] म. पारि., p. 79.

[6] म. पारि., p. 79.

[7] म. पारि., p. 79.

[8] म. पारि., p. 28 ; आ. रत्न., p. 7 ; [b] पात्रार्घ, वि. पारि., II, p. 234 ; [a] स्थलस्थं ; [c] मध्वाज्यं.

[9] म. पारि., p. 28 ; ग. आचा., p. 147.

पाषण्डं[1] पतितं व्रात्यं महापातकिनं शठम् ।
सोपानत्कं कृतघ्नं च नाभिवादेत्कदाचन ॥ ४५

मनःसंहरणं[2] शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ॥ ४६

सायंप्रातस्तनौ[3] होमावुभौ सायं समस्य तु ।
आपन्नो जुहुयात्तस्य समिदेकाऽथवा द्वयम् ॥ ४७

सायंहोमस्य[4] मुख्यत्वात्तदीयं तन्त्रमिष्यते ।
चतस्र आहुतीः कुर्यात् तत्र द्वे सायमाहुती ॥ ४८

द्वे[5] प्रातराहुती चैव उपस्थानं सकृत्तथा ।
प्रस्थधान्यं[6] चतुष्षष्टिराहुतेः[a, b] परिकीर्तितम् ।
तिलानां[7] तु तदर्धं [c]स्यात्तदर्धं स्याद्घृतस्य तु ॥ ४९

आरम्भो[8] दार्शपौर्णम्योः अग्निहोत्रस्य चोदितः ।
प्रतिष्ठानं च कूर्मादेः मलमासे विवर्जयेत् ॥ ५०

[1] वि. पारि., II, p. 234.

[2] या. अप., p. 136; स्मृ. च. आ., p. 395; म. पारि., p. 78.

[3] वै. आ., p. 249.

[4] वै. आ., p. 249.

[5] वै. आ., p. 249.

[6] स्मृ. च. आ., p. 430; परा. अ., p. 316; स्मृ. रत्ना., p. 10 प्र. पारि., p. 391; आ. रत्न., p. 52; [b] आहुतिः परिकीर्तिता, वै. आ. p. 254; [a] चतुःषष्टेः, वि. पारि., II, p. 236; धान्यच्चतुःषष्टिः, प्र. पा. p. 228.

[7] स्मृ. च. आ., p. 430; परा. आ., p. 316; स्मृ. रत्ना., p. 10 प्र. पारि., p. 391; [c] तण्डुला व्रीहिभिः समाः, आ. रत्न., p. 52; वै. आ. p. 254; वि. पारि., II, p. 236.

[8] प्र. पारि., p. 410.

नयं[1] भस्माग्निहोत्रान्ते धार्यमेवाग्निहोत्रिभिः ।
अनाहिताग्नेर्ब्रह्माख्यमौपासनसमुद्भवम् ॥ ६१

प्रातश्चेत्[2] सङ्गवादूर्ध्वमन्ते वा नित्यकर्मणाम् ।
अथवा वैश्वदेवान्ते ब्रह्मयज्ञस्त्रिधा मतः ॥ ६२

स[3] चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ।
वैश्वदेवावसाने वा [a]नान्यदर्ते निमित्ततः ॥ ६३

यदि[4] स्यात्तर्पणादर्वाग्ब्रह्मयज्ञः कृतो न हि ।
कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमारभेत् ॥ ६४

ब्रह्मयज्ञप्रसिद्ध्यर्थं[5] विद्यां चाध्यात्मिकीं जपेत् ।
जप्त्वा[6] वा[b] प्रणवं [c]वाऽपि [d]ततस्तर्पणमारभेत् ॥ ६५

वसित्वा[7] वसनं शुक्लं स्थले विस्तीर्णबर्हिषि ।
विधिज्ञस्तर्पणं कुर्यान्न पात्रे तु कदाचन ॥ ६६

पात्राद्वा[8] जलमादाय शुभे पात्रान्तरे क्षिपेत् ।
जलपूर्णेऽथवा गर्ते न स्थले तु विबर्हिषि ॥ ६७

[1] परा आ., p. 318.

[2] बा. आ., p. 332.

[3] स्मृ. च. आ., p. 504 ; हे. प. श्रा., p. 917 ; [a] नान्यदा त्वनिमित्ततः, परा. आ., p. 334 ; स्मृ. रत्ना., p. 112 ; पूर्वार्धं परं, म. पारि., p. 281 ; [a] नान्यत्रापि, आ. तत्व., p. 395 ; [a] नान्यत्रेति निमित्तकात्, वै. आ., p. 263 ; स्मृ. उद्धार., p. 275 ; [a] नान्यत्रेति विनिश्चयः, आ. म., p. 71 ; स्मृ. मुक्ता. आ., p. 136.

[4] आ. रत्न., p. 59 ; बा. आ., p. 346.

[5] या. अप., p. 137 ; परा. आ., p. 350 ; म. पारि., p. 283 ; आ. तत्व., p. 371 ; स्मृ. उद्धार., p. 275 ; आ. भू., p. 172.

[6] या. अप., p. 137 ; परा. आ., p. 350 ; म. पारि., p. 283 ; [d] आचरेत्, आ. तत्व., pp. 371 and 395 ; [d] आचरेत्, स्मृ. उद्धार., p. 275 ; [b] अथ ; [d] आचरेत्, आ. भू., p. 275 ; [d] आचरेत् ; [c] चापि.

[7] या. अप., p. 137.

[8] या. अप., p. 137.

अयने[1] विंशतिः पूर्वा मकरे विंशतिः पराः ।
वर्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥ ५८

हस्तश्रवणपर्वाणि[2] ग्राह्याण्यौदयिकानि तु ।
हस्तर्क्षः सङ्गवस्पर्शी त्रिमुहूर्ता तु वैष्णवी ॥ ५९

सङ्गवात्परतः सा चेत्पूर्णिमौदायिकी स्मृता ।
त्रिरपः[3] प्रीणनार्थाय देवानामपि वर्जयेत् ।
अथर्षीणां यथान्यायं सकृच्चापि प्रजापतेः ॥ ६०

पितॄणां[4] प्रीणनार्थाय त्रिरपः पृथिवीपते ।
चतुर्थी[5] गणनाथस्य मातृविद्धा प्रशस्यते ।
मध्याह्नव्यापिनी [a]चेत्स्यात्परतश्चेत्परेऽहनि[b, c] ॥ ६१

श्रावणी[6] दौर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम् ॥ ६२

सायमाद्यन्तयोरह्नोः[7] सायम्प्रातश्च मध्यमे ।
उपवासफलप्रेप्सुः जह्याद्भुक्तचतुष्टयम् ॥ ६३

अष्टम्येकादशी[8] षष्ठी कृष्णपक्षे चतुर्दशी ।

[1] वै. आ., p. 108 ; का. मा., p. 214 ; ग. काल., p. 579 ; वी. मि. स., p. 135 ; पु. चि., p. 360.

[2] स्मृ. मुक्ता. का., pp. 132, 145 and 146.

[3] स्मृ. मुक्ता. आ., p. 242.

[4] स्मृ. मुक्ता. आ., p. 242.

[5] वै. ति., p. 10 ; वै. का., p. 146 ; पूर्वार्धं परं, का. मा., p. 115 ; ग. काल., p. 73 ; [b] च, ध. प्र., p. 200 ; [c] मातृविद्धा प्रशस्ता स्याच्चतुर्थी सर्वदा श्रुता । मध्याह्नव्यापिनी, नि. सि., II, p. 25 ; पूर्वार्धं परं, वी. मि. स., p. 36 ; [a] सा तु, तिथ्य., p. 41 ; स्मृ. मुक्ता. का., p. 57 ; कृत्य. समु., pp. 8 and 31.

[6] ति. तत्व., p. 55.

[7] वै. ति., p. 39.

[8] स्मृ. उद्धार., p. 113.

अमावास्या[1] तृतीया च कर्तव्या परसंयुता ।
कृष्णपक्षेऽष्टमी[2] चैव कृष्णपक्षे चतुर्दशी ॥ ६४

पूर्वविद्धा प्रकर्तव्या परविद्धा न कुत्रचित् ।
शुक्लपक्षेऽष्टमी[3] चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥ ६५

पूर्वविद्धैव[4] कर्तव्या शिवरात्रिर्बलेर्दिनम् ।
रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः ॥ ६६

तुष्यत्यामलकैर्विष्णुरेकादश्यां[5] विशेषतः ।
द्वादश्यामाद्यपादस्तु[6] कीर्तितो हरिवासरः ।
महादोषकरं चान्नं सम्प्राप्ते हरिवासरे ॥ ६७

न[7] कार्यं पारणं तत्र विष्णुप्रीणनतत्परैः ।
कांस्यं[8] मांसं सुरां द्यूतं व्यायामं क्रोधमैथुने ॥ ६८

दिवास्वापं पुनर्भक्षं चणकान् कोरदूषकान् ।
कांस्यं मधु परान्नं च द्वादश्यामष्ट वर्जयेत् ॥ ६९

कांस्यं[9] मांसं मसूरांश्च दूष्या व्यायाममैथुने ।
हिंसाऽसत्यं च तैलं च लोभं निर्माल्यलङ्घनम् ॥ ७०

[1] स्मृ. उद्धार., p. 113.
[2] स्मृ. उद्धार., p. 113.
[3] स्मृ. उद्धार., p. 113.
[4] स्मृ. उद्धार., p. 113.
[5] हे. प. का., p. 714.
[6] वै. ति., p. 39.
[7] वै. ति., p. 39.
[8] हे. प. का., p. 203.
[9] हे. प. का., p. 203.

कृत्वा[1] चैवोपवासं तु योऽश्नाति द्वादशीदिने ।
नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम् ॥ ७१

सर्वकालं[2] तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः ।
सङ्क्रान्त्यां[3] रविवारे च षष्ठ्यां भौमदिने तथा ।
द्रव्यान्तरगतं[4] तैलं न दुष्यति कदाचन ॥ ७२

उद्धृता[5] वा प्रशस्ताः स्युः शुद्धैः पात्रैर्यथाविधि ।
एकरात्रोषितास्ताश्च त्यजेदापः समुद्धृताः ॥ ७३

अक्षोभ्यानि[6] तडागानि नदी वापी सरांसि च ।
चण्डालाद्यशुचिस्पर्शे तीर्थतः परिवर्जयेत् ॥ ७४

भूमिष्ठमुदकं[7] मेध्यं [a]वैतृष्ण्यं यत्र गोर्भवेत् ।
अव्याप्तं[b] चेदमेध्येन तद्वदेव शिलागतम् ॥ ७५

अदुष्टाः[8] सन्तता धारा वातोद्धूताश्च रेणवः ।
स्त्रियो[9] बालाश्च[c] वृद्धाश्च न दुष्यन्ति कदाचन ॥ ७६

मार्जारश्चैव[10] दर्वी च मारुतश्च सदा शुचिः ।

[1] वै. ति., p. 39.

[2] हे. प. का., p. 716; आ. रत्न., p. 57.

[3] हे. प. का., p. 720.

[4] हे. प. का., p. 720.

[5] स्मृ. उद्धार., p. 246.

[6] स्मृ. उद्धार., p. 246.

[7] म. पारि., p. 464; स्मृ. उद्धार., p. 246; [a] वैतृष्ण्यं; [b] अत्याज्यं चैव मेध्येन.

[8] स्मृ. उद्धार., p. 249.

[9] स्मृ. उद्धार., p. 249; वी. मि. आ., p. 208; [c] वृद्धाश्च बालाश्च, प्रा. म., p. 97; वी. मि. आ वत्पाठः.

[10] प्रा. म., p. 97; वी. मि. आ., p. 208.

द्राक्षेक्षुयन्त्राकरकारुहस्त[1]
गोदोहनीयन्त्रविनिःसृतानि ।
बालैरथ स्त्रीभिरनुष्ठितानि
प्रत्यक्षदुष्टानि[a] शुचीनि तानि ॥ ७७

नष्टशौचे[2] व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
दीयमानं रुदत्यन्नं [b]किं मया दुष्कृतं कृतम् ॥ ७८

नाद्याच्छास्त्रनिषिद्धं[3] तु भक्ष्यभोज्यादिकं द्विजः ।
मांसं विगर्हितं चैव [c]शुक्तं बहुविधं तथा ॥ ७९

दधि[4] भक्ष्यं [d]शुक्तमपि [e]तथैव दधिसम्भवम् ।
कन्दमूलफलैः [f]पुष्पैः शस्तैः [g]शुक्तासवं तु [h]तत् ॥ ८०

अधिकारि[5 i] भवेन्मेध्यमभक्ष्यं तद्विकारकृत् ।
अतोऽन्यथा[6] तु [j] नाश्नीयाद्विधिं[k] हित्वा पिशाचवत् ।
यावन्ति पशुरोमाणि तावत्प्राप्नोति मारणम् ॥ ८१

मद्यं[7] मांसं [l]मैथुनं च भूतानां ललनं स्मृतम् ।
तदेव विधिना [m]कुर्वत्स्वर्गं प्राप्नोति मानवः ॥ ८२

[1] म. पारि., p. 471 ; नि. अमृ., p. 233 ; स्मृ. उद्धार., p. 249 ; [a] दृष्टानि.

[2] स्मृ. रत्ना., p. 183 ; वै. आ., p. 337 ; [b] यत्.

[3] वी. मि. आ., p. 520 ; गृ. रत्ना., p. 362 ; [c] भुक्तम्.

[4] वी. मि. आ., p. 522 ; म. कु., p. 180 ; [g] न वर्जयेत् उत्तरार्धं परं, गृ. रत्ना. p. 365 ; [e] यच्चैव ; [h] यत्, म. रा., p. 592 ; म. कुवत्पाठः, या. वी., p. 244 ; [d] च शुक्तेषु यच्चैव पूर्वार्धं परं, बा. आ., p. 440 ; [f] शान्तैर्योजितं यच्च शुक्तकम्.

[5] वी. मि. आ., p. 522 ; गृ. रत्ना., p. 365 ; [i] अविकारि, म. कु., p. 180 ; [i] अविकारि भवेद्भक्ष्यं, म. रा., p. 592 ; म. कुवत्पाठः.

[6] वी. मि. आ., p. 529 ; म. स. ना., p. 605 ; [k] यः, गृ. रत्ना., p. 382 ; [k] यः, प्रा. वि., p. 278 ; [j] च यः.

[7] म. स. ना., p. 620 ; गृ. रत्ना., p. 388 ; [l] च भूतानां मैथुनं ; [m] कुर्वन् स्वर्गमाप्नोति.

अभून्मांसपुरोडाशो[1] भक्ष्याणां मृगपक्षिणाम् ।
पुराणेष्वपि यज्ञेषु ब्रह्मक्षत्रसवेषु च ॥ ८३

रोगी[2] तु युक्तो विधिना हुतं विप्रवृतस्तथा ।
मांसमद्याचतुर्धैषा [a]प्रतिसङ्ख्या प्रकीर्तिता ॥ ८४

सौत्रामण्यां[3] तथा मद्यं श्रुतौ भक्ष्यमुदाहृतम् ।
रोगार्तोऽभ्यर्थितो[4] वापि यो मांसं [b]नात्त्यलोलुपः ।
फलं प्राप्नोत्ययत्नेन [c]सोऽश्वमेधशतस्य [d]च ॥ ८५

नोच्छिष्टो[5] ग्राहयेदाज्यं जग्धशिष्टं च सन्त्यजेत् ।
न भिन्नकांस्ये सन्ध्यायां पतितानां च सन्निधौ ॥ ८६

शूद्रशेषं[6] न भुञ्जीयाच्छ्राद्धान्नं शिशुभिः सह ।
शूद्रभुक्तावशिष्टं तु नाद्याद्भाण्डस्थितं त्वपि ॥ ८७

पर्णपृष्ठे[7] न भुञ्जीयाद्रात्रौ दीपं विना तथा ।
उपकाराय[8] यो ब्रूयाद्ब्राह्मणार्थे गवामपि ।
ब्रह्मयोनिशतं प्राप्य देवत्वमधिगच्छति ॥ ८८

कृतान्नं[9] चाकृतान्नेन परिवर्त्य विभज्यते ।

[1] म. स. ना., p. 620.

[2] बा. आ., p. 446 ; म. स. ना., p. 620 ; [a] परिसंख्या, एतदन्तमेव दृश्यते, उत्तरार्धं परं.

[3] वी. मि. आ., p. 549 ; म. स. ना., p. 620.

[4] म. स. ना., p. 621 ; गृ. रत्ना., p. 388 ; [b] नात्ति लोलुपः ; [c] सवस्य, बा. आ., p. 447 ; [b] अन्य ; [d] तु.

[5] वै. आ., p. 362.

[6] वै. आ., p. 362.

[7] वै. आ., p. 367.

[8] वै. आ., p. 423.

[9] म. स. ना., p. 1227.

वेदविद्याव्रतस्नाते[1] श्रोत्रिये गृहमागते ।
क्रीडन्त्योषधयः सर्वा यास्यामः परमां गतिम् ॥ ८९

न[2] स्पृशेद्वामहस्तेन [a]भुञ्जानोऽन्नं कदाचन ।
न [b]पादं न शिरो बस्तिं न पदा भाजनं स्पृशेत् ॥ ९०

अग्न्यगारे[3] गवां गोष्ठे देवब्राह्मणसन्निधौ ।
जप्ये भोजनकाले च पादुके परिवर्जयेत् ॥ ९१

उत्सङ्गे[4] च न भुञ्जीत न च पाणितलेऽजिने ।
शून्यागारे च नाश्नीयान्न च पाण्यासनस्थितः ॥ ९२

पात्रान्तरे[5] निधायास्वाद्यान्निरवशेषतः ।
एकपङ्क्त्युपविष्टा[6] ये न स्पृशन्ति परस्परम् ।
भस्मना[7] कृतमर्यादा न तेषां सङ्करो भवेत् ॥ ९३

अप्येकपङ्क्त्यां[8][c] नाश्नीयाद्ब्राह्मणैः[d] स्वजनैरपि ।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥ ९४

[1] वै. आ., p. 538.

[2] या. अप., p. 150; स्मृ. च. आ., p. 616; [b] पादौ, त्रा. स., p. 59; [a] अथ, (आ. दर्श., p. 61; गृ. रत्ना., p. 330; [b] पादौ) परा. आ., p. 424; श्रा. कौ., p. 171; वै. आ., p. 360; आ. म., p. 113; आ. भू., p. 275.

[3] वै. आ., p. 360.

[4] वै. आ., p. 361.

[5] वै. आ., p. 362.

[6] या. अप., pp. 226 and 476; गृ. कल्प., p. 85/a; हे. प. श्रा., p. 1193; गृ. रत्ना., p. 589.

[7] या. अप., pp. 226 and 476; गृ. कल्प., p. 85/a; हे. प. श्रा., p. 1193; गृ. रत्ना., p. 589.

[8] परा. आ., p. 429; आ. रत्न., p. 114; [d] संयुतः, आ. म., p. 114; बा. आ., p. 432; [c] पङ्क्तौ.

एकपङ्क्त्युपविष्टानां[1] दुष्कृतं यद्दुरात्मनाम् ।
सर्वेषां तत्समं तावद्यावत्पङ्क्तिर्न भिद्यते ॥ ९५

अग्निना[2] भस्मना [a]चैव सलिलेन विशेषतः ।
द्वारेण स्तम्भमार्गेण षड्भिः पङ्क्तिर्विभिद्यते ॥ ९६

मक्षिका[3] सन्तता धारा वेदसम्बन्धिबिन्दवः ।
सुरते स्त्रीमुखं चैव पवित्रं मनुरब्रवीत् ॥ ९७

कूश्माण्डं[4] तरुणीं चैव मूलकं बृहतीं तथा ।
श्रीफलं[5] च कलिङ्गं च धात्रीं प्रतिपदादिषु ॥ ९८

वर्जयेत्सप्तमी[6] यावदन्यथा कृच्छ्रमाचरेत् ।
सप्तम्यां रविवारे च दिवा रात्रौ तथैव च ॥ ९९

धात्रीफलं[7] नरोऽश्नीयादलक्ष्मीको भवेद्ध्रुवम् ।
विप्राणां भोजने काले यदि दीपो विनश्यति ॥ १००

[1] स्मृ. च. आ., p. 619 ; परा. आ., p. 429 ; आ. रत्न., p. 114; आ. म., p. 114 ; बा. आ., p. 432.

[2] या. अप., pp. 226 and 476. 476 तमे ; [a] वापि स्तम्भेनाप्युदकेन वा । द्वारसंक्रमणेनापि पङ्क्तिभेदः प्रकीर्तितः ॥ गृ. कल्प., p. 85/a ; स्मृ. च. आ., p. 619 ; [a] वापि स्तम्भेन सलिलेन वा । द्वारेण चैव मार्गेण पङ्क्तिभेदो बुधैः स्मृतः । हे. प. श्रा., p. 1193 ; या. अप., p. 476 ; तमपुटवत्पाठः, गृ. रत्ना., p. 589 ; परा. आ., p. 429 ; म. पारि., p. 333 ; आ. रत्न., p. 114 ; स्मृ. च. आ. वत्पाठः, आ. म., p. 114 ; बा. आ., p. 432 ; [a] चैव, स्मृ. च. आ. वत्पाठः.

[3] वि. पारि., II, p. 342.

[4] वि. पारि., II, pp. 342 and 352.

[5] वि. पारि., II, p. 342.

[6] वि. पारि., II, p. 342.

[7] वि. पारि., II, p. 342.

पाणिभ्यां[1] पात्रमालभ्य गायत्रीं मनसा स्मरेत् ।
पश्चाच्च दीपकं दृष्ट्वा तच्छेषं भुञ्जते द्विजाः ।
अन्यदन्नं[2] न भोक्तव्यं भुक्त्वा कृच्छ्रं समाचरेत् ॥ १०१

[1] वि. पारि., II, p. 342.
[2] वि. पारि., II, p. 342.

३

## ॥ श्राद्धकाण्डम् ॥

मातापित्रोर्मृतिप्राप्तौ[1] पुत्रैर्दाहादिकर्म च ।
प्राप्तकाले तु कर्तव्यं तिथ्यादि न तु दोषकृत् ॥ १

शुक्रवर्गा[2] विवर्ज्याः स्युस्तस्य लग्नग्रहे क्षणाः ।
कालहोरादि शुक्रस्य शावेऽवश्यं विवर्जयेत् ॥ २

मातुलानां[3] पितृव्याणां श्वशुराणां पितृष्वसुः ।
मातृणामनुजातानां तथैव ज्येष्ठयोषिताम् ॥ ३

वपनं नैव कर्तव्यमाह पाराशरो मुनिः ।
आर्द्रवासाश्च[4] मलिनः श्मश्रुलो दशभिर्दिनैः ।
मातापित्रोः[5] क्रियां कुर्यात् ज्ञातिबन्धुसमन्वितः ॥ ४

पित्रोर्मृतौ[6] तदारभ्य सपिण्डीकरणात्पुरा ।
योषितं तैलताम्बूलं क्षौरं च लवणं मधु ॥ ५

कांस्यं[7] परान्नमध्वानं वर्जयेद्दन्तधावनम् ।
कालभोजी च दर्भेषु अधःशाय्यप्रतिग्रहः ॥ ६

[1] वै. श्रा., p. 7.
[2] वै. श्रा., p. 57.
[3] वै. श्रा., p. 57.
[4] ग. काल., p. 322.
[5] ग. काल., p. 322.
[6] वै. श्रा., p. 62.
[7] वै. श्रा., p. 62.

चतुर्थेऽहनि[1] विप्रेभ्यो देयमन्नं हि बान्धवैः ।
गावः सुवर्णं वित्तं च प्रेतमुद्दिश्य शक्तितः ॥ ७

यदिष्टं[2] जीवतश्चासीत्तद्दद्यात्तस्य यत्नतः ।
गन्धपुष्पादिहीनश्च[3] अल्पाशी च व्रतं चरेत् ॥ ८

प्राक् सपिण्डीकृतेर्गच्छेत् स्त्रियं प्रेतस्य दाहकः ।
रेतसः[4] कर्दमाब्धौ तु पितॄन् प्रेतं च मज्जयेत् ॥ ९

नवमे[5] वाससां त्यागो नखरोम्णां [a]तथान्तिमे ।
अन्तर्दशाहे[6] दर्शश्चेत्पितुर्मातुर्गुरोर्मृतौ ।
पिण्डं दद्याद्दशाहान्तमितरेषां समापयेत् ॥ १०

लोहितो[7] यस्तु वर्णेन शिरः पुच्छस्तु पाण्डरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥ ११

अर्वाक्[8] सपिण्डीकरणात्कुर्याच्छ्राद्धानि षोडश ।
एकाहनि[9] विनष्टानां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कृत्वा पृथक् पात्रं प्रकल्पयेत् ॥ १२

[1] या. अप., p. 527; हे. प. का., p. 531; हे. प. श्रा., p. 293; नि. व्या., p. 2025.

[2] या. अप., p. 527; हे. प. श्रा., p. 293.

[3] वै. श्रा., p. 62.

[4] वै. श्रा., p. 62.

[5] वै. श्रा., p. 79; शु. चि., p. 62; [a] तदन्तिके, कृत्य. समु., p. 69; [a] तदन्तिके, नि. सि., III, p. 37.

[6] वै. श्रा., p. 89.

[7] ग. काल., p. 408.

[8] ग. काल., p. 418.

[9] ग. काल., p. 499.

कृत्वा[1] पूर्वमृतस्यादौ द्वितीयस्य ततः परम् ।
तृतीयस्य[2] ततः कार्यं सन्निपाते त्वयं क्रमः ॥ १३
भवेद्यदि[3] सपिण्डानां युगपन्मरणं तदा ।
सम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत् ॥ १४
द्वादशैकादशे[4] वाऽह्नि साग्निः कुर्यात्सपिण्डनम् ।
शावाशौचस्य मध्येऽपि कुर्यादेवाविशङ्कयन् ॥ १५
नवश्राद्धं[5] सपिण्डत्वं श्राद्धान्यपि [च] षोडश ।
एकेनैव - कुर्यापि? संविभक्तधनेष्वपि ॥ १६
क्षेत्रजादीन्[6] सुतान् [एतान्] एकादश यथोदितान् ।
पुत्रप्रतिनिधीन् प्राहुः क्रियालोपान्मनीषिणः ॥ १७
एकादशाहे[7a] यच्छ्राद्धमेकोद्दिष्टं समाचरेत् ।
यदि[8] कार्यं न कुर्वीत पुनः संस्कारमर्हति ॥ १८
एकोद्दिष्टस्य[9] शेषं तु ब्राह्मणेभ्यः समुत्सृजेत् ।
ततः स्वयं तु भुञ्जीत पुनर्मङ्गलभोजनम् ॥ १९
एकादशाहे[10] त्वाद्यस्य सङ्कटं तु यदा भवेत् ।
द्वादशाहेऽपि कर्तव्यं त्रयोविंशदिनेऽपि वा ॥ २०

[1] ग. काल., p. 499.

[2] ग. काल., p. 499.

[3] ग. काल., p. 500.

[4] ग. काल., p. 80.

[5] बा. प्रा., p. 31.

[6] बा. प्रा., p. 32.

[7] स्मृ. च. आशौ., p. 136; वै. श्रा., pp. 106 and 135; [a] दशेऽह्नि बा. आ., p. 582; [a] एकादशे(ह्नि).

[8] स्मृ. च. आशौ., p. 136; वै. श्रा., pp. 106 and 135; बा. आ. p. 582.

[9] का. त. वि., p. 488.

[10] स्मृ. च. आशौ., p. 137.

एकादशेऽह्नि[1] संप्राप्ते यस्य नोत्सृजते वृषः ।
प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ २१

यतेः[2] किञ्चिन्न कर्तव्यं न चान्येषां करोति सः ।
त्रिदण्डग्रहणादेव प्रेतत्वं विनिवर्तते ॥ २२

नवश्राद्धं[3] यतेर्न स्यात्सपिण्डीकरणं [a]तथा ।
अहन्येकादशे प्राप्ते कुर्यात्तस्य [b]तु पार्वणम् ॥ २३

सपिण्डीकरणं[4] पित्रोः पितृयज्ञविधानतः ।
पुत्राः सर्वे पृथक्कुर्युः यदा ज्येष्ठो न कारयेत् ॥ २४

अग्रजेन[5] कृतं कर्म नानुजेन पुनः कृतिः ।
श्राद्धं[6] नैमित्तिकं कुर्यात् प्रयतः सन् मलिम्लुचे ।
तीर्थश्राद्धं गजच्छाया प्रेतश्राद्धं तथैव च ॥ २५

चतुर्थीहोममन्त्रेण[7] त्वङ्मांसहृदयेन्द्रियैः ।
भर्त्रा संयुज्यते नारी तद्गोत्रा तेन सा भवेत् ॥ २६

चतुर्थीहोममन्त्रेषु[8] मांसमज्जास्थिभिः सह ।
एकत्वमागता भर्तुस्तस्मात्तद्गोत्रभागिनी ॥ २७

भर्तुर्गोत्रेण[9] नाम्ना च मातुः कुर्यात्सपिण्डनम् ।
तूष्णीं दम्पतिपिण्डाभ्यां कुशैरन्तरयन् पितॄन् ॥ २८

[1] श्रा. क. ल., p. 224.

[2] श्रा. चि., p. 161.

[3] या. अप., p. 538; स्मृ. च. आशौ., p. 171; [a] न वा; [b] हि.

[4] स्मृ. च. आशौ., p. 157; वै. श्रा., p. 99.

[5] स्मृ. च. आशौ., p. 157.

[6] श्रा. क. ल., p. 216.

[7] श्रा. चि., p. 161.

[8] हे. प. श्रा., p. 1651.

[9] या. अप., p. 542; हे. प. श्रा., p. 1651; नि. सि., III, p. 44; पूर्वार्धं परम्.

भर्तृगोत्रेण[1] दातव्यं स्त्रीणां पिण्डोदकं सुतैः ।
पितामह[2] पितृभ्यां च स्वेन स्वेन विधानतः ।
पाणिग्रहणिका[3 a] मन्त्राः पितृगोत्रापहारकाः ॥ २९

भर्तृगोत्रेण[4 b] नारीणां[c] देयं पिण्डोदकं [d]ततः ।
यस्य[5] न श्रूयते वार्ता [e]यावद्द्वादशवत्सरम् ।
कुशपुत्रकदाहेन[6 f] तस्य [g]स्यादवधारणम् ॥ ३०

पितरि[7] प्रोषिते तस्य न वार्ता नैव वा गतिः ।
ऊर्ध्वं पञ्चदशा[द्]वर्षात्कृत्वा तत्प्रतिरूपकम् ।
कुर्यात्तस्य [तु] संस्कारं यथोक्तविधिना ततः ॥ ३१

भविष्यत्ययने[8] पुण्यास्त्रिंशदेव तु दक्षिणे ।
अतीत उत्तरे नाड्य इति प्राहुः [h]पुराविदः ॥ ३२

[1] श्रा., कौ., p. 431 ; श्रा. क. ल., p. 244.

[2] श्रा. क. ल., p. 244.

[3] श्रा. कौ., p. 431 ; हे. प. श्रा., p. 1651 ; नि. प्र., I, p. 121 ; ग. काल., p. 298 ; उ. तत्व., p. 130 ; वै. श्रा., p. 181 ; [a] ग्रहणका, श्रा. क. ल., p. 244.

[4] श्रा. कौ., p. 431 ; हे. प. श्रा., p. 1651 ; [b] भर्तुः, श्रा. चि., p. 160 ; [c] दातव्यं स्त्रीणां पिण्डोदकं सुतैः, नि. प्र., I, p. 121 ; ग. काल., p. 298 ; उ. तत्व., p. 130 ; [b] भर्तुः, वै. श्रा., p. 181 ; [d] तथा.

[5] श्रा., म., p. 25 ; नि. अमृ., p. 266 ; वै. श्रा., p. 112 ; का. त. वि., p. 428 ; स्मृ. उद्धार., p. 235 ; नि. सि., III, p. 24 ; [e] वत्सरात्, वी. मि. स., p. 192 ; शु. भा., p. 41.

[6] श्रा. म., p. 25 ; नि. अमृ., p. 266 ; वै. श्रा., p. 112 ; [f] पत्रक, का. त. वि., p. 428 ; स्मृ. उद्धार., p. 235 ; नि. सि., III, p. 24 ; [g] धारणा, वी. मि. स., p. 192 ; शु. भा., p. 41.

[7] स्मृ. उद्धार., p. 235.

[8] हे. प. का., p. 423 ; हे. प. श्रा., p. 236 ; स्मृ. च. श्रा., p. 128 ; [h] मनीषिणः.

द्वादशाहादिकालेषु[1] सपिण्डीकरणं यदा ।
तदा [a]प्रशस्तनक्षत्रं परिशोध्य समाचरेत् ॥ ३३

सपिण्डीकरणे[2] त्रीणि ऋक्षाण्याहुर्महर्षयः ।
प्राजापत्यं तथा रौद्रं यद्दृक्षं सौम्यदैवतम् ॥ ३४

त्रिपादर्क्षं[3] विना वाऽपि भानुभौमशनैश्चरान् ।
सपिण्डीकरणं यद्वा मासिकाद्दात्परेऽहनि ॥ ३५

संस्कृतं[4b] व्यञ्जनाढ्यं[c] च पयोमधुघृतान्वितम् ।
श्रद्धया दीयते [d]यस्माच्छ्राद्धं तेन निगद्यते ॥ ३६

नित्यं[5] नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च ।
पार्वणं चेति मनुना श्राद्धं पञ्चविधं स्मृतम् ॥ ३७

नित्यश्राद्धमदैवं[6] स्यादर्घ्यपिण्डविवर्जितम् ।
अमावास्या[7] कलामात्रमुदये यत्र विद्यते ।
तत्र स्नानजपश्राद्धव्रतहोमादि कारयेत् ॥ ३८

आरोग्यं[8] चैव सौभाग्यं शत्रूणां [e]च पराजयम् ।
सर्वान्[9] कामान् [f]प्रियां विद्याधनमायुर्यथाक्रमम् ॥ ३९

[1] स्मृ. च. आशौ., p. 151 ; वै. श्रा., p. 160 ; [a] नक्षत्रे विपक्षादिषु कारयेत्.

[2] स्मृ. च. आशौ., p. 151.

[3] स्मृ. च. आशौ., p. 151.

[4] या. अप., p. 501 ; श्रा. कल्प., p. 39/a ; [b] स्वकृतं, हे. प. श्रा., p. 152 ; ग. काल., p. 368 ; [c] भोजनार्हं च पयोदधि, वी. मि. श्रा., pp. 3 and 7 ; [d] तेन श्राद्धं ; 7 पुटे.

[5] श्रा. सौ., p. 2 ; श्रा. वि., p. 1 ; श्रा. चि., p. 6.

[6] श्रा. कौ., p. 397 ; शु. कौ., p. 178.

[7] वै. श्रा., p. 262.

[8] नि. सि., III, p. 4 ; ग. काल., p. 391 ; [e] चाप, स्मृ. उद्धार., p. 194 ; श्रा. क. ल., p. 22 ; [e] च.

[9] नि. सि., III, p. 4 ; ग. काल., p. 391 ; स्मृ., उद्धार., p. 194 ; [f] प्रियान्, श्रा. क. ल., p. 22 ; [f] प्रियां.

सूर्यादिवासरेष्वेतच्छ्राद्धकृल्लभते[1a] फलम् ।
बवादिकरणेष्वेतच्छ्राद्धकृच्चाश्नुते[b, c] फलम् ॥ ४०

य[2] एवं वेत्ति मतिमान् तस्य श्राद्धफलं भवेत् ।
उपदेष्टाऽनुमन्ता च लोके तुल्यफलौ स्मृतौ ॥ ४१

इमं[3] श्राद्धविधिं पुण्यं कुर्याद्वापि पठेत्तु यः ।
सर्वकामैः स बध्नाति ह्यमृतत्वं च विन्दति ॥ ४२

ब्रह्मचारी[4] भवेत्पात्रं पात्रं वेदस्य पारगः ।
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥ ४३

आचिनोति[5] च शास्त्राणि आचारे स्थापयत्यपि ।
स्वयमाचरते[6] यस्तु तमाचार्यं प्रचक्षते ॥ ४४

ऋत्विग्वादे[7] नियुक्तश्च समौ सम्परिकीर्तितौ ।
यज्ञे स्वाम्याप्नुयात्पुण्यं हानिं वादेऽथवा जयम् ॥ ४५

पारदार्यमधर्मन्तु[8] तज्जातौ कुण्डगोलकौ ।
अश्रद्धेयावभोज्यान्नौ क्षेत्रजाद्यास्ततोऽशुभाः ॥ ४६

[1] वै. श्रा., p. 292; ग. काल., p. 391; [a] षु वारेष्वेतत्; [b] एवं श्राद्धकृल्लभते क्षणम्, स्मृ. उद्धार., p. 194; [b] एतत्फलमाहुर्मनीषिणः, नि. सि., III, p. 4; [a] दिवसेषु; [c] लभते.

[2] स्मृ. च. श्रा., p. 3; श्रा. सौ., p. 128; वै. श्रा., p. 372.

[3] स्मृ. च. श्रा., p. 3.

[4] हे. दा., III, p. 25; हे. प. श्रा., p. 349.

[5] हे. प. श्रा., p. 353.

[6] हे. प. श्रा., p. 353.

[7] ति. तत्व., p. 83; मल. तत्व., p. 794.

[8] हे. प. श्रा., p. 362.

अधीतेऽस्मिन्निदं[1a] दास्ये इत्युक्ते यस्तु दुर्मनिः ।
पठेच्छास्त्राणि वेदं वा स प्रेत्य श्वाऽभिजायते ॥ ४७

श्वपाकषण्डपतित[2b] श्वानः[c] सूकरकुक्कुटाः ।
रजस्वला[d] च [e]चण्डालः श्राद्धे कार्यास्त्वदर्शनाः ॥ ४८

श्वपाकषण्ढपतित श्वानसूकरकुक्कुटात् ।
रजस्वलायाश्चण्डालात्[3] श्राद्धे कुर्याच्च रक्षणम् ॥ ४९

परिश्रिते[4] प्रदद्याच्च[f] तिलैर्वा विकिरेन्महीम् ।
शमयेच्चोपविष्टस्तु[g] तं दोषं पङ्क्तिपावनः ॥ ५०

ब्रह्मारण्यं[5h] धर्मपृष्ठं धेनुकारण्यमेव च ।
दृष्ट्वैतानि[i] पितृंश्चार्च्य[j] वंशान् विंशतिमुद्धरेत् ॥ ५१

अकृते[6] प्राप्तकाले तु श्राद्धकालोऽत्र वक्ष्यते ।
कन्याकुम्भगते भानौ कृष्णपक्षे [k]विधीयते ॥ ५२

कन्याकुम्भगते[7] भानौ पितरः प्रीतिसंयुताः ।
पितृलोकात्समायान्ति भूभौ तद्भोजनालयम् ॥ ५३

[1] हे. प. श्रा., p. 509 ; नि. व्या., p. 1433 ; [a] अधीष्यते ह्यहं दास्ये इत्युक्तः.

[2] ग. काल., p. 524 ; श्रा. कल्प., p. 28/a ; [b] पिशुनाः श्वानकुक्कुट-सूकराः ; [c] चण्डालाः, वी. मि. श्रा., p. 150 ; [c] श्वानसूकरकुक्कुटान् ; [d] लां च चाण्डालान्. हे. प. श्रा., p. 519.

[3] हे. प. श्रा., p. 519.

[4] ग. काल., p. 525 ; श्रा. कल्प., p. 28/a ; हे. प. श्रा., p. 519 ; [f] षु दद्याद्वा ; [g] निनयेद्वा, वी. मि. श्रा., p. 150 ; [f] षु दद्याच्च ; [g] निनयेत् पङ्क्तिमूर्धन्यः.

[5] ती. चि. p. 274 ; नि. सि., III, p. 2 ; [h] धर्मारण्यं ; [j] अर्चन्, वी. मि. श्रा., p. 141 ; [j] तर्प्य, कृत्य. समु., p. 104 ; [i] दृष्ट्वैव तानि.

[6] वै. श्रा., p. 161 ; प्र. पारि., p. 451 ; [k] तदेष्यते.

[7] प्र. पारि., p. 452.

शून्यं प्रेतपुरं तावद्यावन्मीनतुलागतिः ।
वसन्ति गोत्रजा नित्यं तृणाश्रमपारिश्रिताः ।
तस्मात्सर्वप्रयत्नेन यथाशक्ति प्रपूजयेत् ॥ ५४

अन्त्यत्रिभागे[1] शस्तं स्यात्कृष्णपक्षे सपिण्डनम् ।
आद्यभागे च कर्तव्यं सिते पक्षे च सङ्कटे ॥ ५५

प्रेतस्य[2] वत्सरादर्वाग्यदा संस्कारमिच्छति ।
न[3] कालनियमो ज्ञेयो न मौढ्यं गुरुशुक्रयोः ॥ ५६

मासिकाब्दिककृत्ये[4] तु तिथिद्वैधं यदा भवेत् ।
पूर्वत्र दोषजननमुत्तरे भाग्यसाधनम् ॥ ५७

यस्मिन्मासे[5] न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा ।
संसर्पांहस्पती [a]मासावधिमासश्च [b]निन्दिताः ॥ ५८

बाले[6 c] वा यदि वा वृद्धे शुक्रे [d, e]वास्तमुपागते ।
मलमास इवैतानि वर्जयेद्देवदर्शनम् ॥ ५९

कृष्णपक्षे[7] त्रयोदश्यां यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम् ॥ ६०

[1] वै. श्रा., p. 161.

[2] वै. श्रा., p. 161.

[3] वै. श्रा., p. 161.

[4] वै. श्रा., p. 212.

[5] वै. श्रा., p. 240; मल. तत्व., p. 782; वी. मि. स., p. 143; [a] एतौ; [b] निन्दितः.

[6] हे. प. का., p. 40; हे. व्रत., p. 244; [c] बाल्ये; [e] अस्तं गते गुरौ, नि. प्र., I, p. 90; [d] च, ग. काल., p. 253; [d] च, वै. श्रा., p. 253; [d] चास्तं गते गुरौ, नि. सि., I, p. 5; वै. श्रा. वत्पाठः, स. म., p. 168; वी. मि. स., p. 156; [e] अस्तं गते रवौ.

[7] या. अप., p. 555; का. वि., p. 398; हे. प. का., pp. 472 and 480; हे. प. श्रा., p. 204; का. त. वि., p. 380.

तीर्थे[1] संवत्सरे प्रेते पितृयोगे महालये ।
पिण्डदानं[2] प्रकुर्वीत युगादि भरणी मघे ॥ ६१

पिशाचा[3] राक्षसा यक्षा भूता नानाविधास्तथा ।
प्रतिलुम्पन्ति सहसा श्राद्धमारक्षवर्जितम् ॥ ६२

तत्पालनाय[4] विहिता विश्वे देवाः स्वयंभुवा ।
विश्वे[5] देवौ क्रतू दक्षौ सर्वास्विष्टिषु कीर्तितौ ।
प्रेतश्राद्धे कालकामौ काम्ये च धुरिलोचनौ ॥ ६३

एष्टव्या[6] बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन } नीलं वा वृषमुत्सृजेत् ॥ ६४
गौरीं वा वरयेत्कन्यां }

काङ्क्षन्ति[7] पितरः पुत्रान् [a]नरकापातभीरवः ।
गयां[8] यास्यति यः [b]कश्चित्सोऽस्मान् सन्तारयिष्यति ॥ ६५

करिष्यति[9] वृषोत्सर्गमिष्टापूर्तं [c]तथैव च ।
पालयिष्यति वृद्धत्वे श्राद्धं दास्यति चान्वहम् ॥ ६६

[1] वि. पारि., II, p. 592.

[2] वि. पारि., II, p. 592.

[3] श्रा. चि., p. 94.

[4] श्रा. चि., p. 94.

[5] वि. पारि., II, p. 594.

[6] बो. ध. वि., p. 199.

[7] परा. आ., p. 305; गृ. कल्प., p. 88/b; ती. चि., p. 274; [a] नरकाद्भय, श्रा. सा., p. 99; [a] नरकाघात, वै. श्रा., p. 134; [a] नरके, वी. मि. श्रा., p. 141; कृत्य. समु., p. 104; [a] नरकाद्भय; cf. *infra*, p. 210.

[8] परा. आ., p. 305; ती. चि., p. 274; श्रा. सा., p. 99; वै. श्रा., p. 134; वी. मि. श्रा., p. 141; कृत्य. समु., p. 104; [b] पुत्रः.

[9] परा. आ., p. 305; श्रा. सा., p. 99; [c] करिष्यति, वै. श्रा., p. 134; पूर्वार्धं परम्, वी. मि. श्रा., p. 141; cf. *infra*, p. 211.

गयायां[1 a] धर्मपृष्ठे च [b]सदसि ब्रह्मणस्तथा ।
गयाशीर्षे [c]वटे चैव [d]पितॄणां दत्तमक्षयम् ॥ ६७

एकपाकेन[2] वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥ ६८

अग्नेः[3] सोमयमाभ्यां च कृत्वाऽऽप्यायनमादितः ।
हविर्दानेन विधिवत्पश्चात्सन्तर्पयेत्पितॄन् ॥ ६९

मध्याह्नाद्या[4] त्वमावास्या परस्तात्सम्प्रवर्तते ।
भूतविद्धा[5] तु सा ज्ञेया न च पञ्चदशी भवेत् ॥ ७०

भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां[6] तिथिम् ।
भूतविद्धाममावास्यां[7] मोहादज्ञानतोऽपि वा ।
श्राद्धकर्मणि ये कुर्युस्तेषामायुः प्रहीयते ॥ ७१

एकादश्यष्टमी[8] षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च [e]ता उपोष्याः परान्विताः ॥ ७२

[1] परा. आ., p. 305; ती. चि., p. 274; [c] अक्षयवटे, श्रा. सा., p. 99; [a] गङ्गायां; [b] सरसि, वी. मि. श्रा., p. 141; नि. सि., III, p. 2; [a] गङ्गायां; [b] सरसि; [c] अक्षयवटे, कृत्य. समु., p. 104; [d] पितृदत्तमथाक्षयम्.

[2] बा. प्रा., p. 30; वी. मि. श्रा., p. 342.

[3] वी. मि. श्रा., p. 231.

[4] हे. प. का., p. 448; स्मृ. च. श्रा., p. 31; का. मा., p. 193; हे. प. श्रा., p. 180; वै. श्रा., p. 260; पु. चि., pp. 338 and 342.

[5] हे. प. का., p. 448; स्मृ. च. श्रा., p. 31; का. मा., p. 193; हे. प. श्रा., p. 180; वै. श्रा., p. 260; पु. चि., pp. 338 and 342.

[6] पु. चि., p. 338.

[7] हे. प. श्रा., p. 180.

[8] स्मृ. च. श्रा., p. 47; कालनिर्णयेऽप्यस्ति, का. मा., p. 110; नि. अमृ., p. 54; स्मृ. उद्धार., p. 113; [e] उपोष्याः स्युः, वी. मि. स., p. 34.

दिवानिद्रा[1a] परान्नं च [b]पुनर्भोजनमैथुने ।
क्षौद्रं [c]कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् ॥ ७३

अमावास्येन्दुसङ्क्रान्तिचतुर्दश्यष्टमीषु[2] च ।
नरश्चण्डालयोनौ स्यात्तैलस्त्रीमांससेवनात् ॥ ७४

स्वेन[3] भर्त्रा [d]समं श्राद्धं माता भुङ्क्ते [e]सदैवतम् ।
पितामही [f]सदा स्वेन स्वेनैव प्रपितामही ॥ ७५

यद्येकं[4] भोजयेच्छ्राद्धे[g] छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि [h]त्रितयं तत्र विद्यते ॥ ७६

अटेत[5] पृथिवीं सर्वां सशैलवनकाननाम् ।
यदि लभ्येत पित्रर्थे साम्नामक्षरचिन्तकः ॥ ७७

ऋचा[6] तु[i] तृप्यति[j] पिता यजुषा [k]तु पितामहः ।
पितुः पितामहः साम्ना [l]छान्दोग्योऽभ्यधिकस्ततः ॥ ७८

[1] हे. प. का., p. 203; स्मृ. च. श्रा., p. 62; [a] निद्रां; [c] आमिषे, ग. काल., p. 54; [a] निद्रां; [b] मैथुनम्, आ. रत्न., p. 105; वै. ति., p. 39; [a] निद्रां, वि. पारि., II, p. 433; स्मृ. च. श्रा. वत्पाठः. स. म., p. 93; वि. पारि. वत्पाठः, पु. चि., p. 206; स्मृ. मुक्ता. का., p. 99.

[2] हे. प. का., p. 687; वी. मि. स., p. 251; पु. चि., p. 459.

[3] स्मृ. च. श्रा., pp. 98 and 301; 301 तमपुटे; [e] सुधामयं; [f] च स्वेनैव, श्रा. चि., p. 160; [e] स्वधामयं; [f] च स्वेनैव तथैव; [d] सह, वै. श्रा., p. 232; वि. पारि., II, p. 805; स्मृ. च. श्रा., p. 301; तमपुटवत्पाठः.

[4] परा. आ., p. 338; श्रा. कल्प., p. 14/b; श्रा. चि., p. 65; [g] विप्रं, श्रा. सौ., p. 36; [g] विप्रं, वै. श्रा., p. 294; [h] त्रयं तत्र तु, श्रा. म., p. 61; वी. मि. श्रा., pp. 61-2.

[5] परा. आ., p. 338; श्रा. कल्प., p. 14/b; श्रा. चि., p. 65.

[6] परा. आ., p. 338; श्रा. कल्प., p. 14/b; [i] अपि; [k] अपि; [l] छन्दोगोध्यापकस्ततः, वी. मि. श्रा., pp. 61-2; [j] तुष्यति; [k] च; [l] छन्दोगः.

उपवीती[1] ततो भूत्वा [a]देवतार्थं द्विजोत्तमान् ।
अपसव्येन पित्र्ये [b]च स्वयं शिष्योऽथवा सुतः ॥ ७९

एकैकमथवा[2] द्वौ त्रीन् दैवे पित्र्ये च भोजयेत् ।
सत्क्रियाकालपात्रादि[c] न सम्पद्येत [d]विस्तरे ॥ ८०

शुचिं[3] निमन्त्र्य दैवे द्वौ त्रीन् विप्रान् पितृकर्मणि ।
दैवे पित्र्येऽथवैकैकं सपिण्डीकरणं विना ॥ ८१

अशिष्टा[4] ये च पुरुषास्तेषां श्राद्धे द्विजोत्तमैः ।
न भोक्तव्यमिति प्राहुर्मुनयः संशितव्रताः ॥ ८२

दधिभक्ष्यं[5] शुक्तमपि [e]यच्चैव दधिसम्भवम् ।
ऋचीषपक्वं[f] भक्ष्यं स्यात्ससर्पिष्कमिति श्रुतिः ॥ ८३

यवगोधूमजं[6] सर्वं विकाराः पयसश्च ये ।
रागखाण्डवचुक्राद्यं भक्ष्यं पर्युषितं भवेत् ॥ ८४

अपूपाश्च[7] करम्भाश्च धाना वटकसक्तवः ।
शाकमांसानि पूपं च सूपं कृसरमेव च ॥ ८५

यवागूं[8] पायसं चैव यच्चान्यत्स्नेहसंयुतम् ।
सर्वं पर्युषितं भोज्यं शुक्तं च परिवर्जयेत् ॥ ८६

[1] परा. आ., p. 361 ; स्मृ. च. श्रा., p. 191 ; [b] तु, नि. सि., III, p. 14 ; [a] देवार्थं तु ; [b] अथ.

[2] परा. आ., p. 364 ; स्मृ. च. श्रा., p. 193 ; हे. प. श्रा., p. 1148 ; [d] विस्तरात्, वै. श्रा., p. 310 ; वी. मि. श्रा., p. 107 ; [c] देशकालादि, बा. आ., p. 507 ; उत्तरार्धं परम्.

[3] बा. आ., p. 508.

[4] स्मृ. रत्ना., p. 200.

[5] हे. प. श्रा., p. 617 ; स्मृ. उद्धार., p. 297 ; [e] यदेव ; [f] आविकाजि भवेन्मेध्यमभक्ष्यं तद्विकारकम्.

[6] हे. प. श्रा., p. 617.

[7] हे. प. श्रा., p. 617.

[8] हे. प. श्रा., p. 617.

अत्यम्लं[1a] शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः ॥ ८६अ

त्यजेत्पर्युषितं[2] पुष्पं त्यजेत्पर्युषितं पयः ।
न त्यजेज्जाह्नवीतोयं तुलसीविल्वपङ्कजम् ॥ ८७

यद्येकं[3] भोजयेच्छ्राद्धे[b] स्वल्पत्वात्प्रकृतस्य [c]तु ।
स्तोकं स्तोकं समुद्धृत्य [d]तेभ्योऽन्नं [e]च निवेदयेत् ॥ ८८

एकपङ्क्त्युपविष्टा[4] ये न स्पृशन्ति परस्परम् ।
भस्मना[5] कृतमर्यादा न तेषां सङ्करो भवेत् ॥ ८९

अग्निना[6] भस्मना वाऽपि स्तम्भेनाप्युदकेन वा ।
द्वारसंक्रमणेनापि पङ्क्तिभेदः प्रकीर्तितः ॥ ९०

क्रतुर्दक्षो[7] वसुः सत्यः [f]कालः [g]कामस्तथैव च ।
धुनिश्च[h] रोचनश्चैव[i] तथा चैव [j]पुरूरवा ॥ ९१

आर्द्रवश्च[k] दशैते तु विश्वे देवाः प्रकीर्तिताः ।

[1] परा. आ., p. 383 ; गृ. रत्ना., p. 362 ; [a] अत्यन्नं भुक्तं, श्रा. सा., 70 ; वी. मि. आ., p. 520 ; वा. आ., p. 440.

[2] श्रा. सौ., p. 45 ; श्रा. क. ल., p. 63.

[3] या. अप., p. 464 ; श्रा. कल्प., p. 28/a ; [e] वि, हे. प. श्रा., ɔ. 90 and 1524 ; 90 तमपुटे ; [b] विप्रं ; [e] तु प्रकल्पयेत्, श्रा. चि., 82 ; [c] च, श्रा. कौ., p. 73 ; [b] विप्रं ; [e] वि, श्रा. सौ., p. 54 ; ह्यन्नं, वी. मि. श्रा., p. 107 ; [c] च ; [e] वि, नि. व्या., p. 1445 ; [e] वि.

[4] या. अप., p. 476.

[5] या. अप., p. 476.

[6] या. अप., p. 476.

[7] परा. आ., p. 403 ; श्रा. कल्प., p. 32/a ; [h] धुरिश्च ; [j] पुरूरवाः ; माद्रवश्च, स्मृ. च. श्रा., p. 285 ; [j] पुरूरवः, हे. प. श्रा., p. 143 ; कालः कामः ; [h] धुरिश्च लोचनश्चैव ; [j] पुरूरवाः ; [k] आद्रवश्च, कृ. रत्ना., 213 ; ग. काल., p. 525 ; [h] धुरिश्च लो ; [j] पुरूरवाः ; [k] माद्रवाश्च ते, श्रा. कौ., p. 56 ; [i] लोचन ; [j] पुरूरवाः ; [k] आर्द्रवाश्च दशैवैते, श्रा., p. 330 ; [g] काम्यः, वी. मि. श्रा., p. 23 ; [f] कामः कालः ; धुरिश्च ; [j] पुरूरवाः ; [k] अर्द्रवश्च.

इष्टिश्राद्धे[1] क्रतुर्दक्षः[a] सत्यो नान्दीमुखे [b]वसुः ।
नैमित्तिके [c]कालकामौ काम्ये च [d]धुरिलोचनौ ॥ ९२
पुरूरवार्द्रवश्चैव[2 e, f] पार्वणे समुदाहृतौ ।
उत्पत्तिं[g] नाम [h]चैतेषां [i]न विदुर्ये द्विजातयः ॥ ९३
अयमुच्चारणीयस्तैः[3 j] श्लोकः श्रद्धासमन्वितैः ।
'आगच्छन्तु[4] महाभागा विश्वेदेवा [k]महाबलाः ।
ये यत्र [l]विहिताः श्राद्धे सावधाना भवन्तु ते' ॥ ९४
पाणिभ्यां[5] तूपसंगृह्य स्वयमन्नस्य वर्धितम् ।
विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत् ॥ ९५
मुक्तं[6] ह्युभाभ्यां हस्ताभ्यां यदन्नमुपनीयते ।
तद्विप्रलुम्पन्त्यसुराः सहसा दुष्टचेतसः ॥ ९६

[1] या. अप., p. 478; श्रा. कल्प., p. 32/a; [d] धुरिरो, हे. प. श्रा., p. 143; श्रा. चि., p. 94; ग. काल., p. 525; श्रा. कौ., p. 56; नि. सि., III, p. 11; [a] क्रतूदक्षौ सत्यौ; [b] वसू; [c] कामकालौ, वी. मि. श्रा., p. 23; [c] कामकालौ.

[2] या. अप., p. 478; श्रा. कल्प., p. 32/a; [f] माद्रवश्च, हे. प. श्रा., p. 143; पूर्वार्धं परम्, श्रा. चि., p. 94; [e] पुरूरवो माद्रवाश्च, ग. काल., p. 525; [h] वै तेषां ये विदुर्न, श्रा. कौ., pp. 56 and 125; 125 तमे उत्तरार्धं परम्; [e] पुरूरवो माद्रवाश्च; [i] अविचार्य, श्रा. तत्व., p. 205; उत्तरार्धं परं, वि. पारि., II, p. 791; [e] पुरूरवार्द्रवौ, वि. पारि., II, p. 594; [g] वृद्धिश्राद्धेषु सर्वेषु देवौ सत्यवसू स्मृतौ । नि. सि., III, p. 11; वी. मि. श्रा., p. 23; [f] आर्द्रवश्च.

[3] श्रा. कौ., pp. 56 and 125; 56 तमे; [j] यैस्तु, श्रा. कल्प., p. 32/a; या. अप., p. 478; [j] यस्तु, श्रा. चि., p. 94; ग. काल., p. 525; श्रा. तत्व., p. 205; नि. सि., III, p. 11; वी. मि. श्रा., p. 23.

[4] या. अप., p. 478; श्रा. कल्प., p. 32/a; [k] वरप्रदाः; [l] योजिताः, श्रा. चि., p. 94; [l] योजिताः, ग. काल., p. 525; [k] वरप्रदाः, श्रा. कौ., p. 56; [k] वरप्रदाः, श्रा. तत्व., p. 205; [k] वरप्रदाः, नि. सि., III, p. 11; वी. मि. श्रा., p. 23.

[5] ग. काल., p. 545.

[6] ग. काल., p. 545.

गुणानपूपशाकाद्यान्[1] पयो दधि घृतं मधु ।
विन्यस्य प्रयतः सम्यग्भूमावेव समाहितः ॥ ९७

भक्ष्यं[2] भोज्यं च विविधं मूलानि च फलानि च ।
हृद्यानि[3] चैव मांसानि पानानि सुरभीणि च ॥ ९८

उपनीय[4] तु तत्सर्वं शनकैः सुसमाहितः ।
परिवेषयन्तु परितो गुणान् सर्वान् प्रचोदयन् ॥ ९९

भक्ष्यभोज्यगुणानुक्त्वा[5] भोजयेद्ब्राह्मणाञ्छनैः ।
आख्यानैः सेतिहासैश्च पूर्ववृत्तैश्च हर्षयेत् ॥ १००

यद्यद्रोचेत[6] विप्रेभ्यस्तत्तद्द्यादयाचितः ।
ब्रह्मोद्याश्च कथाः कुर्यात्पितॄणामेतदीप्सितम् ॥ १०१

ऋजून्[7] सव्येन [a]कृत्वा वै दैवे दर्भान् [b]प्रदक्षिणान् ।
द्विगुणानपसव्येन [c]दद्यात्पित्र्येऽपसव्यवत् ॥ १०२

आसने[8] चाऽर्घ्यदाने च पिण्डदानेऽवनेजने ।
सम्बन्धगोत्रनामानि[9] यथार्हमनुकीर्तयेत् ॥ १०३

[1] ग. काल., p. 545.

[2] ग. काल., p. 546.

[3] ग. काल., p. 546.

[4] ग. काल., p. 546.

[5] हे. प. श्रा., p. 1028; श्रा. कल्प., p. 40/a; वै. श्रा., p. 346; पूर्वार्धं परम्.

[6] ग. काल., p. 546.

[7] या. अप., p. 479; हे. प. श्रा., p. 1120; [a] वै दत्वा देवे दर्भान् प्रदक्षिणम्; [c] पित्रे, श्रा. म., p. 67; [b] प्रदक्षिणं पूर्वार्धं परम्.

[8] या. अप., p. 479.

[9] या. अप., p. 479.

उपस्पृष्टोदकानां[1] तु ब्राह्मणानां [a]तदग्रतः ।
सोदकं विकिरेदन्नं [b,c]मन्त्रमेनमुदाहरेत् ॥ १०४

'अनग्निदग्धा[2d] ये जीवा [e]येऽपि दग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्' ॥ १०५

पृच्छेद्विप्रांस्ततस्ते[3f] तु यद्ब्रूयुस्तत्समाचरेत् ।
तत्समीपे[4] प्रकुर्याच्च पिण्डनिर्वपणं ततः ॥ १०६

सर्वस्मात्प्रकृतादन्नात्पिण्डान्मधुतिलान्वितात्[5g] ।
पितृमातामहादीनां दद्याद्गृह्यविधानतः ॥ १०७

धूपदीपैर्माल्यगन्धैस्तथा[6h] वस्त्राञ्जनादिना ।
समभ्यर्च्योदपात्रं[7i] तु[j] तेषामुपरि निक्षिपेत् ॥ १०८

'दातारो[8] नोऽपि वर्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु' ॥ १०९

[1] या. अप., p. 504; श्रा. कल्प., p. 45/a+b; [a] ततोग्रऽतः; [c] चेमं समुच्चरेत्, हे. प. श्रा., p. 1399; [a] तथाऽग्रतः, श्रा. कौ., p. 176; [b] मन्त्रं चैव समुच्चरेत् उत्तरार्धं परम्.

[2] या. अप., p. 505; श्रा. कल्प., p. 45/a+b; [d] अग्निदग्धाश्च; [e] येऽप्यदग्धाः, हे. प. श्रा., p. 1399; [e] येऽग्नि, श्रा. म., p. 92; हे. प. श्रा. वत्पाठः.

[3] हे. प. श्रा., p. 1391; श्रा. कल्प., p. 45/a+b; [f] तृप्ताः.

[4] श्रा., कल्प., p. 45/a+b.

[5] या. अप., p. 506; श्रा. कल्प., p. 45/a+b; स्मृ. च. श्रा., p. 382; हे. प. श्रा., p. 85; [g] प्राकृतादन्यात्, का. त. वि., p. 388; श्रा. म., p. 97; पूर्वार्धं परम्.

[6] या. अप., p. 508; श्रा. कल्प., p. 45/a+b; [h] दीपगन्धैर्माल्यधूपैः.

[7] या. अप., p. 508; श्रा. कल्प., p. 45/a+b; [j] च, परा. आ., p. 433; [i] अनभ्यर्च्य, वै. श्रा., p. 364.

[8] श्रा. कल्प., p. 45/a+b.

अग्नौ[1] हुतेन देवस्थाः पितृस्था द्विजतर्पणैः ।
नरकस्थाश्च तृप्यन्ति पिण्डैर्दत्तैस्त्रिभिर्भुवि ॥ ११०

स्त्रीयुग्यहेमरत्नानि[2] देवविप्रधनं तथा ।
कौशेयं चोत्तमं द्रव्यं तेषां मूल्यसमो दमः ॥ १११

द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः ।
भवेत्तथैव[3] कर्तव्यं समर्थेन विशेषतः ।
सर्वमेतत्तु यो दद्याद्विजपात्रानुसारतः ॥ ११२

दद्यात्तु[4] दक्षिणां तेषां सर्वेषामनुरूपतः ।
गोभूहिरण्यवासांसि तुष्टिर्भुक्तवतां यथा ॥ ११३

अन्येषां[5] दक्षिणादानं शक्तितः श्राद्धसम्पदे ।
ज्ञातयो[6] बान्धवा [a,b]निःस्वास्तथैवाथ च ये परे ।
प्रदद्याद्दक्षिणां तेषां [c]सर्वेषामनुरूपतः ॥ ११४

आसनेषु[7] च क्लृप्तेषु बर्हिष्मत्सु पृथक् पृथक् ।
उपस्पृष्टोदकान् सम्यग्विप्रांस्तानुपवेशयेत् ॥ ११५

उपवेश्य[8] तु तान्विप्रानासनेषु जुगुप्सितान् ।
गन्धमाल्यैः सुरभिभिरर्चयेद्देवपूर्वकम् ॥ ११६

[1] श्रा. कल्प., p. 50/b.

[2] हे. प. श्रा., p. 1035.

[3] हे. प. श्रा., p. 1044.

[4] हे. प. श्रा., p. 1044.

[5] हे. प. श्रा., p. 1044.

[6] वै. श्रा., p. 360; श्रा. कल्प., p. 56/a; [b] तथा चातिथयोऽपरे । हे. प. श्रा., p. 1049; [a] निष्ठाः, श्रा. चि., p. 148; [b] तथा चातिथयोऽपरे; [c] यथाशक्त्या स्वरूपतः, का. त. वि., p. 455; उत्तरार्धं परम्.

[7] हे. प. श्रा., p. 1194.

[8] हे. प. श्रा., p. 1309.

अथ[1] यद्येषां स्वासु भार्यासु अपत्यं न ।
स्यादथ यदि स्यादुभाभ्यामेव दद्युः ॥ ११७

पुत्रास्त्रयोदश[2] प्रोक्ता मनुना येऽनुपूर्वशः ।
सन्तानकारणं तेषामौरसः पुत्रिका तथा ॥ ११८

आज्यं[3] विना यथा तैलं सद्भिः [a]प्रतिनिधिः स्मृतः ।
तदेकादश[b] पुत्राः [c]स्युः पुत्रिकौरसयोर्विना ॥ ११९

पुन्नाम्नो[4] नरकात्पुत्रः[d] पितरं त्रायते यतः ।
मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः ॥ १२०

अङ्गादङ्गात्सम्भवति[5] पुत्रवद्दुहिता नृणाम् ।
तस्याः पितृधनं त्वन्यः कथं गृह्णीत मानवः ॥ १२१

पतिव्रता[6] धर्मपत्नी पितृपूजनतत्परा ।
मध्यमं[7] तु ततः पिण्डमद्यात्पत्नी सुतार्थिनी ॥ १२२

पिण्डास्तु[8] गोऽजविप्रेभ्यो दद्यादग्नौ जलेषु वा ।
मध्यमं तु ततः पिण्डमद्यात्सम्यक् सुतार्थिनी ॥ १२३

आयुष्मन्तं[9] सुतं सूते यशोमेधासमन्वितम् ।
धनवन्तं प्रजावन्तं धार्मिकं सात्विकं तथा ॥ १२४

[1] श्रा. चि., p. 191.

[2] श्रा. चि., p. 200. Repeated *infra* p. 208.

[3] बा. प्रा., p. 32; श्रा. चि., pp. 188 and 200; [a] निधीकृतं; [b] तथा; [c] तु, वी. मि. श्रा., p. 352; [b] तथा; [c] तु, cf. *infra* p. 208.

[4] श्रा. चि., p. 202; श्रा. सौ., p. 118; [d] यस्मान्नरकात् त्रायते सुतः, cf. *infra* p. 209.

[5] श्रा. चि., p. 207. Repeated *infra* pp. 217-218.

[6] हे. प. श्रा., p. 1506.

[7] हे. प. श्रा., p. 1506.

[8] श्रा. कल्प., p. 51/a.

[9] हे. प. श्रा., p. 1506.

अन्यदेशस्थिता[1 a] पत्नी [b]रोगिणी गर्भिणी तथा।
तदा[c] तं जीर्णवृषभश्छागो वा भोक्तुमर्हति॥ १२५

ततः[2] कर्मणि निर्वृत्ते तान् पिण्डांस्तदनन्तरम्।
ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत्॥ १२६

भोजनं[3] चाऽनेकविधं[d] कारयेद्व्यञ्जनानि[e] च।
यथाशक्ति[4 f] प्रदद्याच्च गोभूहेमादिकं तथा॥ १२७

भाजनेषु[5 g] च तिष्ठत्सु [h]स्वस्ति कुर्वन्ति ये द्विजाः।
निराशाः[6] पितरस्तेषां[i] शप्त्वा यान्ति यथागतम्॥ १२८

तदन्नमसुरैर्भुक्तं[7 j] निराशैः[k] पितृभिर्गतैः।

[1] या. अप., p. 550; श्रा. कल्प., p. 51/a; [a] गता; [b] गर्भिणी रोगिणी, स्मृ. च. श्रा., p. 403; [a] गता, च. म. सं., p. 159; श्रा. कल्पतरुवत्पाठः, परा. आ., p. 439; श्रा. कल्पतरुवत्पाठः, ग. काल., p. 563; [a] गता; [b] गर्भिणी रोगिणी; [c] तथा, श्रा. सौ., p. 74; श्रा. कल्पतरुवत्पाठः, वै. श्रा., p. 365; श्रा. कल्पतरुवत्पाठः, नि. सि., III, p. 43; [a] गता, बा. आ., p. 531; श्रा. कल्पतरुवत्पाठः.

[2] बा. आ., p. 531.

[3] श्रा. कौ., p. 384; श्रा. कल्प., p. 56/a; हे. प. श्रा., p. 1609; श्रा. चि., p. 110; श्रा. तत्व., p. 284; शु. तत्व., p. 345; [e] द्विजैः, श्रा. सौ., p. 94; वी. मि. स., p. 201; [d] वा.

[4] श्रा. कौ., p. 384; श्रा. कल्प., p. 56/a; [f] यथाशक्त्या, हे. प. श्रा., p. 1609; श्रा. सौ., p. 94; [f] यथाशक्त्या, वी. मि. स., p. 201; [f] यथाशक्त्या.

[5] या. अप., p. 508; स्मृ. च. श्रा., p. 390; हे. प. श्रा., p. 1485; वै. श्रा., p. 366; नि. सि., III, p. 42; [g] भोजनेषु, वी. मि. श्रा., p. 275; [h] स्वस्तिं, बा. आ., p. 532; [g] अचालयित्वा तत्पात्रं.

[6] या. अप., p. 508; बा. आ., p. 532; [i] तस्य दृष्ट्वा.

[7] या. अप., p. 508; स्मृ. च. श्रा., p. 390; [j] दत्तं; [k] निराशाः पितरो गताः, हे. प. श्रा., p. 1485; [j] दत्तं, वै. श्रा., p. 366; [j] दत्तं, नि. सि., III, p. 42; वी. मि. श्रा., p. 275.

'वाजे[1] वाज' इति [a]प्रोच्य ब्राह्मणांस्तान् विसर्जयेत् ।
विप्रान् प्रदक्षिणीकृत्य [b]पितृभ्यः प्रार्थयेद्वरान् ॥ १२९

'अद्य[2] मे सफलं जन्म [c]भवत्पादाभिवन्दनात् ।
अद्य मे वंशजाः सर्वे [d]गतास्तेऽनुग्रहाद्दिवम् ॥ १३०

अत्र[3 e] शाकादिदानेन क्लेशिता [f]ये मयेदृशाः ।
तत्क्लेशजातं [g]चित्तेन विस्मृत्य क्षन्तुमर्हथ' ॥ १३१

वस्त्रालङ्कारशय्याद्यं[4 h] पितुर्यद्वाहनायुधम्[i] ।
गन्धमाल्यैः[5 j] समभ्यर्च्य श्राद्धभोक्त्रे [k]तदर्पयेत् ॥ १३२

'मन्त्रहीनं[6] क्रियाहीनं भक्तिहीनं द्विजोत्तमाः ।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतां मम' ॥ १३३

[1] स्मृ. च. श्रा., pp. 399 and 400; श्रा. कल्प., p. 45/a+b; [a] प्रोक्ता; [b] पितॄणां, हे. प. श्रा., p. 1497.

[2] या. अप., p. 512; स्मृ. च. श्रा., p. 401; [d] याता वः, हे. प. श्रा., p. 1490; [d] याता वः, नि. सि., III, p. 42; [c] पादाब्ज; [d] याता वः, बा. आ., p. 535; [d] याता वः.

[3] या. अप., p. 512; स्मृ. च. श्रा., p. 401; [e] पत्र, हे. प. श्रा., p. 1490; [e] पत्र; [g] चित्तं तु, बा. आ., p. 535; [e] पत्र; [f] यूयमीदृशाः; [g] चित्तात्तु.

[4] म. पारि., p. 512; श्रा. कल्प., p. 56/a; हे. प. श्रा., p. 1609; [h] शय्याढ्यं, श्रा. चि., p. 110; श्रा. कौ., p. 384; [h] शय्याढ्यं, श्रा. तत्व., p. 284; शु. तत्व., p. 345; [h] शय्याढ्यं, व्य. सौ., p. 94; नि. सि., III, p. 37; [h] शय्यादि; [i] नादिकम्, वी. मि. स., p. 201.

[5] म. पारि., p. 612; श्रा. कल्प., p. 56/a; हे. प. श्रा., p. 1609; श्रा. चि., p. 110; [k] निवेदयेत्, श्रा. कौ., p. 384; श्रा. तत्व., p. 284; [j] पुष्पैः; [k] निवेदयेत्, शु. तत्व., p. 345; [j] पुष्पैः; [k] निवेदयेत्, व्य. सौ., p. 94; का. त. वि., p. 455; चतुर्थपादं परं, नि. सि., III, p. 37; वी. मि. स., p. 201; श्रा. क. ल., p. 213.

[6] बा. आ., p. 537.

समाप्य[1] च ततो विप्रान् सीमान्तमनुगम्य च ।
प्रक्षालिताङ्घ्रिपाणिश्च द्विराचमनमाचरेत् ॥ १३४

एकोद्दिष्टविधानेन[2] यदेकस्य प्रदीयते ।
आवहनाग्नौ [a]करणरहितं [b]दोषवर्जितम् ॥ १३५

हतमश्रोत्रियं[3*] श्राद्धं[c] हतो[d] यज्ञस्त्वदक्षिणः ।
तस्मात्पणं[4] काकनीं[e] वा फलं पुष्पमथापि वा ।
प्रदद्याद्दक्षिणां यज्ञे तया [f]स सफलो भवेत् ॥ १३६

श्रोत्रिया[5] भोजनीयाश्च[g] नव सप्त त्रयोदश ।
ज्ञातयो बान्धवा [h]निस्स्वास्तथैवातिथयोऽपरे ॥ १३७

प्रदद्याद्दक्षिणां[i] तेषां सर्वेषामनुरूपतः ।
वन्दिभ्यश्चैवमर्थिश्चाऽन्नार्थिभ्योऽन्नमर्थितः[6] ।
यदि तत्र न दद्याच्च विफलं शक्तितो भवेत् ॥ १३८

[1] हे. प. श्रा., p. 970.

[2] श्रा. सौ., p. 94; श्रा. कल्प., p. 56/a; [b] दैव, हे. प. श्रा., p. 1609; [a] वर्जितं, वी. मि. स., p. 201; [b] दैव.

[3] श्रा. कौ., pp. 91 and 211; 211 तमेपृष्ठे; [c] दानं, श्रा. कल्प., p. 56/a; [d] हता यज्ञास्त्वदक्षिणाः, हे. प. श्रा., p. 1609; श्रा. चि., p. 148; * ये दानं, ग. काल., p. 564; श्रा. कल्पतरुवत्पाठः, शु. तत्व., p. 377; श्रा. सौ., p. 94.

[4] श्रा. कौ., pp. 91 and 211; श्रा. कल्प., p. 56/a; [f] सम, हे. प. श्रा., p. 1609; [f] शतगुणो, श्रा. चि., p. 148; ग. काल., p. 564; [f] सम, शु. तत्व., p. 377; श्रा. सौ., pp. 53 and 94; 53 तमे; [e] काकणीं, नि. सि., III, p. 42; [e] काकणीम्.

[5] श्रा: कौ., p. 384; श्रा. कल्प., p. 56/a; [g] तु. श्रोत्रियेत्यर्धं परं, हे. प. श्रा., p. 1609; [g] तु; [h] वापि, श्रा. चि., p. 148; श्रोत्रियेत्यर्धं परम्, ग. काल., p. 565; [g] स्युः, श्रा. सौ., p. 94; [g] तु, नि. सि., III, p. 37; [g] तु; [i] अर्धं न दृश्यते.

[6] श्रा. कौ., p. 217; श्रा. चि., p. 110; ति. तत्व., p. 183.

पितरो[1] यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।
मातामहानामप्येवं[2] श्राद्धं कुर्याद्विचक्षणः ॥ १३९

स्वाध्यायं[3] कलहं चैव दिवास्वापं [a]तथैव च ।
पुनर्भोजनमध्वानं[4] भारमायासमैथुने[b] ।
श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद्विवर्जयेत् ॥ १४०

क्षौरं[5] नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् ।
पित्रादिमृतिदीक्षासु प्रायश्चित्तेऽथ तीर्थके ॥ १४१

श्राद्धभुग्वृषलीतल्पं[6] तदहो [यो]ऽधिगच्छति ।
तस्याः पुरीषे तं मासं पितरस्तस्य शेरते ॥ १४२

तां[7 c] निशां ब्रह्मचारी [d, e]स्याच्छ्राद्धकृच्छ्राद्धिकैः सह ।
अन्यथा वर्तमानौ [f]तौ स्यातां [g]निरयगामिनौ ॥ १४३

तस्मात्प्रदाता[8] भोक्ता च श्राद्धे नियमितो भवेत् ।
अर्चकश्चार्चितश्चोभौ[h] भवेतां नाकगामिनौ ॥ १४४

[1] श्रा. तत्व., p. 256.

[2] श्रा. तत्व., p. 256.

[3] नि. सि., III, p. 16; श्रा. क. ल., p. 50; [a] च स्वेच्छया.

[4] आ. रत्न., p. 105; नि. सि., III, p. 16; [b] मैथुनम्, श्रा. क. ल., p. 50; [b] मैथुने; cf. *infra* p. 337.

[5] नि. सि., III, p. 66; वि. पारि., II, p. 743.

[6] श्रा. कल्प., p. 52/a.

[7] परा. आ., p. 443; श्रा. कल्प., p. 52/a; [d] भोक्ता तथैव च, स्मृ. च. श्रा., p. 412; [d] भुक्श्राद्धकृत्सह, च. म. सं., p. 160; पूर्वार्धं परं, ग. काल., p. 566; [d] भोक्ता तथैव च; [g] नरक, श्रा. सौ., p. 75; वै. श्रा., p. 369; नि. सि., III, p. 16; [c] द्विनिशं; [e] ब्राह्मणैः; [f] तु, श्रा. म., p. 118; पूर्वार्धं परं, बा. आ., p. 540; [d] भुक् पूर्वार्धं परं, बा. आ., p. 499; [c] द्विनिशं पूर्वार्धं परम्, श्रा. क. ल., p. 50; [c] द्विनीशी.

[8] ग. काल., p. 566; श्रा. कल्प., p. 52/a; [h] स्वोभौ न भवेतां नरकगामिनौ ?

श्राद्धविघ्ने[1] समुत्पन्ने चाविज्ञाते मृतेऽहनि ।
एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः ॥ १४५

न[2] ज्ञायते[a] मृताहश्चेत्प्रमीते[b] प्रोषिते सति ।
मासश्चेत्प्रतिविज्ञातस्तद्दर्शे[c] स्यान्मृताऽहनि[d, e] ॥ १४६

यदा[3 f] मासो न विज्ञातो विज्ञातं दिनमेव [g]तु ।
तदा [h]मार्गशिरोमासि माघे वा तद्दिनं भवेत् ॥ १४७

दिनमासौ[4 i] न विज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानदिनमासौ[j, k] तु ग्राह्यौ पूर्वोक्तया दिशा ॥ १४८

[1] स्मृ., उद्धार., p. 182.

[2] या. अप., p. 545 ; स्मृ. च. श्रा., p. 124 ; च. म. सं., p. 133 ; हे. प. का., p. 559 ; म. पारि., p. 510 ; नि. अमृ., p. 178 ; [b] प्रोषिते संस्थिते ; [e] अथाब्दिकं, ग. काल., p. 390 ; [b] प्रोषिते संस्थिते ; [c] अथ ; [d] च तथाब्दिकम्, ति. तत्व., p. 19 ; [b] प्रोषिते संस्थिते, श्रा. तत्व., p. 286 ; वि. म., p. 111 ; [e] तदाब्दिकं, का. त. वि., p. 426 ; स्मृ. उद्धार., p. 182 ; [a] ज्ञायेत ; [b] प्रोषिते संस्थिते ; [e] तदाब्दिकं, नि. सि., III, p. 51 ; [e] अथाब्दिकं, श्रा. म., p. 24 ; वी. मि. स., p. 188 ; पु. चि., p. 420 ; [a] ज्ञायेत, श्रा. क. ल., p. 27.

[3] या. अप., p. 545 ; स्मृ. च. श्रा., p. 124 ; [h] मार्गशिरे, हे. प. का., p. 560 ; म. पारि., p. 511 ; नि. अमृ., p. 179 ; [h] चाषाढके, ग. काल., p. 390 ; [h] ह्याषाढके, ति. तत्व., p. 19 ; [f] यदि ; [g] हि ; [h] मार्गशिरे, श्रा. तत्व., p. 286 ; [f] यदि ; [g] च ; [h] मार्गशिरे, वै. श्रा., p. 114 ; [h] ह्याषाढके, स्मृ. उद्धार., p. 182 ; [h] चाषाढके, नि. सि., III, p. 52 ; [h] चाषाढके, वी. मि. स., p. 189 ; [h] ह्याषाढके उत्तरार्धं परं. पु. चि., p. 421 ; श्रा. क. ल., p. 27.

[4] या. अप., p. 545 ; च. म. सं., p. 134 ; म. पारि., p. 511 ; नि. अमृ., p. 179 ; ग. काल., p. 390 ; [k] मासदिवसौ, ति. तत्व., p. 19 ; श्रा. तत्व., p. 287 ; वै. श्रा., p. 114 ; [j] प्रवासमासदिवसौ, का. त. वि., p. 427 ; नि. सि., III, p. 51 ; स्मृ. उद्धार., p. 182 ; [i] मासाव ; [k] मासदिवसौ, श्रा. म., p. 24 ; वी. मि. स., p. 190 ; पु. चि., p. 421.

नित्यनैमित्तिके[1 a] कुर्यात् प्रयतः [b]समलिम्लुचे ।
तीर्थस्नानं[c, d] गजच्छायां [e]प्रेतश्राद्धं तथैव च ॥ १४९

प्रमीतस्य[2] पितुः[f] पुत्रैः[g] श्राद्धं [h]देयं प्रयत्नतः ।
ज्ञातिबन्धुसुहृच्छिष्यैर्ऋत्विग्भृत्यपुरोहितैः[i, j] ॥ १५०

पौत्रश्च[3 k, l] पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।
ऋक्थे[m] च[n] पिण्डदाने च [o]समौ तौ परिकीर्तितौ ॥ १

दैवे[4] नियुक्तः श्राद्धे वा नियमं न विसर्जयेत् ।
निषिद्धं कुर्वतां दोषस्तद्वद्वैधमकुर्वताम् ॥ १५२

मांसाशनस्य वैधत्वान्न व्रतच्युतिरश्नताम् ।

[1] या. अप., p. 549; का. वि., p. 140; [b] सन्, स्मृ. च.
p. 105; पूर्वार्धं परं, हे. प. का., p. 45; का. मा., pp. 46 and 5
[b] सन्, पूर्वार्धं परं, म. पारि., p. 545; [d] श्राद्धं, श्रा. चि., p. 5
[a] नित्यं; [b] सन्, ग. काल., pp. 238 and 241; 238 तमे पूर्वार्धं
दा. कौ., p. 92; [b] सन्, पूर्वार्धं परं, श्रा. कौ., p. 344; [b] सन्, शु.
pp. 167 and 278; 167 तमे पूर्वार्धं परम्, ति. तत्व., p. 154; [b] स
[c] तीर्थं, मल. तत्व., pp. 788 and 797; [b] सन्, श्रा. सौ., p. 2
[b] च, वि. पारि., II, p. 785; [a] नित्यं नैमित्तिकं; [b] सन्; [d] श्राद्धं,
सि., III, p. 67; [b] सन्, वी. मि. स., pp. 144 and 147; [b] स
[c] तीर्थं श्राद्धं, 144 तमे पूर्वार्धं परं, स्मृ. कौ., p. 426; [b] सन्, पु. चि., p. 2
कृत्य. समु., p. 40; [b] सन्; [e] स्नानं.

[2] परा. आ., p. 461; श्रा. कल्प., p. 62/a; [f] पिण्डं, स्मृ. च.
p. 5; कृ. चि., p. 26; [g] श्राद्धं कार्यं पुत्रैः, श्रा. चि., p. 202; श्रा.
p. 16; [h] कार्यं; [i] पुत्रैः; [j] कृत्य, श्रा. कौ., p. 450; शु. कौ., p. 8
उभयत्रापि पूर्वार्धं परम्, श्रा. सौ., p. 113; [h] कार्यं पूर्वार्धं परम्, वै.
pp. 17 and 25; बा. व्य., p. 704; बा. प्रा., pp. 30 and 4
30 तमे पूर्वार्धं परम्, नि. व्या., p. 1386.

[3] बा. प्रा., p. 42; स्मृ. च. श्रा., p. 7; [l] अथ; [m] रिक्थे, आ.
व्या., p. 236; [l] अथ; [n] पिण्डाम्बुदाने च समौ सं, नि. सि., III, p.
[k] पुत्रश्च; [m] रिक्थे; [o] समानौ.

[4] स्मृ. च. श्रा., p. 411.

क्रतौ[1] श्राद्धे तदङ्गत्वाद्द्विप्राज्ञाभङ्गतो व्रतः ।
भक्ष्यत्वादनुयोगेऽपि खादन् मांसान्यपि व्रती ॥ १५३

रोगेण[2a] युक्तो विधिवद्धुतं विप्रव्रतस्तथा ।
मांसमद्याचतुर्धैषा[b] परिसङ्ख्या प्रकीर्तिता ॥ १५४

एवं[3] देवान् [c]पितृंश्चैव तर्पयित्वा [d]द्विजोत्तमः ।
पुत्रमित्रादिसहितो[4e] गृहस्थो भोक्तुमर्हति ॥ १५५

[1] स्मृ. च. श्रा., p. 411 ; हे. प. श्रा., p. 1518.

[2] स्मृ. च. श्रा., p. 411 ; म. स. ना., p. 605 ; [a] रोगी नियुक्तो विधिना ; [b] चतुर्वैषा, हे. प. श्रा., p. 575 ; [a] रोगी नियुक्तो विधिना हितं ; [b] चतुर्वैषा, 1518 तमपुटे स्मृ. च. श्रा. वत्पाठः, गृ. रत्ना., p. 382 ; [a] रोगी नियुक्तो विधिना कृतं ; [b] चतुर्वैषा (प्रा. वि., p. 277 ; वी. मि. आ., p. 529 ; उभयत्रापि, म. स. ना. वत्पाठः).

[3] स्मृ. च. श्रा., p. 412 ; श्रा. कल्प., p. 52 a ; [c] त्रींश्च ; [d] विधानतः, हे. प. श्रा., p. 1517 ; ग. काल., p. 565 ; [c] तांश्च ; [d] विधानतः.

[4] स्मृ. च. श्रा., p. 412 ; श्रा. कल्प., p. 52 a ; [e] भृत्यादि, हे. प. श्रा., p. 1517 ; ग. काल., p. 565 ; [e] भृत्यादि.

# ४

## ॥ आशौचकाण्डम् ॥

जाते[1a] मृते मृतजाते कुलस्य सद्यः [b]शौचम् ॥ १

सूतके[2] मृतके चैव ह्यशक्तौ श्राद्धभोजने ।
प्रवासादिनिमित्तेषु [c]हावयेन्न तु हापयेत् ॥ १अ

नैष्ठिकानां[3] वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाऽऽशौचं सूतके प्रोक्तं शावे वाऽपि तथैव च ॥ २

समानोदकभावश्च[4] निवर्तेताऽऽचतुर्दशात् ।
मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥ ३

विवाहोत्सवयज्ञेषु[5] त्वन्तरा मृतसूतके ।
पूर्वसङ्कल्पितार्थेषु[6d] न दोषः परिकीर्तितः ॥ ४

[1] नि. अमृ., p. 241; स्मृ. उद्धार., p. 214; [a] जातमृते; [b] शौचमिति.

[2] परा. आ., p. 211; या. मि., p. 305; या. अप., p. 892; स्मृ. च. आशौ., p. 77; स्मृ. रत्ना., p. 105; म. पारि., p. 419; नि. अमृ., p. 270; आ. रत्न., p. 121; वै. आ., p. 245; वै. आशौ., p. 5; वि. पारि., II, p. 236; [c] दापयेन्न तु हावयेत्, बा. प्रा., p. 56.

[3] वै. आशौ., p. 9.

[4] ग. काल., p. 256; नि. प्र., I, p. 105; cf. *infra*, pp. 228 and 233 for second half.

[5] सं. म., p. 112; दा. म., p. 11; या. मि., p. 305; नि. प्र., II p. 289; ग. काल., p. 268; वै. आशौ., p. 14; वि. पारि., II, p. 7 स्मृ. उद्धार., p. 240; नि. सि., III, p. 18.

[6] सं. म., p. 112; दा. म., p. 11; [d] पूर्वं संकल्पितं ग्राह्यं, या. मि p. 305; नि. प्र., II, p. 289; [d] पूर्वसंकल्पितं द्रव्यं न दुष्यति कदाच ग. काल., p. 268; नि. प्र. वत्पाठः, वै. आशौ., p. 14; वि. पारि., I p. 7; स्मृ. उद्धार., p. 240; नि. सि., III, p. 18.

कन्याविवाहे[1] सङ्क्रान्तौ सूतकं न कदाचन ।
विवाहोत्सवयज्ञेषु[2] त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥ ५

भुञ्जानेषु[3] च विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ॥ ६

स्नानमात्रमिति[4] स्नात्वा शुद्ध्यन्ति गोत्रजा इति ।
सव्रतः[5] सत्रपूतश्च आहिताग्निश्च यो द्विजः ।
राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः ॥ ७

उद्यतो[6] निधने दाने आर्तो विप्रो निमन्त्रितः ।
तथैव ऋषिभिर्दृष्टं यथाकाले न शुद्ध्यति ॥ ८

शिल्पिनः[7] कारवो वैद्या दासी दासाश्च नापिताः ।
राजानः श्रोत्रियाश्चैव सद्यः शौचाः प्रकीर्तिताः ॥ ९

शस्त्रेणाभिमुखो[8] यस्तु वध्यते क्षत्रकर्मणा ।
यज्ञः सन्तिष्ठते तस्य सद्यः शौचं विधीयते ॥ १०

जातमात्रे[9] मृते वापि दशाहात्पितरौ शुची ।
कृते नाम्नि सनाभीनां दशरात्रमघं भवेत् ॥ ११

1 श्रा. क. ल., p. 199; cf. *infra*, p. 240.
2 म. पारि., p. 422; नि. अमृ., p. 271; नि. सि., III, p. 18.
3 म. पारि., p. 422; नि. सि., III, p. 18.
4 शु. तत्त्व., p. 401.
5 वै. आशौ., p. 16.
6 वै. आशौ., p. 16.
7 वै. आशौ., p. 17.
8 वै. आशौ., p. 18.
9 वै. आशौ., pp. 47 and 60.

भिन्नोदराणां[1] भ्रातृणां जांतदन्ते मृते त्वघम् ।
दशाहं कृतचौले तु दत्तादीनां विधीयते ॥ १२

दशाहाभ्यन्तरे[2] बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥ १३

उपविष्टः[3] शुचौ देशे बान्धवास्तदहश्च तान् ।
आश्वासयेयुराख्यातैरितिहासैः[a] पुरातनैः ॥ १४

नाहुषाद्या[4] नृपतयः ऋषयश्च तपोधनाः ।
याताः कालवशं मर्त्ये का कथा [बुद्बुदोपमे] ॥ १५

आक्रान्दाश्रुप्रपाताश्च[5] मृतस्यानुपकारकाः ।
एवं विदित्वा मतिमान् कश्मलं परिवर्जयेत् ॥ १६

नाक्रन्दितं[6] भवेत् श्लाघ्यं कदा शोके कदाचन ।
क्रियाभिश्च क्रिया नास्ति [शोकं त्वनप]हाय ते ॥ १७

तस्मात्कुल्यैः[7] सपिण्डैश्च सकृत्सम्बन्धिबान्धवैः ।
मृतस्य[8] सलिलं देयमुपकाराय तस्य तत् ॥ १८

अधःशय्यासना[9][b] दीना मलिना भोगवर्जिताः ।
अक्षारलवणान्नाः [c]स्यु र्लब्धक्रीताशनास्तथा ॥ १९

[1] वै. आशौ., pp. 47, 61 and 82.

[2] वै. आशौ., p. 48.

[3] शु. कल्प., p. 21/b; [a] आख्यानैः (?).

[4] शु. कल्प., p. 21/b., ...शोकमहाय (*sic*).

[5] शु. कल्प., p. 21/b.

[6] शु. कल्प., p. 21/b.

[7] शु. कल्प., p. 21/b.

[8] शु. कल्प., p. 21/b.

[9] शु. कल्प., p. 22/b; शु. कौ., p. 142; [b] शयानाश्च, हार. p. 158; शु. चि., p. 67; ग. काल., p. 357; [c] क्रीडासनाः, नि. सि. III, p. 32; बा. प्रा., p. 28.

प्रथमेऽह्नि[1] तृतीये[a] च पञ्चमे [b]सप्तमेऽपि च ।
नवमे वाससां त्यागो [c]नखरोम्णां तथाऽन्तिमे ॥ २०

स्वाध्यायः[2] क्रियते यत्र होमश्चोभयकालिकः ।
सायम्प्रात वैश्वदेवं[d] न तेषां सूतकं भवेत् ॥ २१

एकाहाच्छुद्ध्यते[3] विप्रो योऽग्निवेदसमन्वितः ।
हीने हीनतरे वाऽपि त्र्यहश्चतुरहस्तथा ॥ २२

त्रिरात्रेणैव[4][e] शुद्ध्येत्तु विप्रो वेदाग्निसंयुतः ।
पञ्चभिर्वाग्निहीनस्तु[5][f] दशाहाद्ब्राह्मणध्रु[ब्रु]वः[g] ॥ २३

शिलोञ्छायाचितैर्जीवन्[6] सद्यः शुद्ध्येद्द्विजोत्तमः ।
गायत्रीमात्रसारोऽपि तिस्रः सन्ध्या उपास्ति च ॥ २४

न[7] करोति श्ववृत्तिं च षडहः सूतकं भवेत् ।
महानद्यन्तरं[8] यत्र गिरि र्वा व्यवधायकः ।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥ २५

[1] या. अप., p. 885; शु. कल्प., p. 22/b; [b] दिने; [c] लोम्नां तथाऽन्तिके, ग. काल., p. 357; [a] तुरीये.

[2] शु. कल्प., p. 1/b; परा. आ., p. 254; [d] सततं वैश्वदेवश्च तत्राशौचं न विद्यते, या. अप., p. 894; शु. कल्प. वत्पाठः.

[3] या. अप., p. 894.

[4] या. अप., p. 894; शु. कल्प., p. 1/b; [e] ण वि, हार., p. 5; गौ. मि., p. 109; [e] ण विशुध्येत योऽग्निवेदसमन्वितः, शु. वि., p. 3; [e] ण वि, शु. चि., p. 8; [e] ण वि, शु. कौ., p. 7; गौ. मि. वत्पाठः, वै. आशौ., p. 76; [e] ण विशुध्येत.

[5] या. अप., p. 894; शु. कल्प., p. 1/b; [f] पञ्चाहेन, हार., p. 5; [f] पञ्चाहेन; [g] दशाहो ब्राह्मणब्रुवः, गौ. मि., p. 109; [f] पञ्चाहेन, शु. वि., p. 3; [f] पञ्चाहेन; [g] दशाहाद्ब्राह्मणब्रुवः, शु. चि., p. 8; [f] पञ्चाहेन, शु. कौ., p. 7; [f] पञ्चाहेन, वै. आशौ., p. 76; [f] पञ्चाहेन.

[6] या. अप., p. 894.

[7] या. अप., p. 895.

[8] वै. आशौ., p. 105; या. मि., p. 313; शु. च., p. 43; नि. सि., III, p. 11.

देशान्तरं[1] वदन्त्येके[a] षष्टियोजनमायतम्[b] ।
चत्वारिंशद्वदन्त्येके[c] अन्ये[d] त्रिंशत्तथैव च ॥ २६

मातामहादीनां[2] मरणे दौहित्रादीनां त्रिरात्रमाशौचम् ॥

त्र्यहं[3] मातामहाचार्यश्रोत्रियेषु[e] शुचिर्भवेत् ।
मातुले[4] पक्षिणी रात्रिः शिष्यर्त्विग्बान्धवेषु च ॥ २७

अन्याश्रितेषु[5 f] दारेषु परपत्नीसुतेषु च ।
मृतेष्वाप्लुत्य[g] शुद्ध्यन्ति त्रिरात्रेण द्विजोत्तमाः ॥ २८

दशाहेन[6] सपिण्डास्तु शुद्ध्यन्ति [h]प्रेतसूतके ।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्ध्यन्ति गोत्रजाः ॥ २९

पितर्युपरते[7] पुत्रो [i]मातृश्राद्धान्निवर्तते ।
मातर्यपि च वृत्तायां [j]पितृश्राद्धाद्दृते [k]समाः ॥ ३०

[1] परा. आ., p. 229 ; या. मि., p. 313 ; [a] अन्ये ; [c] अन्ये त्रिंशदन्ये, या. अप., p. 905 ; शु. वि., p. 6 ; [b] शत ; [d] त्रिंशदेके, नि. अमृ., p. 265 ; या. मि. वत्पाठः, शु. चि., pp. 13 and 14 ; [d] त्रिंशदेके, उ. तत्व., p. 120 ; ए. तत्व., p. 20 ; [d] त्रिंशदेके, वै. आशौ., p. 105 ; या. मि. वत्पाठः, शु. च., p. 43 ; [c] अन्ये त्रिंशदेके, शु. भा., p. 9.

[2] शु. भा., p. 22.

[3] या. अप., p. 913 ; या. मि., p. 317 ; परा. आ., p. 247 ; शु. वि., p. 11 ; [e] अशुचिर्नरः, नि. अमृ., p. 260 ; वै. आशौ., p. 81 ; स्मृ. उद्धार., p. 230 ; कृत्य. समु., p. 69 ; [e] षु शुचिर्नरः, शु. भा., p. 22.

[4] कृत्य. समु., p. 69 ; शु. वि., p. 11.

[5] द. मी., p. 42 ; शु. कल्प., p. 12/b ; [f] अन्यपूर्वेषु ; [g] शुध्येत्तु त्रिरात्रेण द्विजोत्तमः, शु. चि., p. 36 ; [g] शुध्येत्तु त्रिरात्रेण द्विजोत्तमः, शू. शि., p. 201 ; शु. च., p. 84 ; शु. चि. वत्पाठः.

[6] शु. कल्प., p. 3/a ; परा. आ., p. 205 ; [h] मृत, या. अप., p. 914 ; हार., p. 74 ; स्मृ. च. आशौ., p. 35 ; शु. वि., p. 1 ; शु. चि., pp. 5 and 6 ; ग. काल., p. 256 ; शु. कौ., p. 49 ; शु. तत्व., pp. 276 and 400 ; वै. आशौ., pp. 35 and 75 ; नि. सि., III, p. 5 ; कृत्य. समु., p. 64 ; उत्तरार्धं परम्.

[7] शु. कौ., p. 183 ; शु. तत्व., p. 320 ; [i] मातुः ; [j] पितुः, नि सि., III, p. 46 ; [k] समम्.

सम्पर्कं[1] च सपिण्डोऽपि न कुर्याच्छयनासनम् ।
बान्धवो वा परो वापि स दशाहेन शुद्ध्यति ॥ ३१

अन्यदेशमृतं[2a] ज्ञातिं[b] श्रुत्वा [c]पुत्रस्य जन्म [d]वा ।
अनिर्गतदशाहं[e] तु शेषाहोभि र्विशुद्ध्यति ॥ ३२

अश्रोत्रियेष्वहः[3] कृत्स्नमनूचाने तथा गुरौ ।
मृते राजनि सज्योतिर्यस्य स्याद्विषये स्थितिः ॥ ३३

शुद्ध्येद्विप्रो[4 f] दशाहेन [g]जन्महान्योः स्वयोनिषु ।
सप्तपञ्चत्रिरात्रैस्तु[h] क्षत्रविट्छूद्रयोनिषु ॥ ३४

दासान्तेवासिभृतकाः[5 i] शिष्याश्चैकत्रवासिनः ।
स्वामितुल्येन शौचेन शुद्ध्यन्ति मृतसूतके ॥ ३५

सन्निधानेऽशौचमिति[6 j] शावं[k] सम्परिकीर्तितम् ।
दूरदेशे मृते जाते सद्यः शौचमुदाहृतम् ॥ ३६

कन्याविवाहे[7] सङ्क्रान्ते[l] सूतकं न कदाचन ।

[1] शु. भा., p. 27.

[2] स्मृ. च. आशौ., p. 47 ; शु. कल्प., p. 9/a ; [c] वा पुत्रजन्म च ; [e] गते दशाहे, हार., p. 34 ; [d] च ; [e] गते दशाहे, म. कु., p. 193 ; [e] गते दशाहे, म. रा., p. 637 ; [d] च ; [e] गतदशाहे, नि. प्र., I, p. 105 ; 'हार'वत्पाठः, ग. काल., p. 255 ; [b] जातं ; [d] च ; [e] गते दशाहे, शु. कौ., p. 34 ; म. कु. वत्पाठः, वै. आशौ., p. 101 ; [a] देशे, शु. च., p. 38 ; हार वत्पाठः.

[3] शु. वि., p. 11.

[4] गौ. मि., p. 110 ; हार., p. 54 ; [h] च, परा. आ., p. 221 ; [f] दशाहाच्छुध्यते विप्रः, शु. चि., p. 13 ; [g] हानौ, शु. च., p. 79 ; [g] हानौ.

[5] शु. कल्प., p. 7/b ; शु. तत्व., p. 336 ; हार., pp. 3 and 60 ; [i] कृतकाः, शु. चि., pp. 15 and 16 ; शु. शि., p. 197 ; नि. सि., III, p. 11 ; शु. च., p. 82.

[6] शु. कल्प., p. 9/a ; स्मृ. च. आशौ., p. 48 ; [k] सारांशं, शु. च., p. 41 ; [j] इदम्.

[7] स्मृ. च. आशौ., p. 78 ; शु. च., p. 97 ; [l] सङ्क्रान्तौ, नि. सि., III, p. 17 ; सं. कौ., p. 59 ; [l] संक्रान्तौ. Repeated *infra*, p. 353.

आशौचे[1] वर्तमाने तु पुनर्दाहक्रिया यदि ।
तच्छेषेणैव शुद्धिः स्यादतीते सूतकं भवेत् ॥ ३७

दशाहादि[2] यथावर्णं पित्रोराशौचमाचरेत् ।
पत्नीनामपि विज्ञेयो दम्पत्योश्च परस्परम् ॥ ३८

सपिण्डानां त्रिरात्रं स्यादित्युवाच प्रजापतिः ।
क्षत्रियो[3] द्वादशाहेन शुद्ध्यते मृतसूतके ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥ ३९

अनादिदेवतां[4 a] दृष्ट्वा शुचः स्युर्नष्टभार्गवे ।
मलमासेप्यनावृत्ततीर्थयात्रां विवर्जयेत् ॥ ४०

मलिम्लुचे[5] त्वनावृत्तं तीर्थस्नानमपि त्यजेत् ।
शावाशौचं[6] त्रिरात्रं स्यान्महागुरुनिपातने ।
दुहितृणां तु विन्नानां सर्ववर्णेष्वयं विधिः ॥ ४१

श्वशुरयोर्भगिन्यां[7] च मातुलायां च मातुले ।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥ ४२

शावाशौचं[8 b] तु[c] सर्वेषां सूतकं मातुरेव [d]च ।
स्नानं [e]प्रकुर्यात्तु पिता [f]स्पृश्यो भवति तत्क्षणात् ॥ ४३

[1] स्मृ. च. आशौ., p. 129; वै. आशौ., p. 109.

[2] वै. आशौ., p. 105.

[3] परा. आ., p. 209.

[4] वी. मि. स., p. 156; ग. काल., p. 253; [a] अपूर्व.

[5] कृत्य. समु., p. 40.

[6] ग. काल., p. 311.

[7] नि. सि., III, p. 7.

[8] शु. कल्प., p. 5/a; वै. आशौ., p. 41; [e] कुर्यात् पिता तत्र ज्ञातयो न सचेलिनः, हार., p. 16; [e] पिता प्रकुर्वीत ज्ञातयो न सचेलिनः, परा. आ., p. 260; [b] जाता; [f] ज्ञातयोऽन्ये सचैलिनः, शु. च., p. 9; [c] च; [d] हि; [f] ज्ञातयो न सचेलिनः.

यस्तैः[1] सह[a] सपिण्डोऽपि[b] प्रकुर्याच्छयनाशनम् ।
बान्धवो [c]वा परो वाऽपि स दशाहेन शुद्ध्यति ॥ ४४

डिम्बाहवे[2][d] विद्युता च [e]राज्ञा गोविप्रपालने ।
सद्यः[3][f] शौचं [g]हतस्याहुस्त्र्यहं चान्ये महर्षयः ॥ ४५

आममांसं[4] घृतं क्षौद्रं स्नेहाश्च फलसंभवाः ।
म्लेच्छभाण्डगता[दूष्या]निष्क्रान्ताः शुचयः स्मृताः ॥ ४६

मैथुने[5] कटधूमे च सद्यः स्नानं विधीयते ।
अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥ ४७

शवस्पृष्टं[6][h] दिवाकीर्तिं चितिं यूपं रजस्वलाम् ।
स्पृष्ट्वा [i]प्रमादतो विप्रः स्नानं कृत्वा [j]तु शुद्ध्यति ॥ ४८

पतितं[7] सूतिकामन्त्यं शवं स्पृष्ट्वा [k]च कामतः ।
स्नात्वा[l] सचैलं[m] हुत्वाग्निं[n] घृतं प्राश्य विशुद्ध्यति ॥ ४९

[1] शु. कल्प., p. 13/a ; परा. आ., p. 261 ; [a] सहा ; [c] अबान्धवो दशाहेन विशुध्यति, हार., p. 84 ; [a] सहा, शु. चि., p. 45 ; [a] सहा ; [b] नासने पूर्वार्धं परं, शु. तत्त्व., p. 263 ; शु. चि. वत्पाठः, वै. आशौ., p. 115 ; [b] नादिकं ; [c] अबान्धवो, शु. च., p. 68 ; [a] सहा ; [b] नासनं, वि. म., p. 117 ; [b] नासने ; [c] अबान्धवो, नि. सि., III, p. 1.

[2] या. अप., p. 917 ; शु. कल्प., p. 10/b ; [d] डिम्भाहते रित्युता च राजभावो विप्रताडने । हार., p. 112 ; शु. वि., p. 11 ; शु. कौ., p. 71 ; नि. सि., III, p. 9 ; [e] राज्ञां.

[3] या. अप., p. 917 ; शु. कल्प., p. 10/b ; [f] सद्यः शौचं च तस्याशी-त्त्रयं, हार., p. 112 ; [g] त्र्यहमन्ये, शु. वि., p. 11 ; शु. कौ., p. 71 ; नि. सि., III, p. 9 ; [g] त्रयम्.

[4] शु. वि., p. 32 ; शु. कौ., p. 318 has अन्त्यभाण्डस्थिता, citing from यम.

[5] या. अप., p. 922 ; या. मि., p. 322.

[6] वी. मि. आ., p. 205 ; या. अप., p. 922 ; [h] स्पृशं ; [i] तु कामतो ; [j] वि.

[7] शु. कल्प., p. 29/b ; वी. मि. आ., p. 205 ; [l] स्नानं सचेलं कृत्वा, या. अप., p. 922 ; आ. दर्श., p. 17 ; [k] तु ; [n] स्पृष्ट्वा, प्रा. वि., p. 468; [k] तु ; [m] सचेलं, शु. चि., p. 90 ; [m] सचेलं स्पृष्ट्वा.

ऊर्ध्वं[1] नाभेः करौ मुक्ता यदङ्गमुपहन्यते ।
तत्र[2] स्नानमधस्तात्तु प्रक्षाल्याचम्य शुद्ध्यति ॥ ५०

स्वाध्यायेनानुतापेन[3 a] होमेन[b] तपसैनसः ।
ध्यानेन [c]क्षेत्रवासेन [d]दानेनेह परिक्षयः ॥ ५१

गात्रं[4] मृदम्भसा शुद्ध्येद्भूतं भूताभिशंसनात् ।
विद्यया तपसा देही यतिर्ज्ञानेन शुद्ध्यति ॥ ५२

सबाह्याभ्यन्तरः[5] शौचमेतदुक्तमशेषतः ।
सर्वस्याधिकं प्रोक्तमर्थशौचं स्वयंभुवा ॥ ५३

परापवादाश्रवणं[6] परस्त्रीणाम[श्व?]दर्शनम् ।
एतच्छौचं श्रोत्रदृशोर्जिह्वाशुद्धिरपैशुनम् ॥ ५४

अप्राणिवधमस्तेयं[7] शुचित्वं[e] पादहस्तयोः ।
असंश्लेषः[8] परस्त्रीणां शारीरं शौचमिष्यते ॥ ५५

स्वयातं[9] पतितं व्यङ्गं उन्मत्तं शवहारकम् ।
सूतिकां सूपिकां नारीं रजसा च परिप्लुताम् ॥ ५६

प्रकक्कुरवराहांश्च[10] ग्राम्यान् संस्पृश्य मानवः ।
सचेलं सशिरः स्नात्वा तदानीमेव शुद्ध्यति ॥ ५७

[1] या. अप., p. 926.

[2] या. अप., p. 926.

[3] या. अप., p. 928; शु. कल्प., p. 27/b; [a] स्वाध्यायेन [b] मोहेन; [c] पाशेन; [d] दानेन भूतादिशंसनम्, शु. चि., p. 85; [a] स्वाध्यायेन

[4] शु. कल्प., p. 27/b.

[5] शु. कल्प., p. 27/b.

[6] या. अप., p. 928; शु. कल्प., p. 27/b.

[7] या. अप., p. 928; शु. कल्प., p. 27/b; [e] शुद्धित्वम्.

[8] या. अप., p. 928; शु. कल्प., p. 27/b.

[9] शु. कल्प., p. 29/b.

[10] शु. कल्प., p. 29/b. श्वकुक्कुटवराहांश्च ?

अशुद्धानपि[1] ह्येतान् शुद्धश्च यदि संस्पृशेत् ।
विशुद्ध्यत्युपवासेन पुनः कृच्छ्रेण वा पुनः ॥ ५८

उपस्पृश्याऽशुचिस्पृष्टं[2] द्वितीयं वाऽपि मानवः ।
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुद्ध्यति ॥ ५९

मानुषास्थिवसाविष्ठां[3] आर्तवं मूत्ररेतसी ।
मज्जानं[4] शोणितं वाऽपि परस्य यदि संस्पृशेत् ॥ ६०

स्नात्वाऽपमृज्य[5] लेपादीन् अर्चयंश्च शुचिर्भवेत् ।
तान्येव स्वानि संस्पृश्य पूतः स्यात्परिमार्जनात् ॥ ६१

रोमोद्भेदे[6][a] शशी भुङ्क्ते गन्धर्वः कुचदर्शने ।
अनलस्तु[b] रजो [c]भुङ्क्ते स्त्रियो मेध्यास्तु नान्यथा ॥ ६२

अत्यन्तदूषिताऽपि[7] स्त्री न परित्यागमर्हति ।
सर्वेषां निष्कृतिः प्रोक्ता नारीणां [d]तु विशेषतः ॥ ६३

बलात्कारोपभुक्ता[8] वा चौरहस्तगताऽपि वा ।
स्वयं विप्रतिपन्ना वा अथवा [e]विप्रमादिता ॥ ६४

[1] शु. कल्प., p. 29/b.

[2] शु. कल्प., p. 29/b.

[3] शु. कल्प., p. 29/b.

[4] शु. कल्प., p. 29/b.

[5] शु. कल्प., p. 29/b.

[6] शु. कल्प., p. 36/a ; हे. प. श्रा., p. 843 ; [a] मोदवे शशी भक्तो ; [b] सूर्यश्चैव रजोयोगः कन्यां भुङ्क्ते च पार्वती । शु. चि., p. 117 ; [a] रोमोद्भवे : [c] योगे कन्यां भुङ्क्ते न चान्यथा.

[7] शु. कल्प., p. 36/a ; हे. प. श्रा., p. 844 ; शु. चि., p. 117 ; [d] च.

[8] हे. प. श्रा., p. 844 ; शु. कल्प., p. 36/a ; पूर्वार्ध परं., शु. चि., p. 117 ; [e] विप्रमोदिता.

ऊर्ध्वं[1] नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते ।
तत्र[2] स्नानमधस्तात्तु प्रक्षाल्याचम्य शुद्ध्यति ॥ ५०

स्वाध्यायेनानुतापेन[3][a] होमेन[b] तपसैनसः ।
ध्यानेन [c]क्षेत्रवासेन [d]दानेनेह परिक्षयः ॥ ५१

गात्रं[4] मृदम्भसा शुद्ध्येद्धूतं भूताभिशंसनात् ।
विद्यया तपसा देही यतिर्ज्ञानेन शुद्ध्यति ॥ ५२

सबाह्याभ्यन्तरः[5] शौचमेतदुक्तमशेषतः ।
सर्वस्याधिकं प्रोक्तमर्थशौचं स्वयंभुवा ॥ ५३

परापवादाश्रवणं[6] परस्त्रीणाम[श्र?]दर्शनम् ।
एतच्छौचं श्रोत्रदृशोर्जिह्वाशुद्धिरपैशुनम् ॥ ५४

अप्राणिवधमस्तेयं[7] शुचित्वं[e] पादहस्तयोः ।
असंश्लेषः[8] परस्त्रीणां शारीरं शौचमिष्यते ॥ ५५

स्वर्यातं[9] पतितं व्यङ्गं उन्मत्तं शवहारकम् ।
सूतिकां सूपिकां नारीं रजसा च परिप्लुताम् ॥ ५६

प्रकक्कुरवराहांश्च[10] ग्राम्यान् संस्पृश्य मानवः ।
सचेलं सशिरः स्नात्वा तदानीमेव शुद्ध्यति ॥ ५७

[1] या. अप., p. 926.

[2] या. अप., p. 926.

[3] या. अप., p. 928; शु. कल्प., p. 27/b; [a] स्वाध्यायेन; [b] मोहेन; [c] पाशेन; [d] दानेन भूतादिशंसनम्, शु. चि., p. 85; [a] स्वाध्यायेन.

[4] शु. कल्प., p. 27/b.

[5] शु. कल्प., p. 27/b.

[6] या. अप., p. 928; शु. कल्प., p. 27/b.

[7] या. अप., p. 928; शु. कल्प., p. 27/b; [e] शुद्धित्वम्.

[8] या. अप., p. 928; शु. कल्प., p. 27/b.

[9] शु. कल्प., p. 29/b.

[10] शु. कल्प., p. 29/b. श्वकुक्कुटवराहांश्च ?

अशुद्धानपि[1] श्वेनान् शुद्धश्च यदि संस्पृशेत् ।
विशुद्ध्यत्युपवासेन पुनः कृच्छ्रेण वा पुनः ॥ ५८

उपस्पृश्याऽशुचिस्पृष्टं[2] द्वितीयं वाऽपि मानवः ।
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुद्ध्यति ॥ ५९

मानुषास्थिवलाविष्ठां[3] आर्तवं मूत्ररेतसी ।
मज्जानं[4] शोणितं वाऽपि परस्य यदि संस्पृशेत् ॥ ६०

स्नात्वाऽपमृज्य[5] लेपादीन् अर्चयंश्च शुचिर्भवेत् ।
तान्येव स्वानि संस्पृश्य पूतः स्यात्परिमार्जनात् ॥ ६१

रोमोद्भेदे[6][a] शशी भुङ्क्ते गन्धर्वः कुचदर्शने ।
अनलस्तु[b] रजो [c]भुङ्क्ते स्त्रियो मेध्यास्तु नान्यथा ॥ ६२

अत्यन्तदूषिताऽपि[7] स्त्री न परित्यागमर्हति ।
सर्वेषां निष्कृतिः प्रोक्ता नारीणां [d]तु विशेषतः ॥ ६३

बलात्कारोपभुक्ता[8] वा चौरहस्तगताऽपि वा ।
स्वयं विप्रतिपन्ना वा अथवा [e]विप्रमादिना ॥ ६४

[1] शु. कल्प., p. 29/b.

[2] शु. कल्प., p. 29/b.

[3] शु. कल्प., p. 29/b.

[4] शु. कल्प., p. 29/b.

[5] शु. कल्प., p. 29/b.

[6] शु. कल्प., p. 36/a ; हे. प. श्रा., p. 843 ; [a] मोददे शशी भक्तो ; [b] सूर्यश्चैव रजोयोगः कन्यां भुङ्क्ते च पार्वती । शु. चि., p. 117 ; [a] रोमोद्भवे ; [c] योगे कन्यां भुङ्क्ते न चान्यथा.

[7] शु. कल्प., p. 36/a ; हे. प. श्रा., p. 844 ; शु. चि., p. 117 ; [d] च.

[8] हे. प. श्रा., p. 844 ; शु. कल्प., p. 36/a ; पूर्वार्धं परं., शु. चि., p. 117 ; [e] विप्रमोदिता.

सोमः[1] शौचं [a]ददावासां [b]गन्धर्वाश्च शुभां गिरम् ।
पावकः[2] सर्वभक्ष्यत्वं [c]मेध्या वै [d]सर्वतो ह्यतः ॥ ६५

स्त्रियः[3][e] पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासि मासि [f]रजस्तासां दुष्कृतान्यपकर्षति ॥ ६६

उच्छिष्टं[4] मलिनं क्लिन्नं यच्च विष्ठादिदूषितम् ।
शुद्धिः शुद्ध्यति तत्सर्वमपां शुद्धिः कथं भवेत् ॥ ६७

अस्थिचर्मविनिर्मुक्तौ[5] दूषितैश्च शवादिभिः ।
उद्धृत्य तज्जलं सर्वं शोधनं परिमार्जनम् ॥ ६८

श्वभिः[6] श्वपाकचाण्डालैर्दूषितेषु विशोधनम् ।
उद्धरेदुदकं सर्वं मार्जनं परिशोधनम् ॥ ६९

मृतपञ्चनखात्क्रूरादत्यन्तोपहतात्तथा[7][g] ।
अपः[8] समुद्धरेत्सर्वाः [h]शेषं वस्त्रेण शोधयेत् ॥ ७०

वह्निप्रज्वालनं[9] कृत्वा कूपे पक्वेष्टकाचिते ।
पञ्चगव्यं न्यसेत्पश्चान्नवतोयसमुद्भवे ॥ ७१

[1] शु. कल्प., p. 36/a ; हे. प. श्रा., p. 844 ; [a] ददात्यासां, शु. चि. p. 117 ; [a] ददौ तासाम् ; [b] तु ; [a] ददौ स्त्रीणामिति हे. प. पाठभेदः.

[2] शु. कल्प., p. 36/a ; हे. प. श्रा., p. 844 ; [c] मेध्यत्वं ; [d] योषित शु. चि., p. 117 ; [d] योषितः.

[3] शु. कल्प., p. 36/a ; हे. प. श्रा., p. 844 ; [e] परिभ्रमहनं......... [f] ......दुष्कृतान्यभिः कर्मभिः, शु. चि., p. 117.

[4] शु. कल्प., p. 42/b ; cf. ७७ below from हेमाद्रि.

[5] शु. चि., p. 100.

[6] शु. चि., p. 100.

[7] या. अप., p. 272 ; म. पारि., p. 465 ; [g] नखाः कुप्या दम्पत्यो हतास्तथा.

[8] या. अप., p. 272 ; म. पारि., p. 465 ; [h] शेषा.

[9] या. अप., p. 272 ; म. पारि., p. 465.

ससर्पाहस्पतीमासावधिमासश्च[1] निन्दितः ॥ ७१अ

वापीकूपतटागेषु[2] दूषितेषु विशोधनम् ।
घटानां शतमुद्धृत्य [a]नदीतोयं ततः क्षिपेत् ।
पञ्चगव्यं ततः क्षिप्त्वा ब्राह्मणान् स्वस्ति वाचयेत् ॥ ७२

अम्भसा[3] हेमरूप्यायः कांस्यं शुद्ध्यति भस्मना ।
अम्लाम्भसा[b] ताम्ररैत्ये [c]पुनर्दाहेन मृण्मयम् ॥ ७३

ताम्बूलपात्रे[4] यत्तोयं चूर्णं यच्चापि गोरसे ।
क्षौद्रे[5] तैले गुडे चैव न दोषः शाकटायनः ॥ ७४

वस्त्रवैदलचर्माद्ये[6 d, e] शुद्धिः प्रक्षालनं स्मृतम् ।
अतिदुष्टस्य तन्मात्रं [f]त्यजेच्छित्वाऽऽत्मशुद्धये ॥ ७५

गृहस्य[7] मार्जनं लेपः शुद्धिः प्लावो द्रवस्य तु ।
गोकुले[8] कन्दुशालायां तलचक्रेक्षुयन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीभिराचरितानि च ॥ ७६

[1] शु. कौ., p. 276.

[2] शु. कौ., p. 299; शु. चि., p. 100; कृत्य. समु., p. 82; [a] पञ्चगव्यं.

[3] शु. कौ., p. 306; म. कु., p. 201; [b] अम्लैस्ताम्रं च रैत्यं च; [c] पाकेन, म. रा., p. 665; [b] आम्लाद्यैस्ताम्ररैत्ये च; [c] पाकेन मृन्मयं, शु. तत्व., p. 295; म. कु. वत्पाठः.

[4] शु. कौ., p. 319.

[5] शु. कौ., p. 319.

[6] शु. कल्प., p. 37/b; हे. प. श्रा., p. 820; [d] वेदनचर्मीणां, शु. वि., p. 30; [e] चर्मादेः; [f] छित्वा तु शोधयेत्, शु. चि., p. 112; [e] चर्मीणां; [f] छिन्दात्.

[7] हे. प. श्रा., p. 824.

[8] हे. प. श्रा., p. 832.

उच्छिष्टं[1] मलिनं क्लिन्नं यच्च विष्ठानुलेपितम् ।
अद्भिः शुद्ध्यति तत्सर्वमपां शुद्धिः कथं भवेत् ॥ ७७

सूर्येन्दुरश्मिपातेन[2] मारुतस्पर्शनेन[a] च ।
गवां मूत्रपुरीषेण शुद्ध्यन्त्याप इति स्थितिः ॥ ७८

[1] हे. प. श्रा., p. 834 ; cf. ६८, *supra*, from कल्पतरु.

[2] शु. कल्प., p. 42/b ; हे. प. श्रा., p. 834 ; [a] मरुत्स्पर्शन एव च.

५

## ॥ आपद्धर्मकाण्डम् ॥

वृद्धौ[1] च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ १

अजीवन्[2] कर्मणा स्वेन विप्रः [a]क्षत्रं समाश्रयेत् ।
वैश्यकर्माथवा [b]कुर्याद्वार्षलं परिवर्जयेत् ॥ २

कुसीदकृषिवाणिज्यं[3 c] प्रकुर्वीत [d]स्वयंकृतम् ।
आपत्काले[e] स्वयं[f] कुर्वन्नैनसा[g] युज्यते द्विजः ॥ ३

लब्धलाभः[4 h] पितृन्देवान् [i]ब्राह्मणांश्चैव भोजयेत् ।
ते [j]तृप्तास्तस्य तं दोषं शमयन्ति न संशयः ॥ ४

वणिक्कुसीदी[5 k] दद्यात्तु वस्त्रगोकाञ्चनादिकम् ।
कृषीवलोऽन्नपानानि यानशय्यासनानि च ॥ ५

[1] स्मृ. च. आ., p. 465 ; स्मृ. मुक्ता. आ., p. 184.

[2] स्मृ. च. आ., p. 470 ; वि. पारि., II, p. 251 ; [a] क्षात्रं ; [b] हीनकर्म विवर्जयेत्, स्मृ. मुक्ता. आ., p. 187 ; [a] क्षत्त्यम्.

[3] गृ. कल्प., p. 44/b ; स्मृ. च. आ., p. 471 ; [e] कल्पेऽन्यथा कुर्वन्, परा. आ., p. 5 ; [d] अस्वयंकृतं, गृ. रत्ना., pp. 417 and 428 ; [d] अस्वयं ; [g] कुर्वन्, आ. तत्व., p. 349 ; [d] अस्वयं ; [g] कुर्यान्मैनसा, ज्यो. तत्व., p. 703 ; [c] कुसीदं ; [d] अस्वयं ; [g] कुर्वन्नैनसा लिप्यते, सं. म., p. 123 ; स्मृ. मुक्ता. आ., p. 187 ; [c] कुसीदं ; [d] अस्वयं, वा. आ., p. 365 ; [f] अन्यथा कुर्वन्.

[4] गृ. कल्प., p. 44/b ; आ. तत्व., p. 349 ; [i] चापि पूजयेत् ; [h] कामः ; [j] तुष्टास्तस्य(ते? तं), गृ. रत्ना., pp. 417 and 428 ; [i] चापि पूजयेत् ; [j] हृष्टाः.

[5] गृ. कल्प., p. 44/b ; आ. तत्व., p. 349 ; गृ. रत्ना., p. 428 ; [k] कुसीदं.

पण्येभ्यो[1] विंशकं दत्वा [a]पशुस्वर्णादिकं शतम् ।
वणिक्कुसीद्यदोषः[b] स्याद्ब्राह्मणानां च [c]पूजनात् ॥ ६

राज्ञो[2 d] दद्यात्तु षड्भागं [e]देवतानां [f]च विंशकम् ।
त्रिंशद्भागं [g]तु विप्राणां कृषिं [h]कुर्वन्न [i]दुष्यति ॥ ७

अष्टवाहं[3] हलं धर्म्यं षड्गवं मध्यमं स्मृतम् ।
चतुर्गवं जघन्यं च शास्त्रविद्भिरुदाहृतम् ॥ ८

बह्वो[4] वर्धनोपाया[j] ऋषिभिः परिकीर्तिताः ।
सर्वेषामपि [k]चैतेषां [l]कुसीदमधिकं विदुः ॥ ९

अनावृष्ट्या[5] गजभयान्मूषिकाद्यैरुपद्रवैः[m,n] ।
वृष्ट्यादिके[o] भवेद्धानिः [p]सा कुसीदे [q]न घातयेत् ॥ १०

[1] गृ. कल्प., p. 44/b; आ. तत्व., p. 349; [b] कुसीददोषः; [c] भोजने, गृ. रत्ना., p. 428; [a] वर्णादिकं; [c] पूजने.

[2] गृ. कल्प., p. 46/a; स्मृ. च. आ., p. 454; [d] राज्ञे दत्वा च; [h] कृत्वा न दोषभाक्, या. अप., p. 937; [d] राज्ञे दत्वा तु; [f] तु; [h] कृत्वा न दोषभाक्, गृ. रत्ना., p. 431; [d] राज्ञे दद्याच्च; [g] च; [h] कृत्वा न दोषभाक्, (आ. तत्व., p. 349; ज्यो. तत्व., p. 703; [d] राज्ञे दत्वा तु; [g] च; [h] कृत्वा न दोषभाक्), वि. म., p. 65; [d] राज्ञे दत्वा च; [e] देवानां चैव; [i] दोषभाक्, स्मृ. मुक्ता. आ., p. 179; [d] राज्ञे दत्वा च; [i] दोषभाक्.

[3] या. अप., p. 938.

[4] गृ. कल्प., p. 50/a; स्मृ. च. आ., p. 473; [j] वर्त; [k] वैतेषां, गृ. रत्ना., p. 448; [j] वर्त, म. पारि., p. 230; [j] वर्त; [l] अपि तं, आ. तत्व., p. 354; [j] वर्त, स्मृ. मुक्ता. आ., p. 188; [j] वर्त, बा. आ., p. 368; [j] वर्त.

[5] गृ. कल्प., p. 50/a; म. पारि., p. 230; [m] राज; [o] कृष्या; [q] न विद्यते, स्मृ. च. आ., p. 473; [m] राज; [o] कृष्या; [n] प्लवैः; [q] न विद्यते, गृ. रत्ना., p. 448; गृ. कल्प. वत्; [p] कुसीदे सा इति च, आ. तत्व., p. 354; [m] राजभयैः; [n] प्लवैः; [o] कृष्या; [q] न विद्यते, स्मृ. शुक्ता. आ., p. 188; [m] राज; [n] प्लवैः; [o] कृष्या; [q] च विद्यते, बा. आ., p. 368; गृ. कल्प. वत्पाठः.

देशं[1a] गतानां या [b]वृद्धिर्या च पुण्योपजीविनाम् ।
कुसीदं कुर्वतः सम्यक् [c]साऽपि तस्यैव जायते ॥ ११

शुक्लपक्षे[2] तथा कृष्णे रजन्यां [d]दिवसेऽपि वा ।
उष्णे [e, f]वर्षेऽतिशीते वा वर्धनेन निवर्तते ॥ १२

गर्तानूपं[3] सुसेकं च समन्तात्क्षेत्रसंयुतम् ।
सुकृष्टं च तथा काले वापयन् फलमश्नुते ॥ १३

विदधीत[4] गवाभ्यासे तथा राजपथस्य च ।
ऊषरं मूषिकाव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥ १४

कृशातिवृद्धं[5] क्षुद्रं च रोगिणं प्रपलायिनम् ।
काणं खञ्जं च नादद्याद्वाह्यं प्राज्ञः कृषीवलः ॥ १५

अशीतिभागो[6] वर्धेत लाभो द्विगुणतामियात् ।
प्रयुक्तं सप्तभिर्वर्षैस्त्रिभागोनैर्न संशयः ॥ १६

भोगाद्यद्द्विगुणादूर्ध्वं[7g] चक्रवृद्धिश्च गृह्यते ।
मूलं च सोदयं पश्चाद्वार्धुष्यं तद्विगर्हितम् ॥ १७

[1] गृ. कल्प., p. 50/a ; स्मृ. मुक्ता. आ., p. 188 ; [a] दिशं ; [b] नाना-पण्यो ; [c] सा स्थितेश्चैव जायते, स्मृ. च. आ., p. 473 ; [b] नानापण्यो ; [c] सा स्थितस्यैव, गृ. रत्ना., p. 448 ; [a] दिशं ; [b] नानापण्यो ; [c] साऽस्मिन् तस्यैव, बा. आ., p. 368 ; गृ. कल्पतरुवत्पाठः.

[2] गृ. कल्प., p. 50/a ; स्मृ. मुक्ता. आ., p. 188 ; [e] वार्षनिशीथे वा वर्धनं तन्निवर्तनम्, स्मृ. च. आ., p. 473 ; [e] वर्षति शीते वा वर्धते न, गृ. रत्ना., p. 448 ; [e] शीतेतिवर्षे वा वर्धनं वि, बा. आ., p. 368 ; [d] तथा ; [f] अथ वाते वा वर्धते न.

[3] गृ. रत्ना., p. 429.

[4] गृ. रत्ना., p. 429.

[5] गृ. रत्ना., p. 433.

[6] गृ. रत्ना., p. 446.

[7] गृ. कल्प., p. 49/a ; बा. आ., p. 368 ; [g] भोगे यद्द्विगुणना इष्टं.

ब्राह्मणश्चैव[1] राजा च द्वावप्येतौ धृतव्रतौ ।
नैतयोरन्तरं किञ्चित्प्रजा धर्माभिरक्षणात् ॥ १८

ब्राह्मणस्तु[2] कृषिं कुर्वन् वाहयेदिच्छया धराम् ।
न किञ्चित्कस्यचिद्दद्यात्स सर्वस्य प्रभुर्यतः ॥ १९

तस्मान्न[3] ब्राह्मणो दद्यात्कुर्वाणो धर्मतः कृषिम् ।
ग्रामेशस्य नृपस्यापि क्रियतामप्यसौ बलिम् ॥ २०

अतिपापकृतां[4] राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं ह्येतदुत्तमम् ॥ २१

जात्या[5] णेश - - कटाण्ग्मयाब्जा वृद्धिर्वणिक्कृषिः ।
अनूपं पर्वतो राजा विपत्तौ जीवनानि तु ॥ २२

असतोऽपि[6 a] स्वमादाय साधुभ्यः सम्प्रयच्छति ।
धनस्वामिनमात्मानं सन्तारयति [b]दुस्तरात् ॥ २३

वृत्त्युपात्तेन[7] लब्धार्थं कुर्यात्पालनवर्धनम् ।
भोगं च बन्धुभिः सार्धं दीनानाथार्थिभिस्तथा ॥ २४

[1] बा. आ., p. 371.

[2] बा. आ., p. 371.

[3] बा. आ., p. 371.

[4] बा. आ., p. 402.

[5] गृ. कल्प., p. 50/a. First four occupations unintelligible in the corrupt text reproduced.

[6] गृ. कल्प., p. 53/a; म. पारि., p. 220; [a] अपि समादाय, गृ. रत्ना., p. 460; [a] अपीदमादाय; [b] दुष्कृतात्, नि. प्र., II, p. 302; [a] यः समादाय; [b] दुष्कृतात्.

[7] गृ. रत्ना., p. 473.

सख्यं[1] समाधिकैः[a] कुर्यादुपेयादीश्वरं सदा ।
वैरं निर्हेतुकं वादं न कुर्यात्केनचित्सह ॥ २५

ज्ञातिबन्धुविवाह्येभ्यो[2] मित्रमभ्यधिकं स्मृतम् ।
समानमसमानं वा प्रकुर्वीत प्रयत्नतः ॥ २६

शोकारातिभयत्राणप्रीतिविस्रम्भभाजनम्[3] ।
आपद्बलं च मित्रं च लोके बह्वधिकं च तत् ॥ २७

असमानोधिविस्रम्भो[4] विश्वासस्तस्य गर्हितः ॥ २७अ

दानेन[5] भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुः [b]इत्थं प्राहुर्मनीषिणः ॥ २८

जातान्धो[6] [c] बधिरश्चैव मूकः सङ्कुचिताङ्गुलिः ।
परदारापवादेषु[7] परच्छिद्रानुहिंसने ॥ २९

शोध्यं[8] शुद्ध्यति मृत्तोयैः प्रायश्चित्तैश्च [d]पातकम् ।
ब्रह्मस्वन्यासहर्ता[e] वा दमं कृत्वा न शुद्ध्यति ॥ ३०

एवं[9] ज्ञात्वा परस्वानि मनसापि न चिन्तयेत् ।
परस्त्रियो विशेषेण धर्मसारमिदं स्मृतम् ॥ ३१

[1] गृ. रत्ना., p. 484; म. पारि., p. 117; [a] समधिकैः, वी. मि. सं., p. 580.

[2] गृ. रत्ना., p. 484.

[3] गृ. रत्ना., p. 484.

[4] गृ. रत्ना., p. 484.

[5] गृ. कल्प., p. 63/a; गृ. रत्ना., p. 497; [b] इति.

[6] गृ. कल्प., p. 67/b; गृ. रत्ना., p. 516; [c] जात्यन्धो.

[7] गृ. कल्प., p. 67/b; गृ. रत्ना., p. 516.

[8] गृ. कल्प., p. 67/b; गृ. रत्ना., p. 516; [d] पातकैः; [e] हर्तारौ तमदत्वा न शुध्यतः.

[9] गृ. कल्प., p. 67/b; गृ. रत्ना., p. 516.

नैवंविधस्तु[1] स्वपितॄन् त्रायते महतो भयात्।
वितत्येह यशो दीप्तं ब्रह्मलोके महीयते ॥ ३२

अन्यायेन[2] हृता भूमिरन्यायेन च हारिता।
हरन्तो हारयन्तश्च हन्युस्त्रिपुरुषं कुलम् ॥ ३३

लोहचूर्णाश्मचूर्णे[3] च विषं च जरयेन्नरः।
ब्रह्मस्वं[4] त्रिषु लोकेषु कः पुमान् जरयिष्यति ॥ ३४

विन्ध्याटवीष्वतोयासु[5] शुष्ककोटरवासिनः।
कृष्णसर्पाश्च जायन्ते ब्रह्मदायापहारकाः ॥ ३५

यत्किञ्चित्कुरुते[6] पापं पुरुषो लोभमोहितः।
सर्वं तद्भूमिदानेन क्षिप्रमेव प्रणाशयेत् ॥ ३६

दशहस्तेन[7] वंशेन दश वंशाः समन्ततः।
पञ्च चाभ्यधिकास्तद्वदेतद्गोचर्मलक्षणम् ॥ ३७

स्वदत्तां[8] परदत्तां वा यो [a]हरेद्वै वसुन्धराम्।
स [b] विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते ॥ ३८

हर्ता[9][c] हारयते भूमिं [d]मन्दबुद्धिस्तु यो नरः।
स[10] बद्धो वारुणैः पाशैस्तिर्यग्योनिषु जायते ॥ ३९

[1] गृ. रत्ना., p. 516.

[2] गृ. रत्ना., p. 517.

[3] गृ. रत्ना., p. 517.

[4] गृ. रत्ना., p. 517.

[5] गृ. रत्ना., p. 517.

[6] या. अप., p. 1225.

[7] या. अप., p. 1225.

[8] गृ. रत्ना., p. 517; दा. कौ., p. 41; [a] हरेत; [b] षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः.

[9] गृ. रत्ना., p. 517; दा. कौ., p. 41; [c] हरते हारयेद्; [d] तमोवृतः.

[10] गृ. रत्ना., p. 517; दा. कौ., p. 41.

षष्टिवर्षसहस्राणि[1] स्वर्गे वसति भूमिदः ।
उच्छेत्ता[a] चानुमन्ता च [b]तावन्ति नरकं वसेत् ॥ ४०

तडागानां[2] सहस्रेण अश्वमेधशतेन च ।
गवां कोटिप्रदानेन भूमिहर्ता न शुद्ध्यति ॥ ४१

ब्रह्मस्वे[3] मा मतिं कुर्यात्प्राणैः कण्ठगतैरपि ।
अग्निदग्धानि रोहन्ति ब्रह्मदग्धं न रोहति ॥ ४२

न[4] विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥ ४३

ब्रह्मस्वं[5] प्रणयाद्भुक्तं दहत्यासप्तमं कुलम् ।
विक्रमेण[6] च भुक्तं तद्दश पूर्वान् दशावरान् ॥ ४४

ब्रह्महा[7] वृत्तिहा[c] चोभौ समौ स्यातां न वा समौ ।
कल्पान्ते ब्रह्महा शुद्ध्येत् वृत्तिहा न कदाचन ॥ ४५

भूमिमाल्यकुशाधान्यशस्याम्बुद्विजनैगमे[8][d] ।
निष्कण्टके [e]च धार्मिक्ये वसेत्स्थाने निरामये ॥ ४६

एककूपोदके[9] ग्रामे ब्राह्मणो वृषलीपतिः ।
वर्षेण शूद्रो भवति कृष्णवर्णमुपाश्रितः ॥ ४७

[1] गृ. रत्ना., p. 517 ; शु. तत्व., p. 363 ; [a] आच्छेत्ता ; [b] तान्येव नरके वसेत्, कृत्य. समु., p. 91 ; [a] आक्षेप्ता ; [b] तान्येव नरकं व्रजेत्.

[2] गृ. रत्ना., p. 517.

[3] गृ. रत्ना., p. 517.

[4] गृ. रत्ना., p. 517.

[5] गृ. रत्ना., p. 517.

[6] गृ. रत्ना., p. 517.

[7] गृ. कल्प., p. 67/b ; गृ. रत्ना., p. 516 ; [c] वित्तहा.

[8] गृ. कल्प., p. 70/b ; गृ. रत्ना., p. 530 ; [d] भूरिमाल्यकुशैश्चोन्तशय्यां बुद्धिजनैर्गमा ; [e] धार्मिके च, म. पारि., p. 124 ; [d] भूरिमान्यकुशेध्मान्नशष्पाम्बु.

[9] म. पारि., p. 125.

एवंवृत्तस्तु[1] पितरौ त्रायते महतो भयात् ।
वित्ततोह यशो दीप्तं ब्रह्मलोके महीयते ॥ ४८

त्रपुसोर्वारुको[2] हेतु पश्चाम्रं पश्चदाडिमम् ।
खर्जूरबदरादीनां[3] मुष्टि गृह्णन्न दोषभाक् ॥ ४९

निवासमुख्यो[4] वर्णानामाचारः[a] समुदाहृतः ।
गुणदोषसमुद्भूतिर्लोके संसर्गजा स्मृता ॥ ५०

विप्रयोनिं[5b] समासाद्य सङ्करं परिवर्जयेत् ।
मानुष्यमधिकं[c] लोके ब्राह्मण्यमधिकं ततः ॥ ५१

उत्तमैरुत्तमैः[6] सार्धं कर्तव्यस्तु समेन वा ।
अपुत्रेण[7] सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसङ्कीर्तनस्य च ॥ ५२

यथा[8] जलं कुप्लवेन तरन् मज्जति मानवः ।
तद्वत्पिता कुपुत्रैश्च तमस्यन्धे निमज्जति ॥ ५३

[1] गृ. कल्प., p. 67/b.
[2] गृ. कल्प., p. 68/b.
[3] गृ. कल्प., p. 68/b.
[4] गृ. कल्प., p. 70/b ; गृ. रत्ना., p. 530 ; [a] विप्राणां.
[5] गृ. कल्प., p. 84/a ; गृ. रत्ना., p. 587 ; [b] विश्वे ; [c] दुर्लभं.
[6] गृ. कल्प., p. 84/a ; गृ. रत्ना., p. 587 ; प्रा. वि., p. 143.
[7] गृ. कल्प., p. 88/b.
[8] गृ. कल्प., p. 88/b.

६

## ॥ प्रायश्चित्तकाण्डम् ॥

विहितस्याननुष्ठानान्निन्दितस्य[1][a] च सेवनात् ।
प्रायश्चित्तं यत्क्रियते तन्नैमित्तिकमुच्यते ॥ १

आक्रुष्टस्तु[2] यदाक्रोशंस्ताडितः[b] प्रतिताडयन् ।
हत्वाततायिनं[c] चैव नापराधी भवेन्नरः ॥ २

गङ्गायमुनयोर्वाऽपि[3] सङ्गमे लोकविश्रुते ।
शुद्ध्येत्त्रिषवणस्नायी त्रिरात्रोपोषितो द्विजः ॥ ३

नटनर्तकतक्षाणः[4] चर्मकारः सुवर्णकृत् ।
स्थाणुपाषण्डगणिका अभोज्यान्नाः प्रकीर्तिताः ॥ ४

नटान्नं[5] रजकस्यान्नं चोरस्यान्नं तथैव च ।
मृतके सूतके चैव स्वर्गस्थमपि पातयेत् ॥ ५

शौण्डिकान्नं[6] नटस्यान्नं क्लीबदण्डिकयोरपि ।
दुष्टान्नमपसृष्टान्नं सोमविक्रयिणस्तथा ॥ ६

[1] परा. प्रा., III, p. 7 ; वै. प्रा., p. 1 ; उत्तरार्धं परं, प्रा. वि., p. 18 ; [a] प्रतिषिद्धनिषेवणात्, मल. तत्व., p. 796 ; प्रा. म., p. 2 ; उत्तरार्धं परं, बा. प्रा., p. 115 ; [a] प्रतिषिद्धनिषेवणात्.

[2] या. अप., p. 1043 ; प्रा. वि., p. 58 ; [b] समाक्रोशन् ; [c] विनाशार्थिन-मायान्तं घातयन्नापराध्नुयात्.

[3] या. अप., p. 1067.

[4] परा. प्रा., II, p. 380.

[5] परा. प्रा., II, p. 380.

[6] परा. प्रा., II, p. 385.

सौनिकान्नं[1] सूतिकान्नं वार्धुषेः पतितस्य च ।
एतेषां ब्राह्मणो भुक्त्वा द्वादशाहं यवान् पिबेत् ॥ ७

वृथारामाश्रमाणां[2] च भेदकः पुण्यविक्रयी ।
विक्रयी ब्राह्मणो यश्च योनिसाङ्करिकश्च यः ॥ ८

यजमानोपजीवी[3] च शूद्राध्यापकयाजकौ ।
कुलटश्चित्रकर्मा च वार्धुषिश्चर्मविक्रयी ॥ ९

समर्घं[4] पण्यमाहृत्य महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत् ॥ १०

गान्धर्वो[5] लोहकारश्च सैनिकस्तन्तुवायकः ।
चक्रोपजिवी रजकः कितवस्तस्करस्तथा ॥ ११

सैनिको[6] वर्णिकश्चैव निषादेन समाः स्मृताः ।
कर्मणा तेषु यो मोहाद्ब्राह्मणो वर्तते सदा ॥ १२

रङ्गोपजीवी[7] कूटाशः कुहको गुरुगुप्तिकः ।
भिषक् च गरदश्चैव रूपाजीवी च सूचकः ॥ १३

प्रायश्चित्ते[8] तु चरिते व्यवहार्यो भवेत्स हि ।
एते ब्राह्मणचण्डालाः सर्वे ब्रह्महणः किल ॥ १४

तस्माद्दैवे[9] च पित्र्ये च वर्जितास्तत्वदर्शिभिः ।
एतेषामेव सर्वेषां प्रत्यापत्तिं तु मृग्यताम् ॥ १५

[1] परा. प्रा., II, p. 385.
[2] परा. प्रा., II, p. 386.
[3] परा. प्रा., II, p. 386.
[4] परा. प्रा., II, p. 386.
[5] परा. प्रा., II, p. 386.
[6] परा. प्रा., II, p. 387.
[7] परा. प्रा., II, p. 387.
[8] परा. प्रा., II, p. 387.
[9] परा. प्रा., II, p. 387.

भैक्ष्यान्नमुपभुञ्जानो[1] द्विजश्चान्द्रायणं चरेत् ।
एतेषां ब्राह्मणो भुक्त्वा दत्वा कृत्वा प्रतिग्रहम् ॥ १६
प्राजापत्येन शुद्ध्येत्तु तस्मात्पापान्न संशयः ।
योऽगृहीत्वा[2][a] विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥ १७
वृथापाकस्य[3] भुञ्जानः प्रायश्चित्तं चरेद्द्विजः ।
प्राणायामान् त्रिरभ्यस्य घृतं प्राश्य विशुद्ध्यति ॥ १८
गुरुं[4] त्वङ्कृत्य [b]हुङ्कृत्य विप्रं निर्जित्य वादतः ।
बध्वा[5] वा वाससा क्षिप्रं [c]प्रसाद्योपवसेद्दिनम् ॥ १९
ताडयित्वा[6] तृणेनापि प्रसाद्यैव विशुध्यति ।
नित्यनैमित्तिकानां[7] च काम्यानां चैव कर्मणाम् ।
इष्टीनां पशुबन्धानामभावे चरवः स्मृताः ॥ २०
पराकतप्तकृच्छ्राणां[8] स्थाने कृच्छ्रत्रयं चरेत् ।
व्रतहोमादिकं वाऽपि कल्पयेत्पूर्वकल्पवत् ॥ २१
नैमित्तिकं[9] समाख्यातं प्रायश्चित्तं समासतः ।
नैमित्तिकं[10] धर्मजातं गदतो मे निबोधत ।
विहितस्याननुष्ठानान्निन्दितस्य निषेवणात् ॥ २२

[1] परा. प्रा., II, p. 387.
[2] परा. प्रा., II, p. 449; वै. प्रा., p. 82; [a] यो हि हित्वा.
[3] परा. प्रा., II, p. 449.
[4] परा. प्रा., II, p. 454; वि. म., p. 348; [b] गर्वेण, प्रा. म., p. 121.
[5] परा. प्रा., II, p. 454; वि. म., p. 348; [c] ताडयित्वा तृणेनापि.
[6] प्रा. म., p. 121.
[7] वै. प्रा., p. 148.
[8] वै. प्रा., p. 148.
[9] परा. प्रा., III, p. 7.
[10] परा. प्रा., IV, p. 7.

कामाकामकृतं[1 a] त्वेव[b] पातकं द्विविधं स्मृतम् ।
पुरुषापेक्षया[2] चैव निष्कृतिर्द्विविधा स्मृता ॥ २३

एकशय्यासनं[3] पङ्क्तिर्भाण्डं[c] पङ्क्त्यन्नमिश्रणम् ।
याजनाध्यापने [d]योनिस्तथा च सहभोजनम् ॥ २४

नवधा सङ्करः प्रोक्तो न कर्तव्योऽधमैः सह ।
ऋतौ[4] न गच्छेद्यो भार्यां सोऽपि कृच्छ्रार्धमाचरेत् ॥ २५

षाण्मासिके[5] तु [e]संसर्गे [f]याजनाध्यापनादिना ।
एकत्रासनशय्यादि[g] प्रायश्चित्तार्धमाचरेत् ॥ २६

तथा[6] वत्सरसंसर्गे योनियुक्ते विशेषतः ।
पूर्वोक्तेन विधानेन पतितव्रतमाचरेत् ॥ २७

बालसंवर्धनं[7] त्यक्त्वा[h] बालापत्या [i]च गच्छति ।
रजस्वला[8 j] सूतिका च रक्षेद्गर्भं च गर्भिणी ॥ २८

[1] परा. प्रा., IV, p. 13; प्रा. म., p. 6; [b] तेषां महापापं द्विधा, प्रा. वि., p. 24; [a] कृतस्यैवं.

[2] प्रा. म., p. 6.

[3] या. मि., p. 413; गृ. कल्प., p. 84/a; परा. प्रा., IV, p. 28; [c] भाण्डपक्वान्न, या. अप., p. 1086; गृ. रत्ना., p. 587; [c] भाण्डपक्वान्न, प्रा. वि., p. 143; [c] भाण्डपक्वान्न, प्रा. सा., p. 62; स्मृ. उद्धार., p. 357; [c] भाण्डपक्त्यन्नमिश्रतां; [d] यौनः.

[4] परा. प्रा., IV, p. 35.

[5] या. मि., p. 415; या. अप., p. 1087; म. पारि., p. 852; [e] संयोगे, प्रा. वि., pp. 150, 157 and 172; [g] शय्याभिः, प्रा. सा., p. 64; [f] द्विजः; [g] शय्याभिः.

[6] या. अप., p. 1088.

[7] परा. प्रा., IV, p. 58; शु. कौ., p. 83; [i] न, शु. तत्व., p. 236; [i] न, नि. सि., III, p. 50; [h] मुक्त्वा; [i] न, शु. भा., p. 53; नि. सि. वत्पाठः.

[8] परा. प्रा., IV, p. 58; शु. कौ., p. 83; शु. तत्व., p. 236; नि. सि., III, p. 50; [j] व्रतोपवासनियता.

गोघ्राते[1][a] च क्षुते वान्ते मक्षिकाकेशदूषिते ।
मृद्भस्म सलिलं [b]चैव प्रक्षेप्तव्यं विशुद्धये ॥ २९

गौरीं[2] ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥ ३०

त्र्यहं[3] प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं [c]तु नाश्नीयात्प्राजापत्यं चरन् द्विजः ॥ ३१

लशुनं[4] कवकं चैव पलाण्डुं गृञ्जनं तथा ।
चत्वार्यज्ञानतो जग्ध्वा तप्तकृच्छ्रं चरेद्द्विजः ॥ ३२

खादितार्धं[5] पुनः खात्वा मोदकादि फलादि च ।
दम्पत्योर्भुक्तशिष्टं[6] च भुक्त्वा चान्द्रायणं चरेत् ॥ ३३

नवश्राद्धस्य[7] यच्छिष्टं शूद्रशिष्टं तथैव च ।
दम्पत्योर्भुक्तशिष्टं च भुक्त्वा चान्द्रायणं चरेत् ॥ ३४

स्नात्वाऽघमर्षणं[8] कुर्यात्प्राणायामांश्च सङ्करे ।
गायत्रीसूक्तजपनं तिलैर्होमं च शक्तितः ॥ ३५

प्राणायामी[9] जले स्नात्वा खरयानोष्ट्रयानगः ।
सवासा जलमाप्लुत्य प्रणायामेन शुद्ध्यति ॥ ३६

[1] परा. प्रा., VI, p. 137 ; हे. प. श्रा., p. 827 ; [a] गोघ्रातेऽवक्षुते चान्ने ; [b] तत्र.

[2] परा. प्रा., III, p. 156.

[3] पु. चि., p. 49 ; का. मा., p. 85 ; ग. काल., p. 63 ; [c] च, स्मृ. मुक्ता. का., p. 54 ; पूर्वार्धं परम्.

[4] प्रा. म., p. 53.

[5] वै. आ., p. 360.

[6] वै. आ., p. 360.

[7] वै. आ., p. 369.

[8] प्रा. म., p. 100.

[9] प्रा. म., p. 127.

आपद्यपि[1a] च कष्टायां रुग्भये [b]पीडने [c]सदा ।
मातापित्रोर्गुरोश्चैव निदेशे वर्तनात्तथा ॥ ३७

प्रकाशं[2] वा क्रयं कुर्यात् मूलं वाऽपि समर्पयेत् ।
मार्जारश्चैव[3] दर्वी च मारुतश्च सदा शुचिः ।
गोघ्नस्य[4] पावनं सम्यग्गदतो मे निबोधत ।
शस्त्रादिभिश्च[5d] हत्वा गां मानवं व्रतमाचरेत् ॥ ३८

रोधादिना[6] चाङ्गिरसमापस्तम्बोक्तमेव[e] वा ।
पादं[7] चरेद्रोधवधे कृच्छ्रार्धं [f]बन्धपातने ॥ ३९

अतिवाह्य[g] च पादोनं कृच्छ्रमज्ञानताडने ।
गर्भिणीं[8] कपिलां दोग्ध्रीं होमधेनुं च [h]सुव्रताम् ॥ ४०

रोधादिना[i] घातयित्वा द्विगुणं [j]व्रतमाचरेत् ।
अतिवृद्धामतिकृशामतिबालां[9] च रोगिणीम् ॥ ४१

हत्वा पूर्वविधानेन [k]चरेदर्धं व्रतं द्विजः ।

[1] आ. तत्व., p. 358 ; प्रा. तत्व., p. 508 ; [b] पीडिते तथा, शु. वि., p. 32 ; [a] आपदग्नि च, शु. चि., p. 115 ; [c] तथा.

[2] प्रा. तत्व., p. 513.

[3] परा. प्रा., VII, p. 190 ; शु. चि., p. 117.

[4] परा. प्रा., VIII, p. 253.

[5] परा. प्रा., VIII, p. 253 ; या. अप., p. 1105 ; [d] दिना तु, प्रा. वि., p. 119 ; प्रा. तत्व., pp. 521–528 ; [d] दिना तु गां हत्वा.

[6] या. अप., p. 1105 ; परा. प्रा., VIII, p. 254 ; प्रा. वि., p. 199 ; [e] तु, प्रा. तत्व., p. 528.

[7] या. अप., p. 1105 ; परा. प्रा., p. 254 ; [f] घातने ; [g] अतिवाह्येषु, प्रा. वि., p. 208 ; [g] अतिवाह्ये, प्रा. तत्व., p. 528 ; [g] अतिवाह्ये.

[8] परा. प्रा., p. 254 ; प्रा. सा., p. 70 ; [i] खड्गा, प्रा. वि., p. 204 ; [j] गोव्रतं, प्रा. तत्व., p. 524 ; [j] गोव्रतं, वि. म., p. 258 ; [h] सुव्रतीम् प्रा. म., p. 42 ; [i] खड्गा.

[9] या. अप., p. 1098 ; परा. प्रा., VIII, p. 254 ; [k] अब्दव्रतं प्रा. वि., p. 204 ; प्रा. तत्व., p. 525.

ब्राह्मणान्[1] भोजयेच्छक्त्या [a]दद्याद्धेमतिलांश्च गाः ॥ ४२

हेमान्नतिलदानेन[2 b] नरः पापात्प्रमुच्यते ।
यथा[3] जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् ।
तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ॥ ४३

अरुणायाः[4] सरस्वत्याः सङ्गमे लोकविश्रुते ।
शुद्ध्येत्त्रिसवणस्नायी त्रिरात्रोपोषितो द्विजः ॥ ४४

सुरापाने[5] कामकृते ज्वलन्तीं [c]तां विनिक्षिपेत् ।
मुखे[d] तया च निर्दग्धो मृतः शुद्धिमवाप्नुयात् ॥ ४५

गोमूत्रमग्निवर्णं[6] वा पिबेत्सलिलमेव वा ।
कुर्याद्वानशनं तावद्यावत्प्राणैर्वियुज्यते ॥ ४६

गौडीं[7] माध्वीं सुरां पैष्टीं पीत्वा विप्रः समाचरेत् ।
तप्तकृच्छ्रं पराकं च चान्द्रायणमनुक्रमात् ॥ ४७

आहिताग्निरुपस्थानं[8] न [e]कुर्याद्यज्ञकर्मणि ।
ऋतौ न गच्छेद्भार्यां वा सोऽपि कृच्छ्रार्धमाचरेत् ॥ ४८

[1] या. अप., p. 1098 ; परा. प्रा., VIII, p. 254 ; [a] तिलांस्तथा.

[2] या. अप., p. 1098 ; परा. प्रा., VIII, p. 254 ; [b] हेमगो.

[3] परा. प्रा., XII, p. 28.

[4] म. पारि., p. 804 ; परा. प्रा., XII, p. 73 ; प्रा. सा., p. 36.

[5] या. अप., p. 1071 ; म. पारि., p. 816 ; म. कु., p. 438 ; परा. प्रा., XII, p. 81 ; [c] चेव तां मुखे ; [d] क्षिपेत्तया विनिर्दग्धो, ग. रा., p. 1391 ; [c] चेव तां मुखे ; [d] क्षिपेत्तया म, प्रा. वि., p. 84 ; [d] मुखे स हि वि.

[6] म. पारि., p. 816 ; या. अप., p. 1071 ; उत्तरार्धं परम्.

[7] या. मि., p. 400 ; या. अप., p. 1073 ; परा. प्रा., XII, p. 84 ; प्रा. वि., pp. 80 and 103 ; त्रै. प्रा., p. 36 ; प्रा. म., p. 52.

[8] या. मि., p. 463 ; परा. प्रा., XII, p. 141 ; [e] यस्तु पर्वणि, प्रा. वि., p. 393 ; या. मि. त्पाठः.

अस्नात्वा[1] तु यदा भुङ्क्ते पिण्डं दत्वा पितुर्व्रती ।
स्पृष्ट्वा शवमुदक्यां वा चण्डालं सूतिकां तथा ॥ ४९

अकामतस्त्रिरात्रं स्याद्बुद्ध्या सान्तपनं चरेत् ।
विख्यातदोषः[2] कुर्वीत पर्षदोऽनुमतं व्रतम् ।
अनभिख्यातदोषस्तु रहस्यव्रतमाचरेत् ॥ ५०

सकृज्जप्त्वास्य[3] वामीयं शिवसङ्कल्पमेव वा ।
अपहृत्य[4] सुवर्णं वा क्षणाद्भवति निर्मलः ॥ ५१

द्वादशाहेन[5] गोघाती तस्मात्पापात्प्रमुच्यते ।
क्षीराहारो भवेत्तत्र क्षीरदध्यशनोऽपि वा ॥ ५२

गायत्र्याः[6] शतसाहस्रं जपेद्वा यावकाशनः ।
निर्मुण्डं[7] वपनं कृत्वा मौञ्जीकौपीनवस्त्रधृत् ।
गवां मध्ये वसेद्गोष्ठे दिवा चैना अनुव्रजेत् ॥ ५३

चीर्त्वा[8] व्रतं द्विजाग्र्येभ्यो दद्याद्गाः स्वर्णमेव च ।
क्षीराहारो भवेद्वापि क्षीरदध्यशनोऽपि वा ॥ ५४

द्वादशरात्रं[9] पञ्चगव्याहारः ॥

द्वादशरात्रं[10] पञ्चगव्याहारः षड्रात्रं यावकाहारो गोष्ठे वसेद्देशकालशरीरानुरूपं केशश्मश्रुनखादीनां वपनं कृत्वा

[1] परा. प्रा., XII, p. 143.
[2] परा. प्रा., XII, p. 153; वै. प्रा., p. 128.
[3] परा. प्रा., XII, p. 167; प्रा. सा., p. 166.
[4] परा. प्रा., XII, p. 167; प्रा. सा., p. 166.
[5] या. अप., p. 1099; या. बा., II, pp. 147 and 152.
[6] या. अप., p. 1099.
[7] या. अप., p. 1099.
[8] या. अप., p. 1099.
[9] या. मि., p. 418; गौ. मि., p. 178.
[10] या. अप., p. 1099.

ब्राह्मणान् प्रणिपत्यानुज्ञातश्चीर्णान्ते गां दद्याद्ब्राह्मणान् भोजयित्वा शुद्धिरित्याह वृहस्पतिः ॥ ५५

यत्पुंसः[1] परदारेषु समानेषु [a]व्रतं [b]चरेत् ।
व्यभिचारात्तु[c,d] भर्तुः स्त्री तदशेषं [e]समाचरेत् ॥ ५६

अनिच्छन्तीं[2][f] तु [g]यो भर्ता गुप्तां तां [h]धारयेद्गृहे ।
मलिनाङ्गीमधः शय्यां पिण्डमात्रोपजीविनीम् ॥ ५७

कारयेन्निष्कृतिं कृच्छ्रं पराकं वा [i]समागताम् ।
हीनवर्णोपभुक्ता[3] या त्याज्या [j]वाऽप्यन्यथा भवेत् ॥ ५८

पापे[4] गुरूणि गुरूणि स्वल्पान्यल्प च तद्विदः ।
प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः ॥ ५९

स्यात्कामचारभक्षोक्तिर्महतः[5] पातकादृते ।
शूद्रेण[6] तु यदा छिन्नमुपवीतं द्विजन्मनः ।
दण्डं त्रिंशत्पणं दत्वा प्राजापत्येन शुद्ध्यति ॥ ६०

गुर्वर्थं[7] पितृमात्रर्थं आत्मार्थमथवा पुनः ।
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥ ६१

[1] या. अप., p. 1124; प्रा. वि., p. 371; [b] स्मृतं; [c] व्यभिचारे, वि. म., p. 308; प्रा. म., p. 82; [a] विधीयते; [c] व्यभिचारेऽपि; [e] समापयेत्, बा. प्रा., p. 166; [b] स्मृतं; [d] च.

[2] या. अप., p. 1124; प्रा. वि., p. 372; [f] अनिच्छन्ती तु या भुक्ता; [h] कारयेत्; [i] समं गताम्, वि. म., p. 307; [f] अनिच्छन्ती तु भुक्ता या; [h] कारयेत्; [i] असमङ्गताम्, प्रा. म., p. 82; [g] या भुक्ता; [h] कारयेत्; [i] समङ्गताम्.

[3] या. अप., p. 1124; प्रा. तत्व., p. 545; [j] वध्यापि वा, उ. तत्व., p. 150; [j] वध्यापि वा, या. वी., p. 133; [j] वध्या च सा, प्रा. म., p. 82; [j] वध्यापि वा.

[4] प्रा. तत्व., p. 545.

[5] प्रा. तत्व., p. 551.

[6] प्रा. तत्व., p. 555.

[7] प्रा. वि., p. 57.

गोभूहिरण्यहरणे[1] स्त्रीणां क्षेत्रगृहस्य च ।
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥ ६२

ज्ञातिमित्रकलत्रार्थं[2] सुहृत्क्षेत्रार्थमेव च ।
यमुद्दिश्य[3] त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम् ॥ ६३

नाततायिवधे[4] हन्ता किल्बिषं नाप्नुयात्क्वचित् ।
विनाशार्थिनमायान्तं घातयन्नापराध्नुयात् ॥ ६४

आततायिनमुत्कृष्टं[5] वृत्तस्वाध्यायसंयुतम् ।
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत् ॥ ६५

वधार्हः[6] सुवर्णशतं दमं दाप्यस्तु पूरुषः ।
अङ्गच्छेदार्हकस्त्वर्धं सन्दंशार्हस्तदर्धकृत् ॥ ६६

पूर्वोक्तेन[7] विधानेन पतितव्रतमाचरेत् ।
पतितानां[8] गृहं गत्वा भुक्त्वा च प्रतिगृह्य च ।
मासोपवासं कुर्वीत चान्द्रायणमथापि वा ॥ ६७

अविकारि[9] भवेन्मेध्यमभक्ष्यं तद्विकारि यत् ।
सन्ध्योपासनमुद्दिष्टं[10] प्रथमं ब्रह्मचारिणः ।
अग्नीन्धनं [a]भैक्षचर्या [b]चेति कुर्वीत प्रत्यहम् ॥ ६८

[1] प्रा. वि., p. 57.
[2] प्रा. वि., p. 57.
[3] प्रा. वि., p. 57.
[4] प्रा. वि., p. 59.
[5] प्रा. वि., p. 61.
[6] प्रा. वि., p. 109.
[7] प्रा. वि., pp. 150, 157 and 172.
[8] प्रा. वि., pp. 160, 270 and 413 ; प्रा. म., p. 94.
[9] प्रा. वि., p. 291.
[10] या. अप., p. 1142 ; प्रा. वि., p. 396 ; [a] भैक्षचर्यं तच्च, प्रा. म., p. 88 ; [b] चैतत्.

अस्य[1] त्रयस्याकरणाद्व्रती[a] रोगविवर्जितः[b] ।
अवकीर्णिव्रतं कुर्यात्सप्तरात्रं [c]न संशयः ॥ ६९

अकामात्पुक्कसीं[2] गत्वा कामाद्गत्वा रजस्वलाम् ।
शिष्यभार्यां नरो गत्वा पराकेण विशुद्ध्यति ॥ ७०

पीत्वा[3] प्रमादतो मद्यमतिकृच्छ्रं चरेद्द्विजः ।
कारयेत्तस्य[d, e] संस्कारं शक्त्या [f]विप्रांस्तु भोजयेत् ॥ ७१

अकामतश्चापदि[4] वा यदा जायेत सङ्करः ।
तदा[5] कार्यस्तिलैर्होमो गायत्र्या जपनं तथा ॥ ७२

उच्छिष्टोच्छिष्टसंस्पर्शो[6] द्विजातीनां यदा भवेत् ।
कुर्यान्नक्तोपवासं तु क्षत्रविट्स्पर्शनं द्विजः ॥ ७३

क्षत्रो[7] विट्शूद्रसंस्पर्शे प्रायश्चित्तमिदं चरेत् ।
नक्तं तदोपवासं च प्रकुर्वीतानुपूर्वशः ॥ ७४

वैश्यस्तु[8] शूद्रसंस्पर्शे कुर्यान्नक्तं घृताशनम् ।
विप्रो विप्रेण संस्पृष्टः (तु?) एतदेव व्रतं चरेत् ॥ ७५

सुरापलाण्डुलशुनस्पर्शे[9] कामकृते द्विजः ।
त्र्यहं पिबेत्कुशजलं [g]गायत्रीं च जपेत्तथा ॥ ७६

[1] या. अप., p. 1142; प्रा. वि., p. 396; [b] रोम; [c] अनातुरः, प्रा. म., p. 88; [a] त्रयस्य करणात्.

[2] या. अप., p. 1149.

[3] या. अप., p. 1160; परा. प्रा., VII, p. 78; [d] संस्कारं तु पुनः कुर्यात्, वै. प्रा., p. 36; प्रा. म., p. 52; या. वी., p. 958; [e] पुनः; [f] च.

[4] प्रा. म., p. 100.

[5] प्रा. म., p. 100.

[6] प्रा. वि., p. 478.

[7] प्रा. वि., p. 478.

[8] प्रा. वि., p. 478.

[9] या. अप., p. 1164; प्रा. वि., p. 480; [g] सावित्रीं, प्रा. म., p. 102; [g] सावित्रीं.

पलाण्डुलशुनस्पर्शे[1] स्नात्वा नक्तं समाचरेत् ।
कृतोचारस्त्वहोरात्रमुच्छिष्टो[2][a] द्व्यहमेव[b] च ॥ ७७

अलेह्यानामपेयानामभक्ष्याणां[3][c] च भक्षणे ।
रेतोमूत्रपुरीषाणां [d]शुद्धिश्चान्द्रायणं स्मृतम् ॥ ७८

निकृष्टजां[4] तु निर्ज्ञातामुत्कृष्टायां च मातरि ।
अदुष्टां योषितं हत्वा षण्मासेनैतदाचरेत् ॥ ७९

पीत्वा[5] शुक्तकषायाणि[e] भुक्त्वा चान्नं विगर्हितम् ।
भवेदप्रयतो विप्रः कर्मण्यः [f]स्यादधोगते ॥ ८०

ब्राह्मणस्य[6] रुजः [g]कृत्वा [h]रासभादिप्रमापणम् ।
निन्दितेभ्यो धनादानं कृच्छ्रार्धं व्रतमाचरेत् ॥ ८१

काष्ठादिना[7] ताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत् ।
अस्थिभेदेऽतिकृच्छ्रः[8] स्यात्[i] पराकस्त्वङ्गकर्तने ॥ ८२

[1] या. अप., p. 1164 ; प्रा. वि., p. 480.

[2] या. अप., p. 1164 ; प्रा. वि., p. 480 ; [a] कृतोचारं ; [b] आचरेत्.

[3] या. अप., p. 1164 ; परा. प्रा., XI, p. 367 ; [c] अभोज्यानां, गौ. मि., p. 198 ; प्रा. तत्व., p. 556 ; [d] शुध्यै चान्द्रायणं चरेत्, वि. म., p. 318 ; प्रा. म., pp. 53, 54 and 57 ; प्रा. तत्ववत्पाठः, उत्तरार्धं परं, बा. आ., p. 54 ; प्रा. तत्ववत्पाठः.

[4] या. बा., II, p. 159.

[5] या. अप., p. 1165 ; गो. मि., p. 199 ; [e] शुल्क ; [f] अधोगतिः.

[6] या. मि., p. 462 ; या. अप., p. 1184 ; म. पारि., p. 948 ; [h] गर्दभादि प्रा. सा., p. 152 ; [g] कृत्या.

[7] या. मि., p. 463 ; या. अप., p. 1185 ; म. पारि., p. 956 ; परा. प्रा., II, p. 458 ; वि. म., p. 348 ; प्रा. म., p. 39.

[8] या. मि., p. 463 ; या. अप., p. 1185 ; म. पारि., p. 956 ; परा. प्रा., II, p. 458 ; वि. म., p. 348 ; [i] तु, प्रा. म., p. 39 ; [i] तु पराकं वाङ्गकर्तने.

अनिवर्त्य[1] महायज्ञान् यो भुङ्क्ते प्रत्यहं गृही ।
अनातुरः सति धने [a]कृच्छ्रार्धेन स शुद्ध्यति ॥ ८३

विषोद्बन्धनशस्त्रेण[2] यस्त्वात्मानं प्रमापयेत् ।
मृतो मेध्येन लेप्तव्यो [b]नान्यं संस्कारमर्हति ॥ ८४

पाशच्छेत्ता[3] तु यस्तस्य वोढा वाऽग्निप्रदस्तथा ।
सोऽतिकृच्छ्रेण[c] शुद्ध्येत्तु [d]पिण्डदो वा नराधमः ॥ ८५

उच्छिष्टोच्छिष्टसंस्पृष्टः[4] शुना शूद्रेण वा द्विजः ।
कृत्वोपवासं नक्तं च पञ्चगव्येन शुद्ध्यति ॥ ८६

पतितेन[5] श्वपाकेन संस्पृष्टा चेद्रजस्वला ।
प्रथमेऽह्नि[6] त्रिरात्रं स्याद्द्वितीये द्व्यहमाचरेत् ।
अहोरात्रं[7] तृतीये तु चतुर्थे नक्तमेव च ॥ ८७

तान्यहानि[8] व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ।
शूद्रयोच्छिष्टया[9] स्पृष्टा शुना वा द्व्यहमाचरेत् ।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥ ८८

[1] या. मि., p. 463; या. अप., p. 1189; म. पारि., p. 957; [a] स तु कृच्छ्रार्धमाचरेत्, परा. प्रा., XII, p. 141; प्रा. वि., p. 399; या. अपं वत्पाठः, प्रा. म., p. 123.

[2] या. अप., p. 1190; परा. प्रा., IV, p. 24; व्य. माला., p. 345; [b] नाग्नि.

[3] या. अप., p. 1190; परा. प्रा., IV, p. 24; [c] सोऽपि; [d] घातकोऽपि.

[4] या. अप., p. 1194.

[5] या. अप., p. 1201; शु. कौ., p. 48; वै. आ., p. 115.

[6] शु. कौ., p. 48.

[7] या. अप., p. 1201.

[8] वै. आ., p. 115.

[9] या. अप., p. 1203; प्रा. म., p. 104; पूर्वार्धं परम्.

जन्मप्रभृति[1] यत्किञ्चित्पातकं चोपपातकम् ।
तावदावर्तयेत्कृच्छ्रं यावत् षष्टिगुणं भवेत् ॥ ८९

जपहोमरतः[2] कुर्याद्द्वादशाहमभोजनम् ।
पराक एष विख्यातः सर्वपापप्रणाशनः ॥ ९०

[1] या. मि., p. 490.
[2] प्रा. वि., p. 515.

# QUARTER VERSE INDEX OF VYAVAHĀRAKĀNDA

(Pages 1–228)

**Note** :—The first figure after each quarter verse refers to the number of the section, and the next to the number of the verse in it.

## अ

## आ

### ऊ



### ऋ

## घ



## च

## छ



## ज

## प

## फ



## ब

## भ

## म

## श

## ष

## स

# HALF VERSE INDEX OF SAMSKĀRAKĀNDA, ĀCĀRAKĀNDA, ŚRĀDDHAKĀNDA, AŚAUCA-KĀNDA, ĀPADDHARMAKĀNDA AND PRĀYASCCITTAKĀNDA.

*Note.*—The first letter of the Kānda concerned in the reference is prefixed to the number of the śloka to which the half verse pertains.

## अ

## इ



## उ

## औ



## क

## द

### ध



### न

## म

## श

## ह



## क्ष

# ADDITIONAL TEXTS

The following are also attributed to Bṛhaspati in different *nibandhas*. They mostly came to view after the text had been sent to the press. They are accordingly collected below, and in each instance both the source of the passage and the possible location within the text of the *smṛti*, as reconstructed, are indicated.

(1) From Viśvarūpa's *Bālakrīḍā* on *Yājñavalkya-smṛti* (ed. Trivandrum), p. 184.

To come at the end of p. 7 of the text, with the heading अमात्यादिलक्षणम् .

स्वधर्मविदनुरक्तः शुचिरनुद्धतः उद्युक्तो देशकालविन्नीतिनिगमेतिहासकुशलोऽव्यसनी मृदुरर्थशास्त्रकृतयोग्यो हस्त्यश्वपुरुषाचाराहोरात्रयामनिर्गमविनिश्चितमतिश्च स्वपरबलबलावज्ञो बलाधिकृतः सेनापतिस्स्यात् ।

कुलाढ्य उद्युक्तो मृदुरुदात्तः समरचित्तः शूरोऽनुरक्तोऽभेद्यः पत्तिवेशेषज्ञ इंगिताकारकुशलः प्रतिहारस्स्यात् ।

वन-कुल-काल-जाति-साम्यगुण-वयश्शीलशीलायुरादान-गमनकल्पनावान् व्यपगतभयो विजयोर्जितमना हस्त्यध्यक्षस्स्यात् ।

क्षेत्रजातिसाम्यगुणलक्षणवाहनास्त्रज्ञो अत्यर्थसमर्थः शुचिरनुद्धतोऽनुरूपोऽश्वाध्यक्षस्स्यात् ।

सन्धिभेदसन्धानस्थानज्ञोऽनुरक्तः शुचिर्दक्षस्स्मृतिमान् देशकालज्ञो दर्शनीयो नीतिगतिज्ञः प्राज्ञो वाग्मी दूतस्स्यात् ।

उभयतः उत्तमवंशप्रभवः शुद्धो मनुबृहस्पत्युशनइशास्त्रवित् दण्डनीत्यादिकुशलो अशठोऽजिह्मः सम्मानासम्मानाविकृतः विगतभीः कार्याकार्यविनिश्चितमतिः अहार्यः सर्वोपधाशुद्धो गूढमन्त्रो मन्त्री स्यात् ।

अविकार्योऽविकलेन्द्रियः प्रतापवान् सुभगस्सुमुखोऽकृपणोऽप्रमादी दक्षो दाक्षिण्यचरित्ररक्षणार्थमधिकरणसन्दिग्धविवेककृदुपरिकस्स्यात् इति ।

(2) From Viśvarūpa's *Bālakrīḍā*, p. 188.

To come between verses 47 and 48 of chapter I of *Vyavahārakāṇḍa* of the text (p. 8).

ब्रह्मशङ्खस्तुतिपुण्याहशब्दैर्विबुद्ध्योत्थाय सन्ध्यामुपास्य देवपितृब्राह्मणान्मनसा वा नमस्कृत्य धर्मार्थकामभयोपधाशुद्धावश्वकगृहीतायुधायातयामविश्वासोत्पन्नासन्नपरिवृते—,

(3) *Smṛticandrikā* (Vol. I, संस्कारकाण्ड, p. 26, ed. Mysore).

To come after व्यवहार, I, 130 (p. 21) of the text. These verses are not ascribed to Bṛhaspati in *Smṛticandrikā*, the only *nibandha* in which they have been found; but, they were incorporated by Jolly as 19–24 in the concluding chapter (XXVII) of the reconstructed *Bṛhaspatismṛti* he translated (pp. 389-390, S.B.E., Vol. XXXIII). In a footnote, Jolly said: "These texts will be published elsewhere. They have been taken from the Saṃskāra Kāṇḍa of the *Smṛticandrikā*, where they are quoted from an uncertain author. 20 has been printed as a text of

Brihaspati in Professor Bühler's Ujjvala, p. 101. The term 'Pārasīkas' denotes the Persians or perhaps the Parsis of India".

The second śloka below (referred to by Jolly as "20" is to be found in the *second* edition of Bühler's *Āpastamba-Dharmasūtra* (B.S.S.), part I, p. 102. It is not found in most manuscripts of *Ujjvalā* and is rejected in Prof. Chinnaswāmi Śāstrī's edition of the work, p. 290, though the inclusion in Bühler's edition is drawn attention to in a footnote.

विरुद्धास्तु प्रदृश्यन्ते दाक्षिणात्येषु सम्प्रति ।
स्वमातुलसुतोद्वाहो मातृबन्धुत्वदूषितः ॥
अभर्तृकभ्रातृभार्याग्रहणञ्चातिदूषितम् ।
कुले कन्याप्रदानञ्च देशेष्वन्येषु दृश्यते ॥
तथा भ्रातृविवाहोऽपि पारसीकेषु दृश्यते ।
तथैकादशरात्रादौ श्राद्धे भुक्तन्तु यैर्द्विजैः ॥
तेभ्यश्च श्राद्धे पुनर्दानं केचिन्नेच्छन्ति देशिनः ।
दत्वा धान्यं वसन्तेऽन्ये शरदि द्विगुणं पुनः ॥
गृह्णन्ति बन्धुक्षेत्रञ्च प्रविष्टे द्विगुणे धने ।
भुज्यतेऽन्यैरप्रविष्टे मूले तच्च विकथ्यते ॥
इत्थं विरुद्धानाचारान् प्रभूतान् विनिवर्तयेत् ।
देशजात्यादिधर्मस्य प्रामाण्यमविरोधिनः ॥
शास्त्रेणाऽतो नृपस्सर्वं शास्त्रं दृष्ट्वा प्रवर्तयेत् ।

(4) *Saṃskāra-ratnamālā* of Gopīnātha (ed. Ānandāśram Series), p. 412.

To come after व्यवहार, I, 130 (p. 21) of the text.

